एतेनेतरसक्थिबाहू च व्याख्यातौ । एतासां समष्टिश्चतुःशतम् ४०० ।

अथ कोष्ठगताः प्राह—

* गुदे तिस्रः ३ । शेफस्येका १ । सेवन्यामेका १ । वृषणयोर्द्वे २ । स्फिचोः पञ्च ५ पञ्च ५। बस्तिमूर्द्धनि द्वे २ । उदरे पञ्च ५ । नाभ्यामेका १ । पृष्ठोऽर्ध्वसन्निविष्टा उभयतः पञ्च ५ पञ्च ५ दीर्घाः । पार्श्वयोः षट् ६ । वक्षसि दश १० । अक्षकांसौ प्रतिसमन्तात् सप्त ७। अक्षको "अषु आ" इति लोके । अंसौ स्कन्धौ । हृदि द्वे २ । यकृति द्वे २ । प्लीह्नि द्वे । उण्डुके द्वे २ । एतासां समष्टिः ६६ षट्षष्टिः ॥

अथ ग्रीवोर्ध्वगाः प्राह—

*ग्रीवायाश्चतस्रः ४ । हन्वोरष्टौ ८ । एका काकलके कण्ठमणौ घण्टिकायामिति यावत् । गले एका १ । तालुनि द्वे २ । जिह्वायामेका १ । ओष्ठयोर्द्वे २ । नासायां द्वे २ । नेत्रयोर्द्वे २। गण्डयोश्चतस्रः ४ । कर्णयोर्द्वे २ । ललाटे चतस्रः ४ । शिरस्येका १ । आसां समष्टिः ३४ चतुस्त्रिंशत् । एवं मांसपेश्यः पञ्च शतानि ५०० भवन्ति ॥ १४५-१४६ ॥

स्त्रीणामपि भवन्त्येताः किन्तु विंशतिरुत्तराः । गर्भाशये गर्भमार्गे योनौ चस्तनयोरपि ॥१४७॥

* एताः पञ्च शतानि ५०० मांसपेश्यः । स्त्रीणामधिका २० विंशतिर्यथा-गर्भाशये तिस्रः ३ । गर्भच्छिद्रसंस्थितास्ताः शुक्रार्त्तवप्रवेशिन्यस्तिस्रः ३ । योनावभ्यन्तरतो मुखाश्रिते प्रसृते द्वे २ । योनावेव बहिर्निर्गते स्रोतःपार्श्वद्वयस्थिते वर्त्तुले योनिकर्णिकेति यावत् द्वे २ । स्तनयोः पञ्च ५ पञ्च ५ । यौवने तासां वृद्धिर्भवति ॥ १४७ ॥

पुंसां पेश्यः पुरस्ताद्याः प्रोक्ता मेहनमुष्कजाः। स्त्रीणामावृत्य तिष्ठन्ति फलमन्तर्गतं हि ताः१४८

*अस्यायमर्थः। पुंसां मेहनमुष्कयोश्च यास्तिस्रो मांसपेश्यः पूर्वमुक्तास्ताः स्त्रीणां मेहनमुष्काभावात् फलं गर्भाशयमावृत्य तिष्ठन्ति। गयदासस्त्वाह—

स्त्रीणां मांसपेश्यस्त्रिभिर्हीनानि पञ्चशतानि ।

तथा च भोजः—

पञ्च पेशीशतान्येव स्त्रीवर्ज विद्धि भूमिप ! । अतश्च तिस्रो हीयन्ते स्त्रीणां शेफसि मुष्कयोः२७

अथ मांसपेशानां कर्माण्याह—

शिरास्नाय्वस्थिपर्वाणि सन्धयश्च शरीरिणाम्।पेशीभिः संवृतान्येव बलवन्ति भवन्ति हि १४९

अथ मेदसः स्वरूपमाह—

यन्मांसं स्वाग्निना पक्वं तन्मेद इति कथ्यते । तदतीव गुरु स्निग्धं बलकार्यतिबृंहणम् ॥१५०॥

अथ मेदसः स्थानमाह—

मेदो हि सर्वभूतानामुदरेऽस्थिसंस्थितम् । अत एवोदरे वृद्धिः प्रायो मेदस्विनो भवेत् ॥१५१॥

अथास्थ्नः स्वरूपमाह—

मेदो यत् स्वाग्निना पक्वं वायुना चातिशोषितम् । तदस्थिसंज्ञां लभते स सारः सर्वविग्रहे १५२

अभ्यन्तरगतैःसारैर्यथा तिष्ठन्ति भूरुहाः। अस्थिसारैस्तथा देहा ध्रियन्ते देहिनो ध्रुवम्॥१५३॥

तस्माच्चिरविनष्टेषु त्वङ्मांसेषु शरीरिणाम्। अस्थीनि न विनश्यन्ति सारा एतानि सर्वथा॥१५४॥

अथास्थ्नां संख्यामाह—

शल्यतन्त्रेऽस्थिखण्डानां शतत्रयमुदाहृतम्। तान्येवात्र निगद्यन्ते तेषां स्थानानि यानि च ॥१५५
सविंशतिशतं त्वस्थ्नां शाखासु कथितं बुधैः। पार्श्वयोः श्रोणिफलके वक्षःपृष्ठोदरेषु च ॥१५६॥
जानीयात्त्रिषु गेतेषु शतं सप्तदशोत्तरम्। ग्रीवायामूर्ध्वगा विद्यादस्थ्नां षष्टिं त्रिसंयुताम् ॥१५७॥

तानि शाखागतान्याह—

*एकैकस्यां पादाङ्गुल्यां त्रीणि त्रीणि तानि पञ्चदश १५। पादतले ५ पञ्चास्थिशलाकास्तदाधारभूतमेकमस्थि १ एवं षट् ६। कूर्चे द्वे २। गुल्फे द्वे। पार्ष्ण्यामेकम् १। जङ्घायां द्वे २। जानुन्येकम् १। ऊरावेकम् १। एवं ३० त्रिंशदेकस्मिन् सक्थिनि भवन्ति। एतेनेतरसक्थिबाहू च व्याख्यातौ ॥

अथ पार्श्वादिगतान्याह—

* पार्श्वयोः षट्त्रिंशत् ३६ एवमेकस्मिन् द्वितीयेऽप्येवम् ३६। शिश्ने भगे वा एकम् १। गुदे एकम् १। नितम्बयोरेकैकम् २। त्रिके एकम् १। वक्षस्यष्टौ ८। पृष्ठे त्रिंशत् ३०। अक्षकसंज्ञे द्वे २।

अथ ग्रीवोर्ध्वगतान्याह—

* ग्रीवायां नव ९। कण्ठनाड्यां चत्वारि ४। हन्वोरेकैकम् २। दन्ता द्वात्रिंशत् ३२। नासायां त्रीणि ३। तालुन्येकम् १। गण्डयोरेकैकम् २। कर्णयोरेकैकम् २। भ्रुवोरेकैकम् २। शिरसि षट् ६ ॥ १५५-१५७ ॥

एतान्यस्थीनि पञ्चविधानि भवन्ति तानि यथा—

तरुणानि कपालानि रुचकानि भवन्ति हि। वलयानीति तानि स्युर्नलकानि च कानि चित् ॥
अक्षिकोशश्रुतिघ्राणग्रीवासु तरुणानि च। शिरःशङ्खकपोलेषु तालवंसप्रोथजानुषु।
कपालानि भवन्त्येषु दन्तेषु रुचकानि च ॥ १५९ ॥

* जानुनितम्बांसगण्डतालुशङ्खशिरःसु कपालानि। दशनास्तु रुचकाः ॥ १५८-१५९ ॥

पार्ष्ण्योः पार्श्वयुगे पृष्ठे वक्षोजठरपायुषु। पादयोर्वलयानि स्युर्नलकानि ब्रुवेऽधुना ॥ १६० ॥
हस्ते पादाङ्गुलितले कूर्चे च मणिबन्धके। बाहुजङ्घाद्वये चापि जनीयान्नलकानि तु ॥ १६१ ॥

अथास्थ्नां प्रयोजनमाह—

मांसान्यन्त्राणिबद्धानि शिराभिः स्नायुभिस्तथा। अस्थीन्यालम्बनं कृत्वा न दीर्यन्ते पतन्ति च१६२

अथ मज्जस्वरूपमाह—

अस्थि यत् स्वाग्निना पक्वं तस्य सारो भवेद्धनः। यः स्वेदवत् पृथग्भूतः स मज्जेत्यभिधीयते १६३

अथ मज्जस्थानमाह—

स्थूलास्थिषु विशेषेण मज्जा त्वभ्यन्तरे स्थितः ॥ १६४ ॥

अथ शुक्रस्योत्पत्तिमाह—

रसाद्रक्तं ततो मांसं मांसान्मेदः प्रजायते। मेदसोऽस्थि ततो मज्जा मज्ज्ञः शुक्रस्य सम्भवः ॥१६५॥

* सुश्रुतस्येति वचनेन शुक्रसम्भव उक्तः ॥ १६५ ॥

ननु "मासेन रसः शुक्रो भवति स्त्रीणाञ्चार्त्तवं भवती"ति सुश्रुतस्यैव वचनेन रसादेव शुक्रस्योत्पत्तिरुच्यते, तदेतत् कथं सङ्गच्छते ?

इममेव सन्देहं दूरीकर्तुमाहारादेर्गतिं परिणामञ्चाह—

यात्यामाशयमाहारः पूर्वं प्राणानिलेरितः। माधुर्यं फेनभावं च षड्रसोऽपि लभेत सः ॥१६६॥

* आहार इत्यत्र "आह्रियते" इत्याहारः। "अकर्त्तरि च कारके संज्ञायामि"ति सूत्रेण कर्मणि घञ्।

स च षड्विधः। तथा च—

आहार्यं षड्विधं भोज्यं भक्ष्यं चर्व्यं तथैव च ॥ २८ ॥

लेह्यं चूष्यं तथा पेयं तदुदाहरणानि तु। भोज्यमोदनसूपादि भक्ष्यं मोदकमण्डकम् ॥ २९ ॥

चर्व्यं चिपिटधान्यादि रसालादि तु लेह्यते। चूष्यमाम्रफलेक्ष्वादि पीयते पानकं पयः ॥ ३० ॥

* आमाशयमाह चरकः—

"नाभिस्तनान्तरे जन्तोराहुरामाशयं बुधाः" इति ॥ ३१ ॥

* अत्र विशेषमाह—

"नाभेर्वितस्तिमात्रं च कण्ठदेशात् षडङ्गुलम्। उरसस्तद्विजानीयाच्छेषे तु हृदयं मतम् ॥३२॥

उरो रक्ताशयस्तस्मादधःश्लेष्माशयः स्मृतः। आमाशयस्तु तदधस्तदधो दहनाशयः"इति॥३३॥

* प्राणानिलेरित इति। हृदयाधिष्ठानेन प्राणनाम्ना वायुना मुखं गतेनान्तः प्रवेशितः।

तथा च सुश्रुतः—

यो वायुः प्राणनामाऽसौ मुखं गच्छति देहधृक्। सोऽन्नं प्रवेशयत्यन्तः प्राणांश्चाप्यवलम्बते॥३४॥

* क्लेदननामा कफः क्लेदयति क्लेदनात्संहतं भिनत्ति च।

उक्तं च सुश्रुते—

क्लेदनः क्लेदयत्यन्नं संह ˚ च भिनत्त्यतः" इति ॥ ३५ ॥

* स आहारः षड्रसोऽप्यामाशये माधुर्यं लभते। आमाशयस्थस्य मधुरस्य कफस्य योगात्।

उक्तञ्च श्लेष्मस्वरूपम्—

श्लेष्मा श्वेतो गुरुः स्निग्धः पिच्छिलः शीतलस्तथा।

तमोगुणाधिकः स्वादुर्विदग्धो लवणो भवेत्। फेनभावञ्च लभते जठरानलतेजसा। इति॥३६॥

* यत आह वाग्भटः—

सन्धुक्षितः समानेन पचत्यामाशयस्थितम्। औदर्योऽग्निर्यथा बाह्यःस्थालीस्थं तोयतण्डुलम्३७

* अथ स एवाहारः प्राणवायुना प्रेरितस्ततः किञ्चित् स्खलितः पाचकाख्यपित्तोष्मणेषत्पक्वोऽम्लरसो भवति।

* उक्तं च—

अथ पाचकपित्तेन विदग्धं चाम्लतां व्रजेत् ॥ ३८ ॥

* पाचकपित्तेन पाचकपित्तस्योष्मणा ॥ ३८ ॥

* ततः स एवाहारो नाभिमण्डलाधिष्ठानेन समाननाम्ना वायुना प्रेरितो ग्रहणीमभिनीयते १६६

अथ ग्रहणीलक्षणमाह—

षष्ठी पित्तधरा नाम या कला परिकीर्त्तिता । आमपक्वाशयान्तःस्था ग्रहणी साऽभिधीयते॥१६७॥

* पित्तधरा=पाचकाख्यं पित्तं यदग्न्यधिष्ठानं तद्धारयति ॥ १६७ ॥

तत्र ग्रहण्यामामाशयपक्वाशयमध्यवर्त्तिपाचकाख्यपित्ताधिष्ठानेनाग्निनाऽऽहारः पच्यते स कटुश्च भवतीत्याह—

"ग्रहण्यां पच्यते कोष्ठे वह्निना जायते कटुः" इति ॥ १६८ ॥

* अयमर्थः । आहारो ग्रहण्यां कोष्ठवह्निना ग्रहणीस्थितपाचकपित्तेन वह्निना पच्यते पच्यमानः स ग्रहणीस्थितस्य कटुरसस्य योगात् कटुर्भवति ॥ १६८ ॥

एतदाहारपाके विशेषमाह—

शरीरं पाञ्चभौतिकम् । तत्र पञ्चसु भूतेषु पञ्चाग्नयस्तिष्ठन्ति ।

उक्तं च चरकेण—

भौमाप्याग्नेयवायव्याःपञ्चोष्माणःसनाभसाः। पञ्चाहारगुणान् स्वान् स्वान् पार्थिवादीन्पचन्त्यनु

* अत्रोष्मपदेनाग्निरुच्यते ॥ १६९ ॥

* आहारोऽपि पाञ्चभौतिकः । तत्र पाचकपित्तस्थेनाग्निनोत्तेजितेन शरीरवर्त्तिना भूभागाग्निना आहारवर्त्तिभूभागः पच्यते, पक्वो भूभागः स्वकीयान् गुणानभिवर्धयति, एवं जलादिभागा अपि पच्यन्ते ।

तथा च सुश्रुते—

'पञ्चभूतात्मके देहे आहारः पञ्चभौतिकः । विपक्वः पञ्चधा सम्यग् गुणान् स्वानभिवर्द्धयेत् १७०

* गुणशब्देनात्र गुणिनः पृथिव्यादय उच्यन्ते । तेन गुणान् शरीरवर्त्तिनः पार्थिवादीन् भागानभिवर्द्धयेदित्यर्थः ॥ १७० ॥

एवमहोरात्रेण पक्व आहारो मिष्टः पटुश्च मधुरो भवति । अम्लस्त्वम्लो भवति । कटुस्तिक्तः कषायश्च कटुर्भवति ।

उक्तञ्च—

मिष्टः पटुश्च मधुरमम्लोऽम्लं पच्यते रसः । कटुतिक्तकषायाणां विपाको जायते कटुः" इति ॥१७१॥

एवं विपक्वस्याहारस्य सारो निगदितो रसः, शेषो ग्रहणीस्थो मलद्रवः, मलद्रवस्य जलभागः शिराभिर्वस्तिं नीतो मूत्रं भवति ।

उक्तञ्च—

आहारस्य रसः सारः सारहीनो मलद्रवः । शिराभिस्तज्जलं नीतं वस्तिं मूत्रत्वमाप्नुयात्॥१७२॥

शेषं किट्टञ्च यत्तस्य तत्पुरीषं निगद्यते । समानवायुना नीतं तत्तिष्ठति मलाशये ॥ १७३ ॥

तत्र मलाशयस्थेनापानवायुना प्रेरितं मूत्रं मेढ्रभगमार्गेण पुरीषं गुदमार्गेण शरीराद् बहिर्याति ।

उक्तञ्च—

मूत्रञ्चोपस्थमार्गेण पुरीषं गुदमार्गतः । अपानवायुना क्षिप्तं बहिर्याति शरीरतः ॥ १७४ ॥

* उपस्थः=शिश्नो भगञ्च ॥ १७४ ॥

रसस्तु समानवायुना प्रेरितो धमनीमार्गेण शरीरारम्भकस्य रसस्य स्थानं हृदयं गत्वा तेन सह मिश्रितो भवति ।

उक्तञ्च—

रसस्तु हृदयं याति समानमरुतेरितः। स तु व्यानेन विक्षिप्तः सर्वान् धातून् विवर्द्धयेत् ॥१७५॥
केदारेषु यथा कुल्याः पुष्णन्ति विविधौषधीः। तथा कलेवरे धातून् सर्वान् वर्द्धयते रसः॥१७६॥

रसस्तु तत्र तत्र त्रिधा विभज्यते उक्तञ्च चरके—

स्थूलःसूक्ष्मस्तन्मलश्च तत्र तत्र त्रिधा रसः। स्वं स्थूलोंऽशःपरं सूक्ष्मस्तन्मलो याति तन्मलम्

*अयमर्थः—स्थूलोंऽशः स्वं याति यथास्थितस्तिष्ठति, सूक्ष्मस्त्वंशः परं द्वितीयं धातुं याति, तन्मलो = रसादिमलः, तन्मलं = शरीरारम्भकं तत्तद्धातुमलं यातीत्यर्थः ॥ १७७ ॥

यथा लौकिकाग्निनेक्षुरसः पच्यते तथा शरीरारम्भकस्य रसस्याग्निनाऽऽहाररसः पच्यते पच्यमानः स पञ्चाहोरात्रात् सार्द्धदण्डमेकञ्च यावत् प्राक्तनरसधातावेव तिष्ठति। उक्तं च सुश्रुते—

"स खलु रसस्त्रीणि त्रीणि कलासहस्राणि पञ्चदश कला एकैकस्मिन् धातावुपतिष्ठते" अत्र कलानां त्रिंशतिर्मुहूर्त्तः स च दण्डद्वयात्मक (इत्यभिप्रेत्याह) तथा च भोजः—

धातौ रसादौ मज्जान्ते प्रत्येकं क्रमतो रसः। अहोरात्रात्स्वयं पञ्च सार्द्धदण्डं च तिष्ठति॥१७८॥

*प्रत्येकमेकैकस्मिन्नित्यर्थः ॥ १७८ ॥

ततो यथा पच्यमानादिक्षुरसान्मलो निर्गच्छति तथा पच्यमानादाहाररसान्मलो निर्गच्छति स कफः।

उक्तं च सुश्रुते—

कफः पित्तं मलः खेषु प्रस्वेदो नखरोम च। नेत्रविट्‌त्वक्षु च स्नेहो धातूनां क्रमशो मलः॥३९॥

खेषु मलः = कर्णादि स्रोतोमलः ॥ ३९ ॥

स च कफः प्राणानिलप्रेरितो धमनीमार्गेण शरीरारम्भकं क्लेदनाख्यं कफं गत्वा पुष्णाति, ततः सारभूतस्याहाररसस्य द्वौ भागौ भवतः स्थूलः सूक्ष्मश्च। तत्र स्थूलो भागः शरीरारम्भकं रसं पोषयति सकलशरीराधिष्ठानेन व्यानवायुना प्रेरितो धमनीभिः सञ्चरन् पोषणस्नेहनजठरानलोष्मकृतसन्तापनिवारणादिभिर्गुणैः सकलं शरीरं पुष्णाति। ततः सूक्ष्म भागः प्राणवायुना प्रेरितो धमनीमार्गेण शरीरारम्भकस्य रक्तस्य स्थानं यकृत्प्लीहस्वरूपं गत्वा तेन सह मिलितो भवति। ततः प्राक्तनस्य रक्तस्याग्निना पुनः पच्यमानः पञ्चाहोरात्रात् सार्द्धदण्डञ्च यावत् प्राक्तनरक्तधातावेव तिष्ठति। ततो यथा अग्निना पुनः पुनः पच्यमानादिक्षुविकाराद्वारं वारं मलं निर्गच्छति तथा पुनः पुनः पच्यमानादाहाररसात् प्रतिवारं मलं निर्गच्छति। तत्र रक्ताग्निना पच्यमानान्मलं पित्तं निर्गच्छति। तच्च पित्तं समानवायुना प्रेरितं धमनीमार्गेण शरीरारम्भकं पाचकाख्यं पित्तं गत्वा पुष्णाति।

ततः सारभूतस्याहाररसस्य द्वौ भागौ भवतः स्थूलः सूक्ष्मश्च, स्थूलो भागो रञ्जकाख्येन पित्तेन रक्तीकृतः शरीरारम्भकं रक्तं (पोषयन्) व्यानवायुना प्रेरितो धमनीभिः सञ्चरन् सकलशरीरगतानि रुधिराणि पुष्णाति। ततः सूक्ष्मो भागो व्यानवायुना प्रेरितो धमनीभिः

शिराभिश्च शरीरारम्भकाणि मांसानि याति। ततो मांसाग्निना पुनः पच्यमानः पञ्चाहो॰ रात्रात् सार्द्धदण्डञ्च यावन्मांसेष्वेव तिष्ठति। ततः पच्यमानात्तस्मान्मलं निर्गच्छति। तद्व्यानवायुना क्षिप्तं कर्णावागत्य कर्णविट् भवति।

ततः सारभूतस्य रसस्य द्वौ भागौ भवतः। स्थूलः सूक्ष्मश्च। ततः स्थूलो भागो मांसानि पुष्णाति। ततः सूक्ष्मो भागो व्यानवायुना प्रेरितो धमनीभिः शरीरारम्भकस्य मेदसः स्थानमुदरं याति। ततो मेदसोऽग्निना पुनः पच्यमानः पञ्चाहोरात्रात् सार्द्धदण्डं च याव॰ न्मेदस्येव तिष्ठति। ततः पच्यमानात् तस्मान्मलो निर्गच्छति प्रस्वेदरूपः। स च शीतः स्रोतस्येव तिष्ठति शरीरोष्मणा तप्तश्चेत्तदा व्यानवायुना प्रेरितः शिरामार्गैर्लोमकूपेभ्यो बहिर्याति। "जिह्वादन्तकक्षामेढ्रादिमलञ्च मेदोमलमि" त्येके।

ततः सारभूतरसस्य द्वौ भागौ भवतः स्थूलः सूक्ष्मश्च, तत्र स्थूलो भागो मेदः पुष्णाति, उदरे तिष्ठन् व्यानवायुना प्रेरितः स्रोतोमार्गः सूक्ष्मास्थिस्थितान्यपि मेदांसि पुष्णाति सूक्ष्मो भागो व्यानवायुना प्रेरितो धमनीभिः शिराभिश्च शरीरारम्भकाण्यस्थीनि याति ततोऽस्थ्यग्निना पुनः पच्यमानः पञ्चाहोरात्रात्सार्द्धदण्डञ्च यावदस्थिष्वेव तिष्ठति। ततः पच्यमानात् तस्मान्मलो निर्गच्छति। स च व्यानवायुना प्रेरितः शिरोमार्गैर्गत्वाऽङ्गुलिषु नखास्तनौ लोमानि भवन्ति।

ततः सारभूतस्य रसस्य द्वौ भागौ भवतः स्थूलः सूक्ष्मश्च। तत्र स्थूलो भागोऽस्थीनि पुष्णाति ततः सूक्ष्मो भागो व्यानवायुना प्रेरितः स्रोतोमार्गैर्मज्जस्थानानि स्थूलास्थ्यभ्य॰ न्तराणि याति। ततो मज्जाग्निना पुनः पच्यमानः पञ्चाहोरात्रात् सार्द्धदण्डञ्च यावन्म॰ ज्जस्येव तिष्ठति, ततः पच्यमानात्तस्मान्मलं निर्गच्छति। तच्च व्यानवायुना प्रेरितं शिरा॰ मार्गैर्नयनयोरागत्य नेत्रविट् त्वक्षु स्नेहश्च भवति।

ततः सारभूतस्य रसस्य द्वौ भागौ भवतः स्थूलः सूक्ष्मश्च, तत्र स्थूलो भागो मज्जानं पुष्णाति। ततः सूक्ष्मो भागो व्यानवायुना प्रेरितो धमनीभिः शिराभिश्च शुक्रस्य स्थानं स॰ कलं शरीरं गत्वा शरीरारम्भकेण शुक्रेण सह मिश्रितो भवति। ततः शुक्रस्याग्निना पुनः पच्यते पच्यमाने तस्मिन्मलं नास्ति स हि सहस्रधा ध्मातसुवर्णवत्। इत्युत्तरत्रोपदिश्यते-

स्वाग्निभिः पच्यमानेषु मज्जान्तेषु रसादिषु। षट्सु धातुषु जायन्ते मलानि मुनयो जगुः॥१७९॥
यथा सहस्रधा ध्माते न मलं किल काञ्चने। तथा रसे मुहुः पक्वे न मलं शुक्रताङ्गते॥१८०॥

ततः सारभूतस्य रसस्य द्वौ भागौ भवतः स्थूलः सूक्ष्मश्च। तत्र स्थूलो भागः शरीरा॰ रम्भकं शुक्रं याति, सूक्ष्मः स्नेहभाग ओजस्तस्य लक्षणमाह—

ओजः सर्वशरीरस्थं स्निग्धं शीतं स्थिरं सितम्। सोमात्मकं शरीरस्य बलपुष्टिकरं मतम्॥१८१॥

*बलं = चेष्टापाटवम्।

तथा च—

"चेष्टासु पाटवं यत्तु बलं तदभिधीयते।"

यत्तु सुश्रुते—

"रसादीनां शुक्रान्तानां धातूनां यत्परं तेजस्तत्खलु ओजस्तदेव बलमि" ति। तेजस्तेजो-द्रवः। अत्रायमभिप्रायः—यस्माद्रसादोजो भवति स रसः सर्वधातुस्थानगत्वात्तद्धातुवल्लभ्यत इति। सर्वधातूनां स्नेहमोजः, क्षीरे घृतमिव। तदेव बलमिति। तत्कार्यकारणयोरभेदोपचारात्। अभेदकथनञ्च चिकित्सैक्यार्थम् ॥ १८१ ॥

अन्यच्च—

गुरुशीतं मृदु स्निग्धं सान्द्रं स्वादु स्थिरं तथा। प्रसन्नं पिच्छिलं सूक्ष्ममोजो दशगुणं स्मृतम् १८२

चरके तु—

अष्टबिन्दुप्रमाणं तदीषद्रक्तं सपीतकम्। अग्नीषोमात्मकत्वेन द्विरूपं वर्णितन्तु तत् ॥ १८३ ॥

वागभटश्च—

ओजश्च तेजो धातूनां शुक्रान्तानां परं स्मृतम्। हृदयस्थमपि व्यापि देहस्थितिनिबन्धनम् ॥१८४॥

यस्य प्रवृद्धौ देहस्य तुष्टिपुष्टिबलोदयाः। यन्नाशे नियतो नाशो यस्मिंस्तिष्ठति जीवनम् ॥ १८५ ॥

निष्पद्यन्ते यतो भावा विविधा देहसंश्रयाः। उत्साहप्रतिभाधैर्यलावण्यसुकुमारताः ॥ १८६ ॥

ततः स्थूलो भागो रसो मासेन पुंसां शुक्रं स्त्रीणान्त्वार्त्तवं शुक्रञ्च भवति।

उक्तञ्च सुश्रुते—

"एवं मासेन रसः शुक्रो भवति स्त्रीणामार्त्तवञ्चे"ति। चकारात् स्त्रीणामपि शुक्रं भवति

अत एवोक्तं सुश्रुते—

योषितोऽपि स्रवत्येव शुक्रं पुंसः समागमे। तन्न गर्भस्य किञ्चित्तु करोतीति न चिन्त्यते ॥१८७॥

* गर्भस्य शुद्धस्य। विकृतस्य तु गर्भस्य कारणं तदपि भवति।

यत उक्तम्—

"यदा नार्यावुपेयातां वृषस्यन्त्यौ कथञ्चन। मुञ्चन्त्यौ शुक्रमन्योऽन्यमनस्थिस्तत्र जायते" ॥४०॥

एवञ्च—

स्त्रीणां गर्भोपयोगि स्यादार्त्तवं सर्वसम्मतम्। तासामपि बलं वर्णं शुक्रं पुष्टिं करोति हि ॥१८८॥

* एतेन स्त्रीणां सप्तमो धातुरार्त्तवं शुक्रमष्टममिति बोधितम्। आशयाधिक्यवत् ॥१८८॥

एवञ्च—

रसाद्रक्तं ततो मांसं मांसान्मेदः प्रजायते। मेदसोऽस्थि ततो मज्जा मज्ज्ञः शुक्रस्य सम्भवः १८९

* एवं रस एव "केदारकुल्या" न्यायेन सर्वान् धातून् पूरयन् मासेन नवदण्डोत्तरेण शुक्रमार्त्तवं भवतीति सिद्धान्तः। एवं सति रसाद्रक्तमित्यादि सङ्गतमेव। ततो मांसं—ततो रक्तोत्पत्तेरनन्तरं मांसं जायते रसादेवेत्यर्थः। मांसान्मेदः प्रजायत इति। मांसादनन्तरं मेदः प्रजायते रसादेवेत्यर्थः। मेदसोऽस्थि जायते, रसादेवेत्यर्थः। एवं ततो मज्जा जायते, रसादेवेत्यर्थः। ततः शुद्धं शुक्रं रसादेव सम्भवतीत्यर्थः ॥ १८९ ॥

रसः शरीरे त्रिधा सञ्चरतीत्याह—

रसः शरीरे शब्दार्चिर्जलसन्तानवत् त्रिधा। सञ्चरत्यनुरूपोऽयं नित्यमेव हि देहिनाम् ॥ १९० ॥

* अस्यायमभिप्रायः। पुरुषास्तीक्ष्णाग्नयो मध्यमाग्नयो मन्दाग्नयश्च भवन्ति, तत्र तीक्ष्णाग्नीनां स रसः शब्दसन्तानवच्छीघ्रं सञ्चरति, मध्यमाग्नीनामर्चिः सन्तानवन्मध्यवेगेन चरति, मन्दाग्नीनां जलसन्तानवन्मन्दं चरति। तेन मासेन रसाच्छुक्रं भवतीति, यदुक्तं तन्मध्यमाग्नीनधिकृत्योक्तं, दीप्ताग्नीनान्तु रसः किञ्चिन्न्यूनेन मासेन शुक्रं भवति, मन्दाग्नेः किञ्चिदधिकेन मासेनेति सिद्धान्तः ॥ १९० ॥

तर्हि वाजीकरणीनामोषधीनां किं प्रयोजनमित्याह—

वाजीकरिण्य ओषध्यः स्वप्रभावगुणोच्छ्रयात्। विरेचयन्ति ताः शुक्रं विरेकिद्रव्यवान्नृणाम् १९१

* वाजीकरिण्यः = याभिरोषधीभिः पुरुषः शुक्राधिक्यात् स्त्रीषु वाजिवत् सामर्थ्यं प्राप्नोति ता वाजीकरिण्यः, स्वप्रभावगुणोच्छ्रयात् = तत्र काश्चिदोषध्यः स्वप्रभावाधिक्यात्, काश्चित् स्वगुणाधिक्यात्, काश्चित् स्वप्रभावगुणाधिक्यात्। तत्र सङ्कल्पपादलेपविशिष्टकान्तास्पर्शादयः स्वप्रभावाधिक्यात् शुक्रं विरेचयन्ति। घृतक्षीरादयः स्वगुणाधिक्यात = स्निग्धत्वाधिक्याद्, माषादयः स्वप्रभावस्निग्धत्वादिगुणाधिक्यात्। वाजीकरिण्य इति बहुवचनमाद्यर्थानुवर्त्तनम्। बल्यबृंहणजीवनीयगणादयः, तद्वद्बोद्धव्याः। विरेचयन्ति = स्वप्रभावगुणाधिक्याच्छीघ्रमेव रसाद्युत्पादनपूर्वकं शुक्रं जनयित्वा प्रवर्त्तयन्ति ॥ १९१ ॥

यत आह—

दुग्धं माषाश्च भल्लातफलमज्जाऽऽमलानि च। जनकानि निगद्यन्ते रेचनानि च रेतसः॥१९२॥

ननु बालानां कथं शुक्रं न दृश्यत इत्याह—

बालानां शुक्रमस्त्येव किन्तु सौक्ष्म्यान्न दृश्यते।पुष्पाणां मुकुले गन्धो यथा सन्नपि नाप्यते १९३

तेषां तदेव तारुण्ये पुष्टत्वाद्व्यक्तिमेति हि। कुसुमानां प्रफुल्लानां गन्धः प्रादुर्भवेद्यथा ॥१९४॥

रोमराज्यादयः पुंसां नारीणामपि यौवने। जायतेऽत्र च यो भेदो ज्ञेयो व्याख्यानतः स च १९५

* व्याख्यानं यथा-पुंसां रोमराजीश्मश्रुप्रभृतयः। नारीणान्तु रोमराजीस्तनस्तन्यार्त्तवप्रभृतयः ॥ १९५ ॥

ननु अन्नरसो वृद्धस्य धातुवृद्धिं कथं न करोतीत्याह—

वार्द्धके वर्द्धमानेन वायुना रसशोषणात्। न तथा धातुवृद्धिः स्यात्ततस्तत्रानिलं जयेत् ॥१९६॥

अथ शुक्रस्य स्वरूपमाह—

शुक्रं सौम्यं सितं स्निग्धं बलपुष्टिकरं स्मृतम्। गर्भबीजं वपुःसारो जीवस्याश्रय उत्तमः॥१९७॥

जीवस्याश्रय उत्तम इत्यत आह—

जीवो वसति सर्वस्मिन्देहे तत्र विशेषतः। वीर्ये रक्ते मले यस्मिन् क्षीणे याति क्षयं क्षणात् १९८

अथ गर्भसञ्जननशुक्रस्य लक्षणमाह—

स्फटिकाभं द्रवं स्निग्धं मधुरं मधुगन्धि च। शुक्रमिच्छन्ति केचित्तु तलक्षौद्रनिभञ्च तत् १९९

अथ शुक्रस्य स्थानमाह—

यथा पयसि सर्पिस्तु गूढश्चेक्षौ रसो यथा। एवं हि सकले काये शुक्रं तिष्ठति देहिनाम्॥२००॥

* अत्र सर्पिर्दृष्टान्तो बहुशुक्रेऽल्पमथनेन सर्पिःशुक्रयोर्लाभात्। इक्षुरसदृष्टान्तस्तु स्वल्प-

शुक्रे पुंस्यतिपीडनेनेक्षुरसशुक्रयोर्लाभात् ॥ २०० ॥

अथ शुक्रस्य क्षरणमार्गमाह—

द्व्यङ्गुले दक्षिणे पार्श्वे वस्तिद्वारस्य चाप्यधः । मूत्रस्रोतःपथाच्छुक्रं पुरुषस्य प्रवर्त्तते ॥२०१॥

* वृद्धवाग्भटोऽप्याह—

"सप्तमी शुक्रधरा द्व्यङ्गुले दक्षिणे पार्श्वे वस्तिद्वारस्य चाप्यधो मूत्रमार्गमाश्रिता सकलशरीरव्यापिनी शुक्रं प्रवर्त्तयती"ति । सप्तमी कला ॥ २०१ ॥

अथ शुक्रक्षरणकारणमाह—

कृत्स्नदेहस्थितं शुक्रं प्रसन्नमनसस्तथा । स्त्रीषु व्यायच्छतश्चापि हर्षात्तत् सम्प्रवर्त्तते ॥२०२॥

* स्त्रीषु व्यायच्छतः=स्त्रीसुरतरूपं व्यायामं कुर्वतः ॥ २०२ ॥

अन्यच्च—

शुक्रं कामेन कामिन्या दर्शनात् स्पर्शनादपि । शब्दसंश्रवणाद् ध्यानात् संयोगाच्च प्रवर्त्तते ॥२०३॥

अथार्त्तवस्य स्वरूपमाह—

स्त्रीणां रस एव मासेनार्त्तवं भवतीत्युक्त्वा पुनराह सुश्रुत एव—

रसादेव रजः स्त्रीणां मासि मासि त्र्यहं स्रवेत् । तद्वर्षाद् द्वादशादूर्ध्वं याति पञ्चाशतः क्षयम् २०

मासेनोपचितं काले धमनीभ्यस्तदार्त्तवम् । ईषत्कृष्णविवर्णं च वायुर्योनिमुखं नयेत् ॥ २०५ ॥

अथ गर्भग्रहणयोग्यस्यार्त्तवस्य लक्षणमाह—

शशासृक्प्रतिमं यच्च यद्वा लाक्षारसोपमम् । तदार्त्तवं प्रशंसन्ति यद्वासो न विरञ्जयेत् ॥ २०६ ॥

* आर्त्तवस्य वर्णद्वयाभिधानं वातादिप्रकृतिभेदेन वर्णभेदात् । "यद्वासो न विरञ्जयेत्" यद्वासोऽलग्नं प्रक्षालितं तद्वासस्त्यजति न तु विकृतरक्तं कुर्यात् । ऋतुः=स्त्रीणां रजोदर्शनात् षोडशनिशाः, तत्र भवमार्त्तवम्, गृहीतगर्भाणां स्त्रीणामार्त्तववहानां स्रोतसां गर्भेणावरोधादार्त्तवं न स्रवति । किन्तु तदेवाधः प्रतिहतमूर्ध्वमागतमुपचीयमानमपरा भवति । अपरा तु "खीवर" इति लोके । शेषं चोर्ध्वतरमागतं पयोधरौ याति, तस्माद् गर्भिण्यः पीवरपयोधरा भवन्ति ॥ २०६ ॥

अथ धातुव्यतिरिक्तान् गुणानाह—

अतिरिक्ता गुणा रक्ते वह्नेर्मांसे तु पार्थिवाः । मेदस्यपां भुवश्चास्थ्नि पृथिव्यनिलतेजसाम् ॥२०७॥

मज्ज्ञि शुक्रे च सोमस्य मूत्रे च शिखिनो गुणाः । भुवस्तथाऽऽर्त्तवे त्वग्ने रसे क्षीरे तथाऽम्भसः २०८

अथ धातूनां मलानाह—

कफः पित्तं मलाः खेषु प्रस्वेदो नखलोम च । नेत्रविट् त्वक्षु च स्नेहो धातूनां क्रमतो मलाः ॥२०९॥

*"नेत्रजिह्वाकपोलानां जलञ्च रसजं मलम्" इत्येके । खेषु मलः=कर्णादिस्रोतःसु मलः, रसनादन्तकक्षामेढ्रादिमलमपि मेदोमलम्" इत्येके । नेत्रविट् त्वचां स्नेहश्च मज्जमलः, शुक्रस्य मलमेव नास्ति सहस्रधा ध्मातसुवर्णस्येव ॥ २०९ ॥

अथोपधातूनाह—

वनितानां प्रसूतानां धमनीभ्यां स्तनौ गतात् । रसादेव हि जायेत स्तन्यं स्तनयुगाश्रयम् २१०

शुद्धमांसस्य यः स्नेहः सा वसा परिकीर्त्तिता। मेदसस्ताप्यमानस्य स्नेहो वा कथिता वसा२११

शार्ङ्गधरे तु—

स्तन्यं रजो वसा स्वेदो दन्ताः केशास्तथैव च। ओजश्च सप्तधातूनां क्रमात् सप्तोपधातवः॥२१२॥

अथाशयानाह—

उरो रक्ताशयस्तस्मादधः श्लेष्माशयः स्मृतः। आमाशयस्तु तदधस्तल्लिङ्गं चरकोऽवदत्॥२१३॥

* तद्यथा—

"नाभिस्तनान्तरं जन्तोराहुरामाशयं बुधाः" इति॥ २१३ ॥

आमाशयादधः पक्वाशयादूर्ध्वन्तु या कला। ग्रहणीनामिका सैव कथितः पाचकाशयः ॥२१४॥

ऊर्ध्वमग्न्याशयो नाभेर्मध्यभागे व्यवस्थितः। तस्योपरि तिलं ज्ञेयं तदधः पवनाशयः ॥२१५॥

पक्वाशयस्तु तदधः स एव तु मलाशयः। तदधः कथितो वस्तिः स हि मूत्राशयो मतः ॥२१६॥

आशयानुक्रमस्तु वाग्भटेनोक्तः स यथा—

कफाऽऽमपित्तवातानामाशया मलमूत्रयोः। पुरुषेभ्योऽधिकाश्चान्ये।नारीणामाशयास्त्रयः॥२१७॥

धरा गर्भाशयः प्रोक्तः पित्तपक्वाशयान्तरे। स्तनौ प्रवृद्धौ तावेव बुधैः स्तन्याशयौ।मतौ॥२१८॥

अथ कलास्वरूपमाह—

स्नायुभिश्च प्रतिच्छन्नान् सन्ततांश्च जरायुणा। श्लेष्मणा वेष्टितांश्चापि कलाभागांस्तु तान्विदुः॥

धात्वाशयान्तरे धातोर्यः क्लेदस्त्ववधितिष्ठति। देहोष्मणाऽभिपक्वश्च सा कलेत्यभिधीयते॥२२०॥

ताः सप्त—

आद्या मांसधरा प्रोक्ता द्वितीया रक्तधारिणी। मेदोधरा तृतीया तु चतुर्थी श्लेष्मधारिणी॥२२१॥

पञ्चमी तु मलं धत्ते षष्ठी पित्तधरा मता। रेतोधरा सप्तमी स्यादिति सप्त कलाः स्मृताः॥२२२॥

अथ मर्माण्याह—

सन्निपातः शिरास्नायुसन्धिमांसास्थिसम्भवः। मर्माणि तेषु तिष्ठन्ति प्राणाः खलु विशेषतः

तेषां सङ्ख्याः स्थानञ्चाह—

सप्तोत्तरशतं सन्ति देहे मर्माणि देहिनाम्। तान्येकादश मांसे स्युरष्टावस्थिषु सन्ति हि ॥२२४॥

सन्धीनां विंशतिस्तानि स्नायूनां सप्तविंशतिः। चत्वारिंशत्तथैकञ्च शिरामर्माणि तत्र तु॥२२५॥

द्वाविंशतिः सक्थियुगे तावत्येव भुजद्वये। द्वादशोरसि कुक्षौ च पृष्ठदेशे चतुर्दश ॥ २२६ ॥

ग्रीवायामूर्ध्वभागे तु सप्तत्रिंशन्मतानि हि। मर्माणि तानि सन्तीह पञ्चधा च भवन्ति हि॥२२७॥

तान्याह—

सद्यःप्राणहराणि स्युर्मर्माण्येकोनविंशतिः। मर्मदेशास्त्रयस्त्रिंशत् स्युः कालान्तरमारकाः॥२२८॥

चत्वारिंशच्च चत्वारि वैकल्यं जनयन्ति हि। मर्माष्टकं रुजाकारि विशल्यघ्नं त्रिकं मतम्॥२२९॥

तत्र सद्योमारकाणि मर्माण्याह—

शृङ्गाटकान्यधिपतिः शङ्खौ कण्ठशिरा गुदम्। हृदयं वस्तिनाभी च सद्यो घ्नन्ति हतानि चेत्२३०

*शृङ्गाटकानि—घ्राणश्रोत्राक्षिजिह्वासन्तर्पकाणां शिरामुखानां शिरसो मध्ये संयोगस्थानं तानि चत्वारि शिरामर्माणि चतुरङ्गुलप्रमाणानि हतानि घ्नन्ति=सद्योमारकाणि भवन्ति।

* अधिपतिः—मस्तकस्याभ्यन्तरे शिरासन्धिसन्निपात उपरिष्टाद्रोमावर्त्तः, स एकः, सन्धिमर्मैतदर्द्धाङ्गुलप्रमाणं सद्योमारकम् ।

* शंखौ-भ्रुवोरन्तोपरि कर्णललाटयोर्मध्ये तौ द्वौ, अस्थिमर्मणी सार्द्धाङ्गुले सद्योमारके।

* कण्ठशिराः, शिरामातृकाः—ग्रीवाया उभयपार्श्वयोश्चतस्रश्चतस्रः-शिरास्ता अष्टौ शिरामर्माणि चतुरङ्गुलानि सद्योमारकाणि ॥

* गुदमर्म-गुदम्प्रसिद्धमेकं मांसमर्म चतुरङ्गुलं सद्योमारकम् ।

* हृदयं-स्तनयोर्मध्यमधिष्ठायोरस्यामाशयद्वारं सत्वरजस्तमसामधिष्ठानं हृदयं नामैकं शिरामर्मैदं चतुरङ्गुलं सद्योमारकम्।

* वस्तिमर्म—

वस्तिर्नाभिपृष्ठकटीगुदवङ्क्षणशेफसाम्। मध्ये वस्तिस्तनुत्वक् च एकद्वारो ह्यधोमुखः ॥ ४१ ॥

* स्नायुमर्मैदञ्चतुरङ्गुलं सद्योमारकम्।

* नाभिमर्म-नाभिः प्रसिद्धा, शिरामर्मैदञ्चतुरङ्गुलं सद्योमारकम् ॥ २३० ॥

अथ कालान्तरहराणि मर्माण्याह—

वक्षोमर्माणि सीमन्ततलक्षिप्रेन्द्रवस्तयः। बृहत्यौ पार्श्वयोः सन्धी कटीकतरुणे च ये।
नितम्बाविति चैतानि कालान्तरहराणि तु ॥ २३१ ॥

* वक्षोमर्माणि—स्तनमूलस्तनरोहितापलापापस्तम्बाः । तत्र स्तनमूले—स्तनयोरधस्ताद् द्व्यङ्गुलं यावद् स्तनमूले नाम द्वे शिरामर्मणी, तत्र कफपूर्णकोष्ठतया कालान्तरमारके।

* स्तनरोहिते—स्तनयोरुपरि द्व्यङ्गुलं यावद्। द्वे मांसमर्मणी रक्तपूरितकोष्ठतया कालान्तरमारके ।

* अपलापौ—अंसकूटयोरधस्तात् पार्श्वयोरुपरि द्वे शिरामर्मणी। अर्द्धाङ्गुले रक्तेन पूयताङ्गतेन कालान्तरमारके ।

* अपस्तम्बौ-उरस उभयतो नाड्यौ वातवहे शिरामर्मणी। अर्द्धाङ्गुले वातपूर्णकोष्ठतया कासश्वासाभ्यां च कालान्तरमारके ।

* सीमन्ताः—शिरसि पञ्च सन्धयः सन्धिमर्माणि चतुरङ्गुलानि, उन्मादभयचित्तविनाशः कालान्तरमारकाणि ।

* तलानि—मध्याङ्गुलिमनुक्रम्य हस्तस्य मध्यन्तलमेवमपरस्य हस्तस्य, पादयोरप्येवं चत्वारि तलानि मांसमर्माणि द्व्यङ्गुलानि रुजाभिः कालान्तरमारकाणि ।

* क्षिप्राणि—अङ्गुष्ठाङ्गुल्योर्मध्यं क्षिप्रम्। तच्च हस्तयोर्द्वे पादयोर्द्वे चैवं चत्वारि स्नायुमर्माण्यर्द्धाङ्गुलान्याक्षेपकेण कालान्तरमारकाणि ।

* इन्द्रवस्तयः—प्रकोष्ठयोर्मध्ये द्वौ जङ्घयोर्मध्ये द्वौ। एवं चत्वारि मांसमर्माणि द्व्यङ्गुलानि शोणितक्षयेण कालान्तरमारकाणि।

* बृहत्या—स्तनमूलादुभयतः पृष्ठवंशं यावद्। शिरामर्मणी अर्द्धाङ्गुले शोणितातिप्रवृत्तिनिमित्तैरुपद्रवैः कालान्तरमारके ।

* पार्श्वसन्धी—जघनपार्श्वयोः सन्धी, शिरामर्मणी अर्द्धाङ्गुले शोणितपूर्णकोष्ठतया कालान्तरमारके ।

* कटीकतरुणे—त्रिकसन्निधाने उभयतः श्रोणिकाण्डं लक्ष्यीकृत्याऽस्थिस्थिते अस्थिमर्मणी अर्द्धाङ्गुले शोणितक्षयात्पाण्डुविवर्णरूपं कृत्वा कालान्तरमारके ।

* नितम्बौ-प्रसिद्धौ । द्वे अस्थिमर्मणी अर्द्धाङ्गुलावधःकायशोषेण दौर्बल्येन च कालान्तरमारके ॥ २३१ ॥

अथ वैकल्यकराणि मर्माण्याह—

लोहिताक्षाणिजानूर्वीकूर्चा विटपकूर्पराः । कुकुन्दरे कक्षधरे विधुरे सकृकाटिके ॥ २३२ ॥
अंसांसफलकापाङ्गा नीले मन्ये फणे तथा । वैकल्यकरणान्याहुरावर्त्तौ द्वौ तथैव च ॥ २३३ ॥

* लोहिताक्षाणि—ऊर्वा ऊर्ध्वमधो वङ्क्षणसन्धेर्लोहिताक्षम्, ते च द्वे बाह्वोर्द्वे ऊर्वो रेवं तानि चत्वारि शिरामर्माण्यर्द्धाङ्गुलानि वैकल्यकराणि । तत्र शोणितक्षयेण पक्षाघातः सक्थिसादो वा ।

* आणयः—जानुन ऊर्ध्वमुभयोः पार्श्वयोस्त्र्यङ्गुला एकस्मिन् जानुनि द्वे अपरस्मिन्द्वे एवञ्चतस्रः, स्नायुमर्माण्यर्द्धाङ्गुलानि वैकल्यकराणि, तत्र शोथाभिवृद्धिः सक्थिस्तम्भश्च ।

* जानुनी-जङ्घोर्वोः सन्धी सन्धिमर्मणी त्र्यङ्गुले वैकल्यकरे तत्र खञ्जता ।

* ऊर्व्यः-द्वे ऊर्वोर्मध्ये द्वे प्रगण्डयोर्मध्ये एवं चतस्रः, शिरामर्माण्येकाङ्गुल्यो वैकल्यकारिण्यस्तत्र शोणितक्षयात्सक्थिबाह्वोः शोषः ।

* कूर्चाः—पादयोरङ्गुष्ठाङ्गुल्योर्मध्ये तयोरूर्ध्वमधश्च, एवं चत्वारि स्नायुमर्माणि वैकल्यकराणि, तत्र पादयोर्भ्रमणवेपने भवतः ।

* विटपे—द्वे वङ्क्षणवृषणयोर्मध्ये स्नायुमर्मणी एकाङ्गुले वैकल्यकरे च तत्र षाण्ढ्यमल्पशुक्रता वा ।

* कूर्परौ-कफोणिजौ द्वौ सन्धिमर्मणी त्र्यङ्गुलौ वैकल्यकरौ तत्र बाहुमध्ये सङ्कोचः ।

* कुकुन्दरे-नितम्बकूपकौ द्वे सन्धिमर्मणी अर्द्धाङ्गुले वैकल्यकरे, तत्र स्पर्शाज्ञानमधःकायस्य चेष्टोपघातश्च ।

* कक्षधरे—वक्षःकक्षयोर्मध्ये द्वे स्नायुमर्मणी एकाङ्गुले वैकल्यकरे, तत्र पक्षाघातः ।

* विधुरे—कर्णपृष्ठतोऽधःसंश्रिते किञ्चिन्निम्नाकारे द्वे स्नायुमर्मणी अर्द्धाङ्गुले वैकल्यकरे, तत्र बाधिर्यम् ।

* कृकाटिके—शिरोग्रीवयोरुभयतः सन्धि द्वे सन्धिमर्मणी अर्द्धाङ्गुले वैकल्यकरे तत्र शिरःकम्पः ।

* अंसौ-स्कन्धौ स्नायुमर्मणी अर्द्धाङ्गुले वैकल्यकरे तत्र बाहुस्तम्भः ।

* अंसफलके—पृष्ठोपरि पृष्ठोवंशमुभयतस्त्रिकसम्बद्धे, ( ग्रीवायामंसद्वयस्य च संयोगो यत्र तत्त्रिकम् ) अस्थिमर्मणी अर्द्धाङ्गुले च वैकल्यकरे, तत्र बाह्वोः शून्यता शोषश्च ।

* अपाङ्गौ—नेत्रयोरन्तौ शिरामर्मणी अर्द्धाङ्गुलौ वैकल्यकरौ, तत्रान्ध्यं दृष्ट्युपघातो वा ।

* नीले मन्ये च—कण्ठनाडीमुभयतश्चतस्रो धमन्यः, द्वे नीले द्वे मन्ये। तत्र एका मन्या एका नीला एकस्मिन् पार्श्वे, एवमन्या मन्या नीला चापरस्मिन् पार्श्वे द्वे द्वे शिरामर्मणी द्व्यङ्गुले द्व्यङ्गुले वैकल्यकरे, तत्र मूकता विकृतस्वरताऽरसग्राहिता च।

* फणे—घ्राणमार्गमुभयतः स्रोतोमार्गप्रतिबद्धे अभ्यन्तरतो मांसमर्मणी अर्द्धाङ्गुले वैकल्यकरे तत्र गन्धाज्ञानम्।

* आवर्त्तौ—भ्रुवोरुपरि निम्नयोः सन्धिमर्मणी अर्द्धाङ्गुले वैकल्यकरे। तत्रान्ध्यं दृष्ट्युपघातो वा ॥ २३२ ॥ २३३ ॥

अथ रुजाकराणि मर्माण्याह—

गुल्फौ द्वौ मणिबन्धौ द्वौ तथा कूर्चशिरांसि च। रुजकराणि जानीयादष्टावेतानि बुद्धिमान्।

* गुल्फौ—घुंटिके सन्धिमर्मणी द्व्यङ्गुले रुजाकरे तत्र रुजा पादस्तम्भः खञ्जता च।

* मणिबन्धौ द्वौ—हस्तप्रकोष्ठसन्धी सन्धिमर्मणी द्व्यङ्गुलौ रुजाकरौ। तत्र हस्तयोः क्रियाराहित्यम्।

* कूर्चशिरांसि—पादसन्धेरधो गुल्फसन्धेरध उभयत एकस्मिन् पादे द्वे, द्वे च द्वितीये, एवञ्चत्वारि स्नायुमर्माण्येकाङ्गुलानि रुजाकराणि तत्र रुजा शोफश्च ॥ २३४ ॥

अथ विशल्यघ्नानि मर्माण्याह—

उत्क्षेपौ स्थपनी चैव विशल्यघ्नं त्रिकम्मतम् ॥ २३५ ॥

* उत्क्षेपौ—शङ्खयोरुपरि केशान् यावत्। स्नायुमर्मणी अर्द्धाङ्गुले तयोर्विद्धयोः सशल्यो जीवेत्पाकात्पतितशल्यो वा, उद्धृतशल्यस्तु म्रियेत। अत एव विशल्यमुद्धृतशल्यं हन्तीति विशल्यघ्नं मर्म।

* स्थपनी—एका भ्रुवोर्मध्ये शिरामर्मैतदर्द्धाङ्गुलं विशल्यघ्नम् ॥ २३५ ॥

सद्यःप्राणहराण्यन्तरे हन्युः सद्यः प्राणहराणि हि। कालान्तरप्राणहरं पक्षे मासे च मारकम् ॥२३६॥

सद्यःप्राणहरञ्चान्ते विद्धं कालेन मारयेत्। कालान्तरप्राणहरमन्ते विद्धन्तु दुःखदम् ॥ २३७ ॥

* अन्ते=मर्मसमीपे ॥ २३७ ॥

मर्माण्यधिष्ठाय हि ये विकारा मूर्च्छन्ति काये विविधा नराणाम्।
प्रायेण ते कृच्छ्रतमा भवन्ति वैद्येन यत्नैरपि साध्यमानाः ॥ २३८ ॥

## अथ सन्धयः।

ते द्विविधाश्चेष्टावन्तः स्थिराश्च।

शाखासु हन्वोःकट्याञ्च चेष्टावन्तो भवन्ति हि। शेषास्तु सन्धयःसर्वे स्थिरास्तज्ज्ञैरुदाहृताः॥

अथ सन्धिसंख्या आह—

कथिता देहिनां देहे सन्धयो द्वे शते दश। शाखासु तेऽष्टषष्टिश्च कोष्ठे त्वेकोनषष्टिकाः ॥२४०॥

ग्रीवाया ऊर्ध्वदेशे तु त्र्यशीतिस्ते प्रकीर्त्तिताः। प्रथमं परिगण्यन्ते तेषु शाखागता इह ॥२४१॥

* एकैकस्यां पादाङ्गुल्यां त्रयस्त्रयो द्वावङ्गुष्ठे ते चतुर्दश १४। गुल्फजानुवंक्षणेष्वेकैक-

मेवं सप्तदश १७ एकस्मिन् सक्थिनि भवन्ति । एतेनेतरसक्थिबाहू च व्याख्यातौ । एवम-ष्टषष्टिः ६८ शाखासु ।

अथ कोष्ठगतानाह—

* त्रयः ३ कटीकपालेषु, चतुर्विंशतिः २४ पृष्ठवंशे, तावन्तः २४ एव पार्श्वयोः, अष्टौ ८ उरसि, एवमेकोनषष्टिः ५९ कोष्ठे ।

अथ ग्रीवोर्ध्वंगतानाह—

* अष्टौ ८ ग्रीवायां, त्रयः ३ कण्ठे, नाडीषु हृदयक्लोमफुप्फुसनिबद्धास्वष्टादश १८ । द्वात्रिंशद् ३२ दन्तमूलेषु, एकः १ कण्ठमणौ, नासायाञ्च १ एकः, द्वौ २ वर्त्ममण्डलजौ नेत्रा-श्रयौ, द्वौ २ द्वौ २ गण्डकर्णशंखेषु, द्वौ २ हनुसन्धौ, द्वौ २ उपरिष्टाद् भ्रुवोः शङ्खयोश्चोपरि-ष्टात् २ । पञ्च ५ शीर्षकपालेषु एको १ मूर्ध्नीति । कण्ठमणौ घण्टिकेति प्रसिद्धे । एते सन्ध-योऽष्टविधा भवन्तीत्याहोत्तरत्र ॥ २४० ॥ २४१ ॥

ते यथा—

कोरोदूखलसामुद्गाः प्रतरस्तूणसेवनी । काकतुण्डं मण्डलञ्च शङ्खावर्त्तोऽष्टसन्धयः ॥२४२॥

* कोरः = गर्त्तः । नलिकेत्यन्ये । उदूखलः प्रसिद्धः, समुद्गः = सम्पुटः, समुद्ग एव सामुद्गः अत्र स्वार्थे अण् । प्रतरत्यनेनेति प्रतरो वेलकः । तूणस्येव तूणीरस्य सेवनी स्यू-तिस्तूणसेवनी । काकतुण्डं = काकमुखम् । मण्डलं प्रसिद्धम् । शंखस्यावर्त्तः शङ्खावर्त्तः। एते यथानामप्रकृतयः सन्धयो भवन्तीत्यर्थः । एषामङ्गुलिमणिबन्धगुल्फजानुकूर्परेषु कोराः सन्धयः । कक्षावंक्षणदन्तेषूदूखलाः । अंसपीठगुदभगनितम्बेषु समुद्गाः । ग्रीवापृष्ठवंशयोस्तु प्रतराः । शिरःकटीकपालेषु तूणसेवन्यः । हन्वोरुभयतः काकतुण्डाख्याः । कण्ठहृदयक्लोम नाडीषु मण्डलाख्याः । श्रोत्रश्रृङ्गाटकेषु शङ्खावर्त्ताः ॥ २४२ ॥

अस्थ्नां तु सन्धयो ह्येते केवलाः समुदाहृताः।पेशीस्नायुशिराणान्तु सन्धिसंख्या न विद्यते ॥

अथ शिरामाह—

सन्धिबन्धनकारिण्यो दोषधातुवहाः शिराः । नाभ्यां सर्वा निबद्धास्ताः प्रतन्वन्ति समन्ततः॥
शरीरं सकलञ्चैतच्छिराभिः पोष्यते सदा । प्रणालीभिरिवारामाः कुल्याभिः क्षेत्रधान्यवत् ॥

* अत्र प्रणालीभिः कुल्याभिरिति दृष्टान्तद्वयं स्थूलसूक्ष्मशिराभेदात् ॥ २४५ ॥

अथ शिरासंख्यामाह—

प्रसारणाकुञ्चनादिक्रियाभिः सततं तनौ । शिरा एवोपकुर्वन्ति ताः स्युः सप्तशतानि तु ॥२४६॥
यथा द्रुमदले साक्षाद् दृश्यन्ते प्रतताः शिराः । तथैव देहिनो देहे वर्त्तन्ते सकले शिराः ॥२४७
नाभिस्थाः प्राणिनां प्राणाः प्राणान्नाभिरुपाश्रिता।शिराभिरावृता नाभिश्चक्रनाभिरिवारकैः ॥

* ता यथा—तासां खलु मूलशिराश्चत्वारिंशत् ४० । तासां दश १० वातवहाः, दश १० पित्तवहाः, दश १० श्लेष्मवहाः, दश १० रक्तवहाः । तासां खलु वातवहानां वातस्थानग-तानां सपञ्चसप्तति शतं १७५ भवति । तावत्यः १७५ एव पित्तवहाः पित्तस्थानगताः । १७५ श्लेष्मवहास्ताः श्लेष्मस्थानगताः । १७५ रक्तवहा यकृत्प्लीहगताः । एवं शिराः सप्त

शतानि ७०० भवन्ति। तत्र वातवहा एकस्मिन् सक्थिनि पञ्चविंशतिः २५, एतेनेतरसक्थिबाहू च व्याख्यातौ। विशेषतः कोष्ठे चतुस्त्रिंशत् ३४, तासां श्रोण्यां गुदमेढ्रादिसंश्रिता अष्टौ ८। द्वे २ द्वे २ पार्श्वयोः। षट् ६ पृष्ठे। तावत्यः ६ एवोदरे। दश १० वक्षसि। एकचत्वारिंशद् ४१ जत्रुण ऊर्ध्वम्। तासां चतुर्दश १४ ग्रीवायाम्। चतस्रः ४ कर्णयोः। नव ९ जिह्वायाम्। षट् ६ नासिकायाम्। अष्टौ ८ नेत्रयोः।

एवं वातवहानां सपञ्चसप्तति शतं १७५ भवति। एवं विभागः पित्तवहानामपि। विशेषस्तु पित्तवहा नेत्रयोर्दश १०। कर्णयोर्द्वे २। एवं रक्तवहाः। श्लेष्मवहास्तु ग्रीवायाम् षोडश १६। कर्णयोर्द्वे २। एवं शिराणां सप्तशतानि ७०० व्याख्यातानि ॥ २४६-२४८ ॥

अथ स्वशिरासञ्चारिणो वायोः कर्माण्याह—

**क्रियाणामप्रतीघातममोहं बुद्धिकर्मणाम्। करोत्यन्यान् गुणांश्चापि स्वाः शिराः पवनश्चरन् २४९**

* क्रियाणां=प्रसारणाकुञ्चनादीनाम्। अमोहं बुद्धिकर्मणाम्=बुद्धीन्द्रियाणां मनसो बुद्धेश्च स्वे स्वे विषये ज्ञानं करोतीत्यर्थः। अन्यान् गुणान्=रसादिव्यापनद्वारा शरीरपोषणादीन् २४९

अथ स्वशिरासञ्चारिणः कुपितस्य वायोः कर्माण्याह—

**यदा तु कुपितो वायुः स्वाः शिराः प्रतिपद्यते। तदाऽस्य विविधा रोगा जायन्ते वातसम्भवाः २५०**

अथ स्वशिरासञ्चारिणः पित्तस्य कर्माण्याह—

**भ्राजिष्णुतामन्नरुचिमग्निदीप्तिमरोगताम्। करोत्यन्यान् गुणांश्चापि पित्तमात्मशिराश्चरद् २५१**

* अरोगतां=पैत्तिकरोगानुत्पत्तिं करोति। अन्यान् गुणान्=मेधाबुद्धिदर्शनशक्त्यादीन् २५१

अथ स्वशिरासञ्चारिणः कुपितस्य पित्तस्य कर्माण्याह—

**यदा तु कुपितं पित्तं सेवते स्ववहाः शिराः। तदाऽस्य विविधा रोगा जायन्ते पित्तसम्भवाः २५२**

अथ स्वशिरासञ्चारिणः कफस्य कर्माण्याह—

**स्नेहमङ्गेषु सन्धीनां स्थैर्यं बलमरोगताम्। करोत्यन्यान् गुणांश्चापि बलासः स्वाः शिराश्चरन्**

* अरोगतां=श्लैष्मिकरोगानुत्पत्तिम्। अन्यान् गुणान्=बलपुष्ट्यादीन् ॥ २५३ ॥

अथ स्वशिरासञ्चारिणः कुपितस्य कफस्य कर्माण्याह—

**यदा तु कुपितः श्लेष्मा स्वाः शिराः प्रतिपद्यते। तदाऽस्य विविधा रोगा जायन्ते श्लेष्मसम्भवाः**

अथ स्वशिरासञ्चारिणो रक्तस्य कर्माण्याह—

**धातूनां पूरणं वर्णं स्पर्शज्ञानमसंशयम्। स्वशिरासु चरद्रक्तं कुर्याच्चान्यान् गुणानपि ॥ २५५ ॥**

* अन्यान् गुणान्=बलपुष्ट्यादीन् ॥ २५५ ॥

अथ स्वशिरासञ्चारिणः कुपितस्य रक्तस्य कर्माण्याह—

**यदा तु कुपितं रक्तं सेवते स्ववहाः शिराः। तदाऽस्य विविधा रोगा जायन्ते रक्तसम्भवाः २५६**

अथ वातवहादिशिराणां वर्णादीनाह—

**तत्रारुणा वातवहाः पूर्यन्ते वायुना शिराः। पित्तादुष्णाश्च नीलाश्च शीता गौर्यः स्थिराः कफात्।**
**असृग्धरास्तु ता रक्ताः स्युश्च नात्युष्णशीतलाः ॥ २५७ ॥**

अथ स्नायुः ।

तत्र स्नायोः स्वरूपमाह—

मेदसः स्नेहमादाय शिरा स्नायुत्वमाप्नुयात् । शिराणां हि मृदुः पाकः स्नायूनान्तु ततः खरः स्नायवो बन्धनानि स्युर्देहमांसास्थिमेदसाम् । सन्धीनामपि यत्तास्तु शिराभ्यःसुदृढाःस्मृताः नौर्यथा फलकास्तीर्णा बन्धनैर्बहुभिर्युता । नियुक्ताऽगाधसलिले भवेद्भारसहा भृशम् ॥२६०॥

* फलकैः=काष्ठपट्टैः । आस्तीर्णा=व्याप्ता ॥ २६० ॥

एवमेव शरीरेऽस्मिन्यावन्तः सन्धयः स्मृताः । स्नायुभिर्बहुभिर्बद्धास्तेन भारसहा नराः॥२६१॥

अथ स्नायुसंख्यामाह—

शतानि नव जायन्ते शरीरे स्नायवो नृणाम् । तासां विवरणं ब्रूमः शिष्याः ! शृणुत यत्नतः२६२ शाखासु षट्शतानि स्युः कोष्ठे त्रिंशच्छतद्वयम् । ग्रीवाया ऊर्ध्वदेशे तु स्नायूनां सप्ततिःस्मृता

तत्र शाखागताः प्राह—

* एकैकस्यां पादाङ्गुल्यां षट् ६ षट् ६ तास्त्रिंशत् ३० । तावत्यः ३० एव तलकूर्चगुल्फेषु । तावत्यः ३० एव जङ्घायां, दश १० जानूनि । चत्वारिंशद् ४० ऊरौ । दश १० वङ्क्षणे । एवं सार्द्धशतम् १५० एकस्मिन् सक्थिनि भवन्ति । एतेनेतरसक्थिबाहू च व्याख्यातौ ।

अथ कोष्ठगताः प्राह—

* षष्टिः ६० कट्यां, तावत्यः ६० एव पार्श्वयोः, अशीतिः ८० पृष्ठे, त्रिंशद् ३० उरसि ।

अथ ग्रीवोर्ध्वगताः प्राह—

* षट्त्रिंशद् ३६ ग्रीवायाम् । चतुस्त्रिंशद् ३४ मूर्ध्नि । एवं स्नायूनां नवशतानि ९०० भवन्ति ॥ २६२-२६३ ॥

अथ धमनीः प्राह—

धमन्यो नाभितो जाताश्चतुर्विंशतिसंख्यया । दशोर्ध्वगा दशाधोगाः शेषास्तिर्यग्गताःस्मृताः

* तत्रोर्ध्वगाः—शब्दस्पर्शरूपरसगन्धप्रश्वासोच्छ्वासजृम्भितक्षुतहसितकथितरुदितगीतादिविशेषानभिवहन्त्यः शरीरं धारयन्ति ।

प्रश्वासः=अन्तःप्रविशन् वायुः । उच्छ्वासः=ऊर्ध्वं गच्छन् वायुः ।

तास्तु हृदयं गतास्त्रिधा जायन्ते । तास्त्रिंशत् ३० । तासां मध्ये द्वे २ द्वे २ वातपित्तकफशोणितरसान् वहतः । ता दश १० । अष्टभिः ८ शब्दरसरूपगन्धान् गृह्णाति पुरुषः । द्वाभ्यां २ भाषते । द्वाभ्यां २ घोषते । द्वाभ्यां २ स्वपिति । द्वाभ्यां २ जागर्ति । द्वे २ अश्रुवाहिन्यौ । द्वे २ स्तन्यं स्त्रिया वहतः स्तनसंश्रिते । त एव शुक्रं नरस्य स्तनाभ्यामभिवहतः । एतास्त्रिंशत् ३० सविभागा व्याख्याताः । एताभिरूर्ध्वं नाभेरुदरपार्श्वपृष्ठोरःस्कन्धग्रीवाबाहवो धार्यन्ते चाल्यन्ते च ।

अथाधोगताः प्राह—

* अधोगतास्तु वातमूत्रपुरीषशुक्रार्त्तवादीनधो वहन्ति । तास्तु पित्ताशयं गतास्त्रिधा जायन्ते । तास्त्रिंशत् ३० । तासां मध्ये द्वे २ द्वे २ वातपित्तकफशोणितरसान् वहतः । ता दश १० ।

द्वे २ अन्नवहे अन्त्राश्रिते । द्वे २ बस्तिगते मूत्रवहे । द्वे २ शुक्रस्य प्रादुर्भावाय । द्वे २ तद्विसर्गाय, त एव नारीणामार्त्तवं प्रादुर्भावयतो विसृजतश्च । द्वे २ स्थूलान्त्रप्रतिबद्धे पुरीषं विसृजतः। अष्टौ ८ अन्यास्तिर्यग्गताः स्वेदमर्पयन्ति । एताश्चिशत् ३० । एताभिरधो नाभेः पक्वाशयकटीमूत्रपुरीषबस्तिगुदमेढ्रसक्थीनि धार्यन्ते चाल्यन्ते च ।

अथ तिर्यग्गताः प्राह—

* तिर्यग्गतानां तु चतसृणामेकैका शतधा सहस्रधा चोत्तरोत्तरं विभज्यते । तास्तु असंख्येयास्ताभिरिदं शरीरं गवाक्षितम् , निबद्धमाततम् (गवाक्षवद् निबद्धमाततम् ।) गवाक्षः= वातायनम् , यथा गवाक्षे बहूनि छिद्राणि भवन्ति तथाऽस्मिन् देहे जालवद् शिरा व्याप्य तिष्ठन्तीति भावः । निबद्धमाततं गवाक्षितम् । गवाक्षाकाररन्ध्रनिकरयुक्तं कृतमित्यर्थः । तासां मुखानि रोमकूपाणि यैर्मुखैः स्वेदः स्रवति रसश्चाभिसन्तर्पयन्ति अन्तर्बहिश्च । तै रेवाभ्यङ्गपरिषेकावगाहनालेपनवीर्याणि त्वचि पक्वानि अन्तःप्रवेशयन्ति । तै रेव स्पर्शं शुभमशुभं वा गृह्णन्ति ॥ २६४ ॥

यथा स्वभावतः खानि मृणालेषु बिसेषु च । धमनीनां तथा खानि रसो यैरभितश्चरेत् ॥२६५॥

पञ्चाभिभूतास्त्वथ पञ्चकृत्वः पञ्चेन्द्रियं पञ्चसु भावयन्ति ।
पञ्चेन्द्रियं पञ्चसु भावयित्वा पञ्चत्वमायान्ति विनाशकाले ॥ २६६ ॥

* अस्यायमर्थः—धमन्यः कथम्भूताः पञ्चाभिभूताः, पञ्चभ्य आकाशादिमहाभूतेभ्यः, अभि समन्ताद् भूताः । पञ्चेन्द्रियम्=पञ्च इन्द्रियाणि उभयात्मकं मनश्च यस्य तं पञ्चेन्द्रियं जीवात्मानम् । पञ्चसु=इन्द्रियाधिष्ठानेषु श्रोत्रादिषु । पञ्चकृत्वः=पञ्चवारान् , पर्यायेण न तु एकदैव, भावयन्ति=प्रापयन्ति । पञ्चेन्द्रियं=पञ्चानामिन्द्रियाणां समाहारः पञ्चेन्द्रियं श्रोत्रादि तदुपलक्षितं कर्मेन्द्रियं मनश्च । पञ्चसु=पृथिव्यादिषु बुद्धीन्द्रियविषयेषु तदुपलक्षितेषु हस्तादिषु कर्मेन्द्रियविषयेषु मन्तव्ये मनोविषये च । भावयित्वा=प्राप्य, संयोज्येति यावद् । विनाशकाले पञ्चत्वमाकाशादिभावमायान्ति प्राप्नुवन्तीत्यर्थः ॥ २६६ ॥

अथ कण्डराः प्राह—

महत्यः स्नायवः प्रोक्ताः कण्डरास्तास्तु षोडश । प्रसारणाकुञ्चनयोर्दृष्टं तासां प्रयोजनम् ॥२६७॥
चतस्रो हस्तयोस्तासां तावत्यः पादयोः स्मृताः। ग्रीवायामपि तावत्यस्तावत्यः पृष्ठसङ्गताः ॥२६८॥

* तत्र पादहस्तगतानां कण्डराणां नखाः प्ररोहाः । ग्रीवानिबन्धनानामधोभागगतानां प्ररोहो मेढ्रः । पृष्ठनिबन्धनानां प्ररोहा नितम्बमूर्धोरुवक्षोऽक्षिस्तनपिण्डाः ॥ २६८ ॥

अथ रन्ध्राण्याह—

नेत्रश्रवणनासानां द्वे द्वे रन्ध्रे प्रकीर्त्तिते । मुखमेहनपायूनामेकैकं रन्ध्रमुच्यते ॥ २६९ ॥
दशमं मस्तके प्रोक्तं रन्ध्राणीति नृणां विदुः। स्त्रीणामन्यानि च त्रीणि स्तनयोर्गर्भवर्त्मनि ॥२७०॥

अथ स्रोतांस्याह—

मनःप्राणान्नपानीयदोषधातूपधातवः । धातूनां च मला मूत्रं मलमित्यादयस्तनौ ॥ २७१ ॥

सञ्चरन्ति हि यैर्मार्गैस्तानि स्रोतांसि सज्जगुः। बहूनि तानि संख्यातुं शक्यन्ते नैव भाषितुम्॥२७२॥

अथ जालान्याह—

जालानि तु शिरास्नायुमांसास्थ्नामुद्भवन्ति हि। तानि चत्वारि चत्वारि सर्वाण्येव च षोडश॥२७३॥

* निरन्तररन्ध्रनिकरकलितानि सम्मूर्छितानि च जालानीव जालानि, तानि मणिबन्धगुल्फसंश्रितानि परस्परनिबद्धानि परस्परसंश्लिष्टानि परस्परगवाक्षितानि चेति, यैर्गवाक्षितमिदं शरीरम्।

* अयमर्थः—एकस्मिन् मणिबन्धे एकं जालं शिरायाः, अपरं स्नायोः, तृतीयं मांसस्य, चतुर्थमस्थ्नः, एवं चत्वारि ४ जालानि। एतेनेतरमणिबन्धो गुल्फौ च व्याख्यातौ। गवाक्षितं विरचितनिरन्तरजालाकाररन्ध्रनिकरपरिकलितमित्यर्थः॥ २७३॥

अथ कूर्चानाह—

कूर्चाः स्युर्हस्तयोर्द्वौ तु तावन्तौ पादयोरपि। ग्रीवायामेक एकस्तु मेढ्रे सर्वेऽपि षट् स्मृताः।
कूर्चा अपि शिरास्नायुमांसास्थिप्रभवाः स्मृताः॥ २७४॥

अथ रज्जूराह—

पृष्ठवंशस्योभयतः महत्यो मांसरज्जवः। चतस्रो मांसपेशीनां बन्धनं तत्प्रयोजनम्॥ २७५॥

अथ सेवनीराह—

सेवन्यः सप्त तासां तु भवेयुः पञ्च मस्तके। एका शेफसि जिह्वायामेका विध्येन्न ताः क्वचित्॥२७६॥

अथ संघातानाह—

चतुर्दशास्थ्नां सङ्घातास्तेषां त्रयो गुल्फजानुवंक्षणेषु।
एतेनेतरसक्थिबाहू च व्याख्यातौ त्रिकशिरसोरेकैकम्॥ २७७॥

* अत्र तु त्रिकपदेन बाहुग्रीवास्थिसंघात उच्यते॥ ७७॥

अथ सीमन्तानाह—

चतुर्दशैव सीमन्ताः कथिता मुनिपुङ्गवैः। संघाताः सीविता यैस्तु सीमन्तास्ते प्रकीर्त्तिताः॥२७८॥

* यैः—अस्थिभिः॥ २७८॥

अथ त्वच आह—

क्षीरस्य पच्यमानस्य यथा सन्तानिका भवेत्। पच्यमानस्य शुक्रस्य रजसश्च तथा त्वचः॥
पूर्वाऽवभासिनी तासां सिध्मस्थानं च सा स्मृता॥ २७९॥

* अथावभासिनी-भ्राजकेन पित्तेनावभासनात्। परिणाहेन विस्तारितस्य व्रीहेर्विंशतिभागेष्वष्टादशो भागः प्रमाणं यस्याः। व्रीहिरत्र यवः, सा सिध्मपद्मकण्टकयोरधिष्ठानम् २७९

द्वितीया लोहिता ज्ञेया तिलकालकजन्मभूः॥ २८०॥

* द्वितीया यवषोडशभागप्रमाणा तिलकालकन्यच्छव्यङ्गानामधिष्ठानम्॥ २८०॥

तृतीया तु भवेच्छ्वेता स्थानं चर्मदलस्य सा॥ २८१॥

* सा यवद्वादशभागप्रमाणा चर्मदलाजगल्लिकामशकानामधिष्ठानम्॥ २८१॥

सञ्चरन्ति हि यैर्मार्गैस्तानि स्रोतांसि सञ्जगुः। बहूनि तानि संख्याय शक्यन्ते नैव भाषितुम् २७२

अथ जालान्याह—

जालानि तु शिरास्नायुमांसास्थ्नामुद्भवन्ति हि। तानि चत्वारि चत्वारि सर्वाण्येव च षोडश॥२७३॥

* निरन्तररन्ध्रनिकरकलितानि सम्मूर्छितानि च जालानीव जालानि, तानि मणिबन्धगुल्फसंश्रितानि परस्परनिबद्धानि परस्परसंश्लिष्टानि परस्परगवाक्षितानि चेति, यैर्गवाक्षितमिदं शरीरम्।

* अयमर्थः—एकस्मिन् मणिबन्धे एकं जालं शिरायाः, अपरं स्नायोः, तृतीयं मांसस्य, चतुर्थमस्थ्नः, एवं चत्वारि ४ जालानि। एतेनेतरमणिबन्धो गुल्फौ च व्याख्यातौ। गवाक्षितं विरचितनिरन्तरजालाकाररन्ध्रनिकरपरिकलितमित्यर्थः॥ २७३॥

अथ कूर्चानाह—

कूर्चाः स्युर्हस्तयोर्द्वौ तु तावन्तौ पादयोरपि। ग्रीवायामेक एकस्तु मेढ्रे सर्वेऽपि षट् स्मृताः।
कूर्चा अपि शिरास्नायुमांसास्थिप्रभवाः स्मृताः॥ २७४॥

अथ रज्जूराह—

पृष्ठवंशस्योभयश्च महत्यो मांसरज्जवः। चतस्रो मांसपेशीनां बन्धनं तत्प्रयोजनम्॥ २७५॥

अथ सेवनीराह—

सेवन्यः सप्त तासां तु भवेयुः पञ्च मस्तके। एका शेफसि जिह्वायामेका विध्येन्न ताः क्वचित्॥२७६॥

अथ संघातानाह—

चतुर्दशास्थ्नां सङ्घातास्तेषां त्रयो गुल्फजानुवंक्षणेषु।
एतेनेतरसक्थिबाहू च व्याख्यातौ त्रिकशिरसोरेकैकम्॥ २७७॥

* अत्र तु त्रिकपदेन बाहुग्रीवास्थिसंघात उच्यते॥ ७७॥

अथ सीमन्तानाह—

चतुर्दशैव सीमन्ताः कथिता मुनिपुङ्गवैः। संघाताः सीविता यैस्तु सीमन्तास्ते प्रकीर्तिता॥२७८॥

* यैः—अस्थिभिः॥ २७८॥

अथ त्वच आह—

क्षीरस्य पच्यमानस्य यथा सन्तानिका भवेत्। पच्यमानस्य शुक्रस्य रजसश्च तथा त्वचः॥
पूर्वाऽवभासिनी तासां सिध्मस्थानं च सा स्मृता॥ २७९॥

* अथावभासिनी-भ्राजकेन पित्तेनावभासनात्। परिणाहेन विस्तारितस्य व्रीहेर्विंशतिभागेष्वष्टादशो भागः प्रमाणं यस्याः। व्रीहिरत्र यवः, सा सिध्मपद्मकण्टकयोरधिष्ठानम् २७९

द्वितीया लोहिता ज्ञेया तिलकालकजन्मभूः॥ २८०॥

* द्वितीया यवषोडशभागप्रमाणा तिलकालकन्यच्छव्यङ्गानामधिष्ठानम्॥ २८०॥

तृतीया तु भवेच्छ्वेता स्थानं चर्मदलस्य सा॥ २८१॥

* सा यवद्वादशभागप्रमाणा चर्मदलाजगल्लिकामशकानामधिष्ठानम्॥ २८१॥

अथ दौहृदविशेषफलमाह—

राज संदर्शने यस्या दौर्हृदं जायते स्त्रियाः। अर्थवन्तं महाभागं कुमारं सा प्रसूयते ॥ २९९ ॥
दुकूलपट्टकौशेयभूषणादिषु दौर्हृदात्। अलङ्कारैषिणं पुत्रं ललितं सा प्रसूयते ॥ ३०० ॥
आश्रमे संयतात्मानं धर्मशीलं प्रसूयते। देवताप्रतिमायां तु प्रसूते पार्षदोपमम् ॥ ३०१ ॥

*आश्रमे=तपस्विनामाश्रमे दौर्हृदात्, पार्षदोपमं=प्रथमोपमम् ॥ ३०१ ॥

दर्शने व्यालजातीनां हिंसाशीलं प्रसूयते। रक्ताक्षं लोमशं शूरं महिषामिषदौर्हृदात् ॥३०२॥
वाराहमांसे स्वप्नालं शूरं सञ्जनयेत्सुतम्। मृगमांसे तु जङ्घालं विक्रान्तं वनचारिणम्॥३०३॥
अतोऽनुक्तेषु या नारी दौर्हृदं विदधाति हि। शरीराचारशीलैः सा समानं जनयिष्यति॥३०४॥
पञ्चमे मानसं षष्ठे बुद्धिश्चातिप्रबुद्ध्यते। सर्वाण्यङ्गान्युपाङ्गानि भृशं व्यक्तानि सप्तमे ॥३०५॥
ओजोऽष्टमे सञ्चरति मातापुत्रौ मुहुः क्रमात्। तेन तौ म्लानमुदितौ स्यातां जातो न जीवति॥
न जीवत्यष्टमे जातस्तत्रौजो न स्थिरं यतः। तथा नैर्ऋत्यभागत्वाद्दापयेत्तद्बलिं ततः ॥३०६॥

*नैर्ऋत्याय भागश्च बालेषु रुद्रेण दत्तः, यत उक्तं कुमारतन्त्रे—"अष्टमे मासि नैर्ऋत्याय मांसौदनं बलिं दापयेदि"ति ॥ ३०७ ॥

नवमे दशमे मासि नारी बालं प्रसूयते। एकादशे द्वादशे वा ततोऽन्यत्र विकारतः ॥३०८ ॥

गर्भे यदङ्गं प्रथमं भवति, तदाह—

शिरो भवति चाङ्गस्य पूर्वमित्याह शौनकः। शिरस्येवोपजायन्ते प्रधानानीन्द्रियाणि यत् ३०९
हृदयं जायते पूर्वं कृतवीर्योऽवदन्मुनिः। बुद्धेश्च मनसश्चापि यतस्तत्स्थानमीरितम् ॥३१०॥
पाराशर्य इति प्राह पूर्वं नाभिसमुद्भवः। प्राणो यत्र स्थितो देहं वर्द्धयत्युष्मसंयुतः ॥३११॥
पाणिपादं भवेत्पूर्वं मार्कण्डेयमुनेर्मतम्। देहिनः सकलाश्चेष्टाः पाणिपादाश्रया यतः ॥३१२॥
प्रथमं जायते कोष्ठं ततः सर्वाङ्गसम्भवः। एतत्तु कथयामास गौतमो मुनिपुङ्गवः ॥ ३१३ ॥
सर्वाण्यङ्गान्युपाङ्गानि युगपत्सम्भवन्ति हि। सूक्ष्मत्वान्नोपलभ्यन्ते मतं धन्वन्तरेरिदम्॥३१४॥

आम्रस्याणुफले भवन्ति युगपन्मांसास्थिमज्जादयो-
लक्ष्यन्ते न पृथक्पृथक्तनुतया पुष्टास्त एव स्फुटाः।
एवं गर्भसमुद्भवे त्ववयवाः सर्वे भवन्त्येकदा
लक्ष्याः सूक्ष्मतया न ते प्रकटतामायान्ति वृद्धिं गताः ॥ ३१५ ॥

* मज्जादय इत्यादिशब्देन त्वक्केशरमज्जत्वगङ्कुरवृन्तानि गृह्यन्ते ॥ ३१५ ॥

अथ शरीरे पितृज-मातृज-रसजात्मजा भागा उच्यन्ते। तत्र—

केशाःश्मश्रुचलोमानि नखा दन्ताः शिरास्तथा। धमन्यःस्नायवः शुक्रमेतानि पितृजानिहि ३१६
मांसासृङ्मज्जमेदांसि यकृत्प्लीहान्त्रनाभयः। हृदयं च गुदं चापि भवन्त्येतानि मातृतः ॥३१७॥
शरीरोपचयो वर्णो बलं देहस्थितिस्तथा। रसादेतानि जायन्ते भिषजो मुनयो जगुः ॥३१८॥
ज्ञानं विज्ञानमायुश्च सुखदुःखादिकं तथा। इन्द्रियाणि च सर्वाणि भवन्त्येतानि चात्मनः॥३१९॥

*सुखदुःखादिकमित्यादिशब्देन नानायोनिजन्मादिकमुच्यते। आत्मनः=आत्मसन्निकर्षात् न त्वात्मनो जायन्ते, आत्मनो निर्विकारात् प्रकृतभावानुपपत्तेः ॥ ३१९ ॥

गर्भस्य किं किं विशिष्टोपकारकं तदाह—

अग्नीषोमौ महीवायुर्नभःसत्त्वं रजस्तमः। पञ्चेन्द्रियाणि भूतात्मा गर्भं सञ्जीवयन्ति हि ॥३२०॥

* आग्नश्च-पाचकालोचकरञ्जकभ्राजकसाधकानां, तथा पाञ्चभौतिकानां तथा सप्तधात्वनुगतानामग्नीनां शक्तिरूपतयाऽवस्थितो वाचोऽधिदेवत्वं प्राप्तो बोद्धव्यः, स च पाचकादिकर्मणा जीवयति। सोमश्च-पञ्चात्मकश्लेष्मरसशुक्रादीनां तोयात्मकानां भावानां रसनेन्द्रियस्य च शक्तिरूपतयाऽवस्थितो मनश्चाधिदेवत्वं प्राप्तो बोद्धव्यः, स च सौम्यधातोरोजःप्रभृतेः पोषणेन पवनपावकसंशुष्कभागस्यार्द्रताविधानेन जीवयतीति शेषः। मही च—जलेन क्लिन्नस्यापि कठिनविधानेन, वायुः-दोषधातुमलाङ्गोपाङ्गादीनां सञ्चारणेनोच्छ्वासनिःश्वासाभ्याञ्च, नभः—अनिलानलविदारितस्रोतसामूर्ध्वाधस्तिर्यगवकाशदानेन, सत्त्वं रजस्तम इति मनोरूपतया परिणतं जीवात्मनःशरीरान्तरे जीवनग्रहणमोक्षणे हेतुरिति। तदपि जीवयति। पञ्चेन्द्रियाणि-श्रोत्रत्वङ्नेत्रजिह्वाघ्राणानि शब्दादिग्रहणकर्मणा, भूतात्मा-कर्मपुरुषः स चाशेषस्यैव राशेश्चैतन्यहेतुर्जीवयतीति ॥ ३२० ॥

अपरं गर्भस्य जीवनोपायमाह—

गर्भस्य नाभिनाड्या तु नाडी रसवहा स्त्रियाः। संलग्ना तेन गर्भस्य वृद्धिर्भवति नित्यशः ॥३२१॥

निःश्वासोच्छ्वाससंक्षोभस्वप्नांस्तान्सोऽधिगच्छति।

मातुर्निःश्वसितोच्छ्वाससंक्षोभस्वप्नसम्भवान् ॥ ३२२ ॥

* संक्षोभः = सञ्चलनम्, माता निःश्वासादिका याश्चेष्टाः करोति तास्ता गर्भोऽपि करोतीत्यर्थः ॥ ३२२ ॥

अथ गर्भवृद्धेर्हेतूपायमाह—

गर्भस्य नाभिमध्ये तु ज्योतिःस्थानं ध्रुवं स्मृतम्। तदाधमति वातश्च देहस्तेनास्य वर्धते ॥३२३॥

ऊष्मणा सहितश्चापि दारयत्यस्य मारुतः। ऊर्ध्वं तिर्यगधस्ताच्च स्रोतांसि तु यथा तथा ॥३२४॥

* यथा दारयति विस्तारयति तथा देहो वर्धत इति पूर्वेणान्वयः ॥ ३२३ ॥ ३२४ ॥

अथ दृष्टिरोमकूपानामवृद्धिमाह—

दृष्टिश्च रोमकूपाश्च न वर्धन्ते कदाचन। ध्रुवाण्येतानि मर्त्यानामिति धन्वन्तरेर्मतम् ॥३२५॥

अथ नखकेशानां सदा वृद्धिमाह—

शरीरे क्षीयमाणेऽपि वर्धते द्वाविमौ सदा। स्वभावं प्रकृतिं कृत्वा नखकेशाविति स्थितिः ३२६

* प्रकृतिं कृत्वा = कारणं कृत्वा। स्थितिः = मर्यादा ॥ ३२६ ॥

अथ चेतना चेतनान्यङ्गान्याह—

चेतनानामधिष्ठानं मनो देहश्च सेन्द्रियः। केशलोमनखाग्रान्नमलद्रवगुणैर्विना ॥ ३२७ ॥

अथ गर्भस्य वातविण्मूत्रोत्सर्गाकरणे कारणमाह—

वातात्पत्वादयोगाच्च वायोः पक्वाशयस्य च। वातमूत्रपुरीषाणि गर्भस्थो न विमुञ्चति ३२८

* प्रयोगाद्=ईषद्योगाद् ॥ ३२८ ॥

अथ गर्भारोदने कारणमाह—

जरायुणा मुखे छन्ने कण्ठे च कफवेष्टिते । वायोर्मार्गनिरोधाच्च न गर्भस्थः प्ररोदिति ॥३२९॥

## अथ गर्भवतीकृत्याकृत्यानि ।

तत्रादौ गर्भिणीकृत्यान्याह—

गर्भिणी प्रथमादह्नः प्रहृष्टा भूषिता शुचिः । भवेच्छुक्लाम्बरधरा गुरुविप्रार्चने रता ॥ ३३० ॥

भोज्यं तु मधुरप्रायं स्निग्धं हृद्यं द्रवं लघु । संस्कृतं दीपनीयं तु नित्यमेवोपयोजयेत् ॥ ३३१ ॥

अथ गर्भिण्या अकृत्यान्याह—

गर्भिणी न तु कुर्वीत व्यायाममपतर्पणम् । व्यवायं च न सेवेत न कुर्यादतितर्पणम् ॥ ३३२ ॥

रात्रौ जागरणं शोकं यानस्यारोहणं तथा । रक्तमोक्षं वेगरोधं न कुर्यादुत्कटासनम् ॥३३३॥

दोषाभिघातैर्गर्भिण्या यो यो भागः प्रपीड्यते । स स भागः शिशोस्तस्य गर्भस्थस्य प्रपीड्यते३३

मलिनां विकृताकारां हीनाङ्गीं न स्पृशेत्स्त्रियम् । न जिघ्रेदपि दुर्गन्धं न पश्येन्नयनाप्रियम् ॥३३५॥

वचांसि नापि शृणुयात्कर्णयोरप्रियाणि च । नान्नं पर्युषितं शुष्कं भुञ्जीत क्वथितं न च ॥३३६॥

चैत्यश्मशानवृक्षांश्च भावांश्चाप्ययशस्करान् । बहिर्निष्क्रमणं क्रोधं शून्यागारं च वर्जयेत् ॥३३७॥

नोच्चैर्ब्रूयान्न तत्कुर्याद्येन गर्भो विनश्यति । तैलाभ्यङ्गोद्वर्त्तं च नात्यर्थं कारयेदपि ॥३३८॥

नामृद्वास्तरणं कुर्यान्नात्युच्चं शयनासनम् । एतांस्तु नियमान्सर्वान्यत्नात्कुर्वीत गर्भिणी ३३९

अथ प्रसवमासानाह—

नवमे दशमे मासि नारी गर्भं प्रसूयते । एकादशे द्वादशे वा ततोऽन्यत्र विकारतः ॥ ३४० ॥

अथ सूतिकागृहाकृतिमाह—

अष्टहस्तायतं चारु चातुर्हस्तविशालकम् । प्राचीद्वारमुदग्द्वारं विदध्यात्सूतिकागृहम् ॥३४१॥

अथासन्नप्रसवाया लक्षणमाह—

जाते हि शिथिले कुक्षौ मुक्ते हृदयबन्धने । सशूले जघने नारी विज्ञेया प्रसवोत्सुका ॥ ३४२ ॥

आसन्नप्रसवायास्तु कटीपृष्ठं तु सव्यथम् । भवेन्मुहुः प्रवृत्तिश्च मूत्रस्य च मलस्य च ॥३४३॥

अथासन्नप्रसवाया उपचारमाह—

तैलेनाभ्यक्तगात्रान्तां संस्नातामुष्णवारिणा । यवागूं पाययेत्कोष्णां मात्रया घृतसंयुताम्३४४

कृतोपधाने मृदुनि विस्तीर्णे शयने शनैः । अभुग्नसक्थी चोत्ताना नारी तिष्ठेद्व्यथाऽन्विता३४५

* अभुग्नसक्थी=असङ्कोचितोरुः ॥ ३४५ ॥

अथ जनयित्र्य आह—

चतस्रोऽशङ्कनीयाश्च स्रावणे कुशला हिताः । वृद्धाः परिचरेयुस्ताः सम्यक्छिन्ननखाः स्त्रियः३४६

अथ जनयित्रीकृत्यमाह—

अपत्यमार्गं स्नेहेन समभ्यज्य समन्ततः । एका तु तासु सुभगे ! प्रवाहस्वेति तां वदेत् ॥३४७॥

अन्यथा मा प्रवाहिष्ठाः प्रवाहेथा व्यथा यदि । प्रवाहेथाः शनैः पूर्वं प्रगाढं च ततः परम् ३४८

ततो गाढतमं गर्भे योनिद्वारमुपागते । अपरासहितो गर्भो यावत्पतति भूतले ॥ ३४९ ॥

अथ व्यथारहितायाः प्रवाहणाद्वैगुण्यमाह—

मूकं वा बधिरं कुब्जं श्वासकासक्षयान्वितम्। सूते खल्वतनुं बालमकाले तु प्रवाहणात् ॥३१०॥

इति श्रीमिश्रलटकनतनय श्रीमन्मिश्रभावविरचिते भावप्रकाशे गर्भप्रकरणं तृतीयम् ॥ ३ ॥

## अथ बालप्रकरणं चतुर्थम् ॥ ४ ॥

अथ बालस्य जन्मोत्तरविधिमाह—

अथ बाले समुत्पन्ने विदधीत विधिं तथा। यथैव कुलवृद्धस्त्रीव्यवहारपरम्परा ॥ १ ॥

अथ प्रसूताया नियमानाह—

प्रसूता हितमाहारं विहारं च समाचरेत्। व्यायामं मैथुनं क्रोधं शीतसेवां विवर्जयेत् ॥ २ ॥

मिथ्याचारात्सूतिकाया यो व्याधिरुपजायते। सकृच्छ्रसाध्योऽसाध्यो वा भवेत्तत्पथ्यमाचरेत्

अथ प्रसूताया नियमसमयावधिमाह—

सर्वतः परिशुद्धा स्यात्स्निग्धपथ्याऽल्पभोजना। स्वेदाभ्यङ्गपरानित्यं भवेन्मासमतन्द्रिता ॥४॥

* सर्वतः परिशुद्धा तु अनवरुद्धरुधिरा, अतन्द्रिता = सावधाना ॥ ४ ॥

प्रसूता सार्धमासान्ते दृष्टे वा पुनरार्तवे। सूतिकानामहीना स्यादिति धन्वन्तरेर्मतम् ॥ ५ ॥

व्युपद्रवां विशुद्धां च विज्ञाय वरवर्णिनीम्। ऊर्ध्वं चतुर्भ्यो मासेभ्यो नियमं परिहारयेत् ॥ ६ ॥

अथ स्तन्यस्वरूपमाह—

रसप्रसादो मधुरः पक्काहारनिमित्तजः। कृत्स्नाद्देहात्स्तनौ प्राप्तः स्तन्यमित्यभिधीयते ॥ ७ ॥

* रसप्रसादः = रसस्य सारः ॥ ७ ॥

अथ स्तन्यस्य प्रवृत्त्यवधिमाह—

स्तन्यं त्रिरात्रात्स्त्रीणां वा चतुरात्रानन्तरम्। प्रवर्त्तयन्ति विवृता धमन्यो हृदये स्थिताः ॥ ८ ॥

अथ स्तन्यप्रवृत्तिहेतुमाह—

पयः पुत्रस्य संस्पर्शाद्दर्शनात्स्मरणादपि। ग्रहणादप्युरोजस्य शुक्रवत्सम्प्रवर्तते
स्नेहो निरन्तरस्तस्य प्रवाहे हेतुरुच्यते ॥ ९ ॥

अथ स्तन्यस्याल्पतायां हेतुमाह—

अवात्सल्याद्भयाच्छोकात्क्रोधादत्यपतर्पणात्। स्त्रीणां स्तन्यं भवेत्स्वल्पं गर्भान्तरविधारणात् ॥

अथ स्तन्यस्य वृद्धिहेतुमाह—

शालिषष्टिकगोधूमान्मांसक्षुद्रझषानपि। कालशाकमलाबूं च नारिकेलं कसेरुकम् ॥ ११ ॥

शृङ्गाटकं वरीं चापि विदारी कन्दमेव च। लशुनं दुग्धवृद्ध्यै स्त्री सेवेत सुमना भवेत् ॥ १२ ॥

कमलस्य तण्डुलानां कल्कं वा क्षीरपेषितं पिबति। सा भवति भृशं तरुणी क्षीरभरेणैव तुङ्गकुचयुगला।

अथ कलमो धान्यविशेषस्तस्य लक्षणमाह—

कमलः कलिविख्यातो जायते च बृहद्ध्रदे। काश्मीरदेश एवोक्ता महातण्डुलसंज्ञकः ॥१४॥

विदारिकन्दस्य रसं पिबेत्स्तन्यस्य वृद्धये। तच्चूर्णं तस्य वृद्ध्यर्थं पिबेद्वा क्षीरसंयुतम् ॥१५॥

अथ स्तन्यस्य दुष्टताहेतुमाह—

धात्र्या गुरुभिराहारैर्विहारैर्दोषलैस्तथा । देहे दोषाः प्रकुप्यन्ति ततः स्तन्यं प्रदुष्यति ॥१६॥
मिथ्याऽऽहारविहारिण्या दुष्टा वातादयः स्त्रियाः । दूषयन्ति पयस्तेन शारीरं व्याधयः शिशोः ॥१७॥

अथ दुष्टस्तन्यस्य लक्षणमाह—

कषायं सलिलप्लावि स्तन्यं मारुतदूषितम् । पित्तादम्लं च कटुकं राज्योऽम्भसि तु पीतिकाः ॥
कफदुष्टं तु यत्तोये निमज्जति च पिच्छिलम् । द्वन्द्वजन्तु द्विलिङ्गं स्यात्त्रिलिङ्गं सान्निपातिकम् ॥१९॥

अथ दुष्टस्तन्यशोधनविधिमाह—

धात्री क्षीरविशुद्ध्यर्थं मुद्गयूषरसाशिनी । भार्ङ्गीदारुवचाः पिष्ट्वा पिबेत्सातिविषास्तथा ॥२०॥
पाठामूर्वाब्दभूनिम्बैर्दारुशुण्ठीकलिङ्गकैः । सारिवामत्स्यपित्ताख्यैः क्वाथः स्तन्यविशोधनः ॥२१॥
* मत्स्यपित्ता—कटुकी ॥ २१ ॥

पटोलनिम्बासनदारुपाठामूर्वा गुडूची कटुरोहिणी च ।
सनागरं च क्वथितं च तोये धात्रा पिबेत् स्तन्यविशुद्धिहेतोः ॥ २२ ॥

अथ शुद्धस्तन्यस्य लक्षणमाह—

नीरे स्तन्यं यदैकि स्यादविवर्णमतन्तुमत् । पाण्डुरं तनु शीतं च तद् दुग्धं शुद्धमादिशेत् ॥२३॥

अथ धात्रीलक्षणमाह—

पीताय यदि बालस्य विरुध्यादुपमातरम् । सुविचार्य गुणान्दोषान्कुर्याद्धात्रीं तदेदृशीम् ॥२४॥
सवर्णां मध्यवयसां सच्छीलां मुदितां सदा । शुद्धदुग्धां बहुक्षीरां सवत्सामतिवत्सलाम् ॥२५॥
स्वाधीनामल्पसन्तुष्टां कुलीनां सज्जनात्मजाम् । कैतवेन परित्यक्तां निजपुत्रहितां शिशौ ॥२६॥

अथ निषिद्धां धात्रीमाह—

शोकाकुला क्षुधार्ता च श्रान्ता व्याधिमती सदा । अत्युच्चा नितरां नीचा स्थूलाऽतीव भृशं कृशा ।
गर्भिणी ज्वरिणी चापि लम्बोन्नतपयोधरा । अजीर्णभोजिनी चापि तथा पथ्यविवर्जिता ॥२८॥
आसक्ता क्षुद्रकार्येषु दुःखार्त्ता चञ्चलाऽपि च । एतासां स्तन्यपानेन शिशुर्भवति सामयः ॥२९॥

अथ बालस्य स्तन्यपानविधिमाह—

तत्र माता प्रशस्ताङ्गी चारुवस्त्रा पुरोमुखी । उपविश्यासने सम्यग्दक्षिणं स्तनमम्बुना ॥३०॥
प्रक्षाल्येषत्परिस्राव्य मन्त्राभ्यामभिमन्त्रितम् । उदङ्मुखं शिशुं क्रोडे शनैः सन्धाय पाययेत् ॥
* माता—इत्युपलक्षणम् । धात्री चेषत्परिस्राव्य ॥ ३१ ॥

अन्यथा वैगुण्यमाह सुश्रुतः—

अस्रावितं स्तनं बालः पिबन्स्तन्येन भूयसा । पूर्णस्रोता वमीकासश्वासैर्भवति पीडितः ॥३२॥

अथ स्तन्याभिमन्त्रणमाह—

क्षीरनीरनिधिस्तेऽस्तु स्तनयोः क्षीरपूरकः । सदैव सुभगो बालो भवत्वेष महाबलः ॥ ३३ ॥
पयोऽमृतसमं पीत्वा कुमारस्ते शुभानने ! । दीर्घमायुरवाप्नोतु देवाः प्राश्यामृतं यथा ॥३४॥
* इमौ मन्त्रौ पित्रा अन्येन वा ब्राह्मणेन पठनीयौ । यावद् मन्त्रपाठस्तावद् मात्रा धात्र्या वा दक्षिणहस्तेन दक्षिणस्तनस्पर्शः कार्यः ॥ ३३ ॥ ३४ ॥

अथ जनन्याः क्षीराभावे धात्र्याश्चालाभे प्रकारमाह—

क्षीरसात्म्यतया क्षीरमाजं गव्यमथापि वा । दद्यादास्तन्यपर्याप्तेर्बालेभ्यो वीक्ष्य मात्रया ॥३५॥

* क्षीरसात्म्यतयेति । यतः शिशोः क्षीरमेव सात्म्यं भवति न त्वन्नादिकम् । आस्तन्यपर्याप्तेरिति । यावत् स्त्रियाः स्तन्यस्य समन्ततोभावेन प्राप्तिर्भवति । अथवा यावत् स्तन्यपानस्य योग्यता भवेदित्यर्थः ॥ ३५ ॥

अथ बालस्यान्नप्राशनसमयमाह—

यथोक्तविधिना बालं मासि षष्ठेऽष्टमेऽपि च । अन्नं सम्प्राशयेत्किञ्चित्ततस्तद्वर्धयेत् क्रमात् ॥३६॥

अथ बालस्य परिचर्याविधिमाह—

बालमङ्के सुखं दध्यान्न चैनं तर्जयेत्क्वचित् । सहसा बोधयेन्नैव नायोग्यमुपवेशयेत् ॥ ३७ ॥

* अयोग्यमुपवेशनासमर्थम् ॥ ३७ ॥

नाकृष्य स्थापयेत्क्रोडे न क्षिप्रं शयने क्षिपेत् । रोदयेन्न क्वचित्कार्ये विधिमावश्यकं विना ॥३८॥

* आवश्यको विधिः = भेषजदानतैलाभ्यङ्गोद्वर्त्तनादिः ॥ ३८ ॥

तच्चित्तमनुवर्त्तेत तं सदैवानुमोदयेत् । वातातपतडिद्वृष्टिधूमानलजलादितः ।
निम्नोच्चस्थानतश्चापि रक्षेद्बालं प्रयत्नतः ॥ ३९ ॥

अथ बालस्य स्वभावतो हितान्याह—

अभ्यङ्गोद्वर्त्तनस्नानं नेत्रयोरञ्जनं तथा । वसनं मृदु यत्तच्च तथा मृदनुलेपनम् ॥
जन्मप्रभृति पथ्यानि बालस्यैतानि सर्वथा ॥ ४० ॥

अथ बालस्य कवलादेः समयमाह—

कवलः पञ्चमाद्वर्षादष्टमान्नस्य कर्म च । विरेकः षोडशाद्वर्षाद्विंशतेश्चैव मैथुनम् ॥ ४१ ॥

अथ बाल्यादेरवधिमाह सुश्रुतः—

वयस्तु त्रिविधं बाल्यं मध्यमं वार्धकं तथा । ऊनषोडशवर्षस्तु नरो बालो निगद्यते ॥ ४२ ॥

त्रिविधःसोऽपि दुग्धाशीदुग्धान्नाशी तथाऽन्नभुक् । दुग्धाशी वर्षपर्यन्तं दुग्धान्नाशी शरद्द्वयम् ॥

तदुत्तरं स्यादन्नाशी एवं बालस्त्रिधा मतः । मध्ये षोडशसप्तत्योर्मध्यमः कथितो बुधैः ॥ ४४ ॥

चतुर्धा मध्यमं वृद्धिर्यौवपूर्णक्षयान्वितम् । भवेदाविंशतेर्वृद्धिर्युवा त्वात्रिंशतो मतः ॥ ४५ ॥

चत्वारिंशत्समा यावत्तिष्ठेद्वीर्यादिपूरितः । ततः क्रमेण क्षीणः स्याद्यावद्भवति सप्ततिः ॥४६॥

* वीर्यादीत्यादिशब्देन रसादिसर्वधात्विन्द्रियबलोत्साहा उच्यन्ते । क्षीणः = सर्वधात्विन्द्रियबलोत्साहैर्हीनः ॥ ४६ ॥

ततस्तु सप्ततेरूर्ध्वं क्षीणधातुरसादिकः । क्षीयमाणेन्द्रियबलः क्षीणरेता दिने दिने ॥ ४७ ॥

वलीपलितखालित्ययुक्तः कर्मसु चाक्षमः । कासश्वासादिभिः क्लिष्टो वृद्धो भवति मानवः ॥४८॥

बाल्ये विवर्धते श्लेष्मा पित्तं स्यान्मध्यमेऽधिकम् । वार्धके वर्द्धते वायुर्विचार्यैतदुपक्रमेत् ॥४९॥

* उपक्रमेत् = चिकित्सेत् ॥ ४९ ॥

तन्त्रान्तरे तु—

बाल्यं वृद्धिश्छविर्मेधा त्वग्दृष्टिः शुक्रविक्रमौ । बुद्धिः कर्मेन्द्रियं चेतो जीवितं दशतो ह्रसेत् ॥५०

अथ प्रकृतिलक्षणान्याह—

सप्त प्रकृतयो नृणां वातात्पित्तात्कफात्तथा । संसर्गात्सन्निपाताच्च भवन्ति भिषजां मते॥९१॥
शुक्रशोणितसंयोगे ।यो दोषस्तूत्कटो भवेत् । प्रकृतिर्जायते तेन तस्या लक्षणमुच्यते ॥ ९२ ॥

वाग्भटे तु आत्रेयादयः—

शुक्रासृग्गर्भिणीभोज्यचेष्टागर्भाशयार्त्तिषु । यः स्याद्दोषोऽधिकस्तेन प्रकृतिः सप्तधोदिता॥९३॥

* सोऽपि दोषः स्वभावावस्थितो न तु दुष्टः, दुष्टेन तु शुक्रशोणितयोर्दुष्टौ शुद्धगर्भासम्भवात् ॥ ९३ ॥

अथ वातादिप्रकृतयस्तत्रादौ वातप्रकृतिलक्षणमाह—

जागरूकोऽल्पकेशश्च स्फुटितांघ्रिकरः कृशः ॥ ९४ ॥
शीघ्रगो बहुवाग् रूक्षः स्वप्ने वियति गच्छति । एवंविधः स विज्ञेयो वातप्रकृतिको नरः ॥९५॥

अथ पित्तप्रकृतिलक्षणमाह—

पित्तप्रकृतिको लोको यादृशोऽथ निगद्यते । अकालपलितो गौरः क्रोधी स्वेदी च बुद्धिमान् ९६
बहुभुक्ताम्रनेत्रश्च स्वप्ने ज्योतींषि पश्यति । एवंविधो भवेद्यस्तु पित्तप्रकृतिको नरः ॥ ९७ ॥

अथ श्लेष्मप्रकृतिलक्षणमाह—

श्यामकेशः क्षमी स्थूलो बहुवीर्यो महाबलः । स्वप्ने जलाशयालोकी श्लेष्मप्रकृतिको नरः॥९८॥

अथ द्वन्द्वजत्रिदोषजप्रकृतिलक्षणमाह—

दृश्यते प्रकृतौ यत्र रूपं दोषद्वयस्य तु । द्विसंसर्गेण जानीयात्सर्वलिङ्गैस्त्रिदोषजम् ॥ ९९ ॥

अथ वातप्रकृतिलक्षणानि वाग्भटे—

विभुत्वादाशुकारित्वाद् बलित्वादन्यकोपनात् । स्वातन्त्र्याद्बहुरोगत्वाद्दोषाणां प्रबलोऽनिलः
प्रायोऽत एव पवनाध्युषिता मनुष्या दोषात्मकाः।स्फुटितधूसरकेशगात्राः ।
शीतद्विषश्चलधृतिस्मृतिबुद्धिचेष्टासौहार्ददृष्टिगतयोऽतिबहुप्रलापाः ॥ ६१ ॥
अल्पपित्तबलजीवितनिद्राः सन्नसक्तचलजर्जरवाचः ।
नास्तिका बहुभुजः सविलासा गीतहास्यमृगयाकलिलोलाः ॥ ६२ ॥
मधुराम्लकटूष्णसात्म्यकाङ्क्षाः कृशदीर्घाकृतयः सशब्दयाताः ।
न दृढा न जितेन्द्रिया न चार्या न च कान्तादयिता बहुप्रजा वा ॥ ६३ ॥
नेत्राणि चैषां खरधूसराणि वृत्तान्यचारूणि मृतोपमानि ।
उन्मीलितानीव भवन्ति सुप्ते शैलद्रुमांस्ते गगनं च यान्ति ॥ ६४ ॥
अधन्या मत्सराध्माताः। स्तेनाःप्रोद्बद्धपिण्डिकाः।श्वशृगालोष्ट्रगृध्राखुकाकानूकाश्च वातिकाः

अथ पित्तप्रकृतिलक्षणान्याह—

पित्तं वह्निर्वह्निजं वा यदस्मात्पित्तोद्रिक्तस्तीक्ष्णतृष्णाबुभुक्षः ।
गौरोष्णाङ्गस्ताम्रहस्ताङ्घ्रिवक्त्रः शूरो मानी पिङ्गकेशोऽल्परोमा ॥ ६६ ॥
दयितमाल्यविलेपनमण्डनः सुचरितः शुचिराश्रितवत्सलः ।
विभवसाहसबुद्धिबलान्वितो भवति भीषु गतिर्द्विषतामपि ॥ ६७ ॥

मेधावी प्रशिथिलसन्धिबन्धमांसो नारीणामनभिमतोऽल्पशुक्रकामः ।
आवासः पलिततरङ्गनीलिकानां भुङ्क्तेऽन्नं मधुरकषायतिक्तशीतम् ॥ ६८ ॥
घर्मद्वेषी स्वेदनः पूतिगन्धिर्भूर्युच्चारक्रोधपानाशनेर्ष्यः ।
सुप्तः पश्येत्कर्णिकारान्पलाशान्दिग्दाहोल्काविद्युदर्कानलांश्च ॥ ६९ ॥
तनूनि पिङ्गानि चलानि चैषां तन्वल्पपक्ष्माणि हिमप्रियाणि ।
क्रोधेन मद्येन रवेश्च भासा रागं व्रजन्त्याशु विलोचनानि ॥ ७० ॥
मध्यायुषो मध्यबलाः पण्डिताः क्लेशभीरवः । व्याघ्रर्क्षकपिमार्जारयक्षानूकाश्च पैत्तिकाः ॥ ७१ ॥

अथ कफप्रकृतिलक्षणान्याह—

श्लेष्मा सोमः श्लेष्मलस्तेन सौम्यो गूढस्निग्धश्लिष्टसन्ध्यस्थिमांसः ।
क्षुत्तृड्दुःखक्लेशघर्मैरतप्तो बुद्ध्या युक्तः सात्त्विकः सत्यसन्धः ॥ ७२ ॥
प्रियंगुदूर्वाशरकाण्डशस्त्रगोरोचनापद्मसुवर्णवर्णः
प्रलम्बबाहुः पृथुपीनवक्षा महाललाटो घननीलकेशः ॥ ७३ ॥
मृद्वङ्गः समसुविभक्तचारुदेहो बह्वोजोरतिरसशुक्रपुत्रभृत्यः ।
धर्मात्मा वदति न निष्ठुरं च जातु प्रच्छन्नं वहति दृढं चिरं न वैरम् ॥ ७४ ॥
समदद्विरदेन्द्रतुल्ययातो जलदाम्भोधिमृदङ्गसिंहघोषः ।
स्मृतिमानभियोगवान्विनीतो न च बाल्येऽप्यतिरोदनो न लोलः ॥ ७५ ॥
तिक्तं कषायं कटुकोष्णरूक्षमल्पं स भुङ्क्ते बलवांस्तथाऽपि ।
रक्तान्तसुस्निग्धविशालदीर्घसुव्यक्तशुक्लासितपक्ष्मलाक्षः ॥ ७६ ॥
अल्पव्याहारक्रोधपानाशनेर्ष्यः प्राज्यायुर्वित्तो दीर्घदर्शी वदान्यः ।
श्राद्धो गम्भीरः स्थूललक्ष्यः क्षमावानार्यो निद्रालुर्दीर्घसूत्रः कृतज्ञः ॥ ७७ ॥
ऋजुर्विपश्चित्सुभगः सलज्जो भक्तो गुरूणां स्थिरसौहृदश्च ।
स्वप्ने सपद्मान्सविहङ्गमालांस्तोयाशयान्पश्यति तोयदांश्च ॥ ७८ ॥
ब्रह्मरुद्रेन्द्रवरुणतार्क्ष्यहंसगजाधिपैः । श्लेष्मप्रकृतयस्तुल्यास्तथा सिंहाश्वगोवृषैः ॥ ७९ ॥

ननु प्रकृतिहेतूनां मध्ये योऽधिकः स स्वव्याधीन्कथं न करोतीत्याशंकायामाह—

विषजातो यथा कीटो न विषेण प्रबाध्यते । तद्वत्प्रकृतयो मर्त्यं शक्नुवन्ति न बाधितुम् ॥ ८० ॥

* एतौ द्वौ नञौ अपि ईषदर्थे । तेन विषेण विषजदाहादिना ईषद् प्रबाध्यते, न तु भृशम् । तथा च प्रकृतयः प्रकृतिहेतवो दोषा बाधितुं न शक्नुवन्ति । करचरणस्फुटितस्वल्पस्वेदनिद्राऽऽधिक्यादिना ईषद्बाधितुं शक्नुवन्त्येव, न तु ज्वरादिभिः ॥ ८० ॥

प्रकोपो वाऽन्यभावो वा क्षयो वा नोपजायते । प्रकृतीनां स्वभावेन जायते तु गतायुषः ॥ ८१ ॥

इति श्रीमिश्रलटकनतनयश्रीमन्मिश्रभावविरचिते भावप्रकाशे बालप्रकरणं चतुर्थम् ॥ ४ ॥

## अथ दिनचर्याऽऽदिप्रकरणं पञ्चमम् ॥ ५ ॥

अथ देशमाह—

भूमिदेशस्त्रिधाऽनूपो जाङ्गलो मिश्रलक्षणः ॥ १ ॥

तत्रानूपलक्षणमाह—

नदीपल्वलशैलाढ्यः फुल्लोत्पलकुलैर्युतः । हंससारसकारण्डचक्रवाकादिसेवितः ॥ २ ॥
शशवाराहमहिषरुरुरोहिकुलाकुलः । प्रभूतद्रुमपुष्पाढ्यो नीलशस्यफलान्वितः ॥ ३ ॥
अनेकशालिकेदारकदलीक्षुविभूषितः । अनूपदेशो ज्ञातव्यो वातश्लेष्मामयार्त्तिमान् ॥ ४ ॥

अथ जाङ्गललक्षणमाह—

आकाशसम उच्चश्च स्वल्पपानीयपादपः । शमीकरीरबिल्वार्कपीलुककन्धुसङ्कुलः ॥ ५ ॥
हरिणैणर्क्षपृषगोकर्णखरसङ्कुलः । सुस्वादुफलवान्देशो वातलो जाङ्गलः स्मृतः ॥ ६ ॥

तन्त्रान्तरे तु—

बहूदकनगोऽनूपः कफमारुतरोगवान् । जाङ्गलोऽल्पाम्बुशाखी च पित्तासृङ्मारुतोत्तरः ॥ ७ ॥

अथ साधारणलक्षणमाह—

संसृष्टलक्षणो यस्तु देशः साधारणो मतः । समाः साधारणे यस्माच्छीतवर्षोष्णमारुताः ।
समता तेन दोषाणां तस्मात्साधारणो वरः ॥ ८ ॥

सुश्रुतः—

उचिते वर्त्तमानस्य नास्ति दुर्देशजं भयम् । आहारस्वप्नचेष्टाऽऽदौ तद्देशस्य कृते सति॥९॥

वृद्धवाग्भटः—

यस्य देशस्य यो जन्तुस्तज्जं तस्यौषधं हितम् । देशादन्यत्र वसतस्तत्तुल्यगुणमौषधम् ॥१०॥
स्वे देशे निचिता दोषा अन्यस्मिन्कोपमागताः। बलवन्तस्तथा न स्युर्जलजाःस्थलजास्तथा११

अथ दिनादिचर्या आह—

मानवो येन विधिना स्वस्थस्तिष्ठति सर्वदा । तमेव कारयेद्वैद्यो यतः स्वास्थ्यं सदेप्सितम् १२
दिनचर्यां निशाचर्यामृतुचर्यां यथोदिताम् । आचरन्पुरुषः स्वस्थः सदा तिष्ठति नान्यथा॥१३॥

तत्र स्वस्थस्य लक्षणमाह सुश्रुतः—

समदोषः समाग्निश्च समधातुमलक्रियः । प्रसन्नात्मेन्द्रियमनाःस्वस्थ इत्यभिधीयते ॥ १४ ॥

* क्रिया=अत्र कर्म, तेन समक्रियः=शरीरानुरूपकर्मा ॥ १४ ॥

अथ दिनचर्यामाह—

ब्राह्मे मुहूर्त्त बुध्येत स्वस्थो रक्षाऽर्थमायुषः । तत्र सर्वाघशान्त्यर्थं स्मरेद्धि मधुसूदनम् ॥ १५ ॥
दध्याज्यादर्शसिद्धार्थबिल्वगोरोचनस्रजाम् । दर्शनं स्पर्शनं कार्यं प्रबुद्धेन शुभावहम् ॥ १६ ॥
स्वमाननं घृते पश्येद् यदीच्छेच्चिरजीवितम् ॥
आयुष्यमुषसि प्रोक्तं मलादीनां विसर्जनम् । तदन्त्रकूजनाध्मानोदरगौरववारणम् ॥ १७ ॥

* आदिशब्देन वातमूत्रादीनां ग्रहणम् ॥ १७ ॥

अथ पुरीषवेगाभिघातात् हानिमाह—

आटोपशूलौ परिकर्त्तिका च सङ्गः पुरीषस्य तथोर्ध्ववातः ।
पुरीषमास्यादथवा निरेति पुरीषवेगेऽभिहते नरस्य ॥ १८ ॥

* परिकर्त्तिका=गुदे परिकर्त्तनवत्पीडा । पुरीषस्य सङ्गः=निरोधः । ऊर्ध्ववातः=उद्गारबाहुल्यम् ॥ १८ ॥

अथ वातनिग्रहजान् दोषानाह—

वातमूत्रपुरीषाणां सङ्गो ध्मानं क्लमो रुजा । जठरे वातजाश्चान्ये रोगाः स्युर्वातनिग्रहात् ॥१९॥

अथ मूत्रनिग्रहजान् दोषानाह—

बस्तिमेहनयोः शूलं मूत्रकृच्छ्रं शिरोरुजा । विनामो वङ्क्षणानाहः स्याल्लिङ्गं मूत्रनिग्रहे ॥२०॥

* विनामः=शरीरस्य नम्रता । वङ्क्षणानाहः=वङ्क्षणस्याकर्षणवत्पीडा ॥ २० ॥

न वेगितोऽन्यकार्यः स्यान्न वेगानीरयेद्बलात् । कामशोकभयक्रोधान्मनोवेगान्विधारयेत् ॥२१॥
गुदादिमलमार्गाणां शौचं कान्तिबलप्रदम् । पवित्रकरमायुष्यमलक्ष्मीकलिपापहृत् ॥ २२ ॥
प्रक्षालनं सतं पाण्योः पादयोः शुद्धिकारणम् । मलश्रमहरं वृष्यं चक्षुष्यं राजसापहम् ॥२३॥

अथ दन्तधावनविधिमाह—

भक्षयेद्दन्तपवनं द्वादशाङ्गुलमायतम् । कनिष्ठिकाग्रवत्स्थूलमृज्वग्रन्थि तथाऽव्रणम् ॥ २४ ॥
एकैकं घर्षयेद्दन्तं मृदुना कूर्चकेन तु । दन्तशोधनचूर्णेन दन्तमांसान्यबाधयन् ॥ २५ ॥
क्षौद्रत्रिकटुकाक्तेन तैलसिन्धुभवेन वा । चूर्णेन तेजोवत्याश्च दन्तान्नित्यं विशोधयेत् ॥२६॥

* तेजोवती=तेजवलकल इति लोके प्रसिद्धा ॥ २६ ॥

मधूको मधुरे श्रेष्ठः करञ्जः कटुके तथा । निम्बः स्यात्तिक्तके श्रेष्ठः कषाये खदिरस्तथा ॥२७॥
समयं तु समालोक्य दोषं च प्रकृतिं तथा । यथोचितैरसैर्वीर्यैर्युक्तं द्रव्यं प्रयोजयेत् ॥ २८ ॥
तेनास्य मुखवैरस्यदन्तजिह्वाऽऽस्यगजा गदाः । रुचिवैशद्यलघुता न भवन्ति भवन्ति च ॥२९॥
अर्के वीर्यं वटे दीप्तिः करञ्जे विजयो भवेत् । प्लक्षे चैवार्थसम्पत्तिर्बदर्यो मधुरो ध्वनिः ॥३०॥
खदिरे मुखसौगन्ध्यं बिल्वे तु विपुलं धनम् । उदुम्बरे तु वाक्सिद्धिराम्रे त्वारोग्यमेव च ॥३१॥
कदम्बे तु धृतिर्मेधा चम्पके च दृढा मतिः । शिरीषे कीर्तिसौभाग्यमायुरारोग्यमेव च ॥३२॥
अपामार्गे धृतिर्मेधा प्रज्ञाशक्तिस्तथाऽसने । दाडिम्यां सुन्दराकारः ककुभे कुटजे तथा ॥३३॥
जातीतगरमन्दारैर्दुःस्वप्नं च विनश्यति ॥ ३४ ॥

अथ तृणराजसंज्ञकान् वृक्षानाह—

गुवाकस्तालहिन्तालौ केतकश्च बृहत्तृणः । खर्जूरं नारिकेलं च सप्तैते तृणराजकाः ॥३५॥

अथ तृणराजदन्तधावननिषेधमाह—

तृणराजसमुत्पन्नं यः कुर्याद्दन्तधावनम् । नरश्चाण्डालयोनिः स्याद्यावद्गङ्गां न पश्यति ॥३६॥

अथ दन्तधावनानर्हजनानाह—

न खादेद्गलताल्वोष्ठजिह्वादन्तगदेषु तत् । मुखस्य पाके शोथे च श्वासकासवमीषु च ॥३७॥
दुर्बलोऽजीर्णभुक्तश्च हिक्कामूर्च्छामदान्वितः । शिरोरुजार्त्तस्तृषितः श्रान्तः पानक्लमान्वितः ॥३८॥

अर्दितः कर्णशूली च नेत्ररोगी नवज्वरी । वर्जयेद्दन्तकाष्ठं तु हृदामययुतोऽपि च ॥ ३९ ॥

* अजीर्णभुक्तः-न जीर्णं भुक्तं यस्य सः ॥ ३८-३९ ॥

अथ जिह्वानिर्लेखनमाह—

जिह्वानिर्लेखनं हैमं राजतं ताम्रजं तथा । पाटितं मृदु तत्काष्ठं मृदुपत्रमतं तथा ॥ ४० ॥
दशाङ्गुलं मृदु स्निग्धं तेन जिह्वां लिखेत्सुखम् । तज्जिह्वामलवैरस्यदुर्गन्धजडताहरम् ॥४१॥

* तत्काष्ठं = दन्तशोधनयोग्यं काष्ठम् ॥ ४०-४१ ॥

अथ मुखगण्डूषमाह—

गण्डूषमपि कुर्वीत शीतेन पयसा मुहुः । कफतृष्णामलहरं मुखान्तःशुद्धिकारकम् ॥ ४२ ॥
सुखोष्णोदकगण्डूषः कफारुचिमलापहः । दन्तजाड्यहरश्चापि मुखलाघवकारकः ॥ ४३ ॥

अथ गण्डूषानर्हजनानाह—

विषमूर्च्छामदार्त्तानां शोषिणां रक्तपित्तिनाम् । कुपिताक्षिमलक्षीणरूक्षाणां स न शस्यते ॥४३॥

* सः = सुखोष्णोदकगण्डूषः ॥ ४४ ॥

अथ मुखप्रक्षालनगुणानाह—

मुखप्रक्षालनं शीतपयसा रक्तपित्तजित् । मुखस्य पिडकाशोषनीलिकाव्यङ्गनाशनम् ॥ ४५ ॥
कुर्याद्वाऽपि कदुष्णेन पयसाऽऽस्यविशोधनम् । कफवातहरं स्निग्धं मुखशोषविनाशनम् ॥४६॥

अथ नस्यविधिमाह—

कटुतैलादि नस्यार्थे नित्याभ्यासेनयोजयेत् प्रातः श्लेष्मणिमध्याह्ने पित्ते सायं समीरणे ॥४७॥
सुगन्धवदनाः स्निग्धनिःस्वना विमलेन्द्रियाः । निर्वलीपलितव्यङ्गा भवेयुर्नस्यशीलिनः ॥४८॥

अथाञ्जनविधिमाह—

सौवीरमञ्जनं नित्यं हितमक्ष्णोस्ततो भजेत् । लोचने भवतस्तेन मनोज्ञे सूक्ष्मदर्शने ॥ ४९ ॥

* सौवीरं = "श्वेतसुरमा" इति लोके प्रसिद्धम् ॥ ४९ ॥

स्रोतोऽञ्जनं मतं श्रेष्ठं विशुद्धं सिन्धुसम्भवम् । दृष्टः कण्डूमलहरं दाहक्लेदरुजापहम् ॥ ५० ॥
अक्ष्णो रूपावहं चैव सहते मारुतातपौ । नेत्रे रोगा न जायन्ते तस्मादञ्जनमाचरेत् ॥ ५१ ॥

* स्रोतोऽञ्जनं = "कृष्णसुर्मा" इति लोके । विशुद्धं शोधनं विनाऽपि । सिन्धुसम्भवं= सिन्धुनामा पर्वतस्तत्र सम्भवम् ॥ ५०-५१ ॥

अथाञ्जनायोग्यजनानाह—

रात्रौ जागरितःश्रान्तश्छर्दितो भुक्तवांस्तथा । ज्वरातुरः शिरःस्नातो नाक्ष्णोरञ्जनमाचरेत् ॥ ५२॥

अथ नखादिकर्त्तनविधिमाह—

पञ्चरात्रान्नखश्मश्रुकेशरोमाणि कर्त्तयेत् । केशश्मश्रुनखादीनां कर्त्तनं सम्प्रसाधनम् ॥
पौष्टिकं धन्यमायुष्यं शौचकान्तिकरं परम् ॥ ५३ ॥

* सम्प्रसाधनं = शोभाजनकम् ॥ ५३ ॥

अथ नासालोमोत्पाटने दोषमाह—

उत्पाटयेन्नु लोमानि नासाया न कदाचन । तदुत्पाटनतो दृष्टेर्दौर्बल्यं त्वरया भवेत् ॥ ५४ ॥

अथ केशप्रसाधनगुणानाह—

केशपाशे प्रकुर्वीत प्रसाधन्या प्रसाधनम् । केशप्रसाधनं केश्यं रजोजन्तुमलापहम् ॥ ५५ ॥

अथ दर्पणालोकनगुणानाह—

आदर्शालोकनं प्रोक्तं मङ्गल्यं कान्तिकारकम् । पौष्टिकं बल्यमायुष्यं पापालक्ष्मीविनाशनम् ॥ ५६॥

अथ व्यायामगुणानाह—

लाघवं कर्मसामर्थ्यं विभक्तघनगात्रता । दोषक्षयोऽग्निवृद्धिश्च व्यायामादुपजायते ॥ ५७ ॥
व्यायामदृढगात्रस्य व्याधिर्नास्ति कदाचन । विरुद्धं वा विदग्धं वा भुक्तं शीघ्रं विपच्यते ॥५८॥
भवन्ति शीघ्रं नैतस्य देहे शिथिलताऽऽदयः । न चैनं सहसाऽऽक्रम्य जरा समधिरोहति ॥५९॥
चास्ति सदृशं तेन किञ्चित्स्थौल्यापकर्षणम् । स सदा गुणमाधत्ते बलिनां स्निग्धभोजिनाम् ॥६०॥
वसन्ते शीतसमये सुतरां स हितो मतः । अन्यदाऽपि च कर्त्तव्यो बलार्धेन यथाबलम् ॥६१॥

अथ बलार्धस्य लक्षणमाह—

हृदयस्थो यदा वायुर्वक्त्रं शीघ्रं प्रपद्यते । मुखं च शोषं लभते तद्बलार्धस्य लक्षणम् ॥६२॥
किं वा ललाटे नासायां गात्रसन्धिषु कक्षयोः । यदा संजायते स्वेदो बलार्धं तु तदाऽऽदिशेत् ॥६३॥

अथ व्यायामयोग्यजनानाह—

भुक्तवान्कृतसम्भोगः कासी श्वासी कृशः क्षयी । रक्तपित्ती क्षती शोषी न तं कुर्यात्कदा चन ॥६४॥

अथातिव्यायामदोषानाह—

अतिव्यायामतः कासो ज्वरश्छर्दिः श्रमः क्लमः । तृष्णा क्षयः प्रतमको रक्तपित्तं च जायते ॥६५॥

अथाभ्यङ्गगुणानाह—

अभ्यङ्गं कारयेन्नित्यं सर्वेष्वङ्गेषु पुष्टिदम् । शिरःश्रवणपादेषु तं विशेषेण शीलयेत् ॥ ६६ ॥
सार्षपं गन्धतैलं च यत्तैलं पुष्पवासितम् । अन्यद्रव्ययुतं तैलं न दुष्यति कदाचन ॥ ६७ ॥

* गन्धतैलं = गन्धद्रव्याणामगुर्वादीनामग्नियोगेन निष्कासितः–स्नेहः ॥ ६७ ॥

अथ सर्वाङ्गेष्वभ्यङ्गगुणानाह—

अभ्यङ्गो वातकफहृच्छ्रमक्लान्तिबलं सुखम् । निद्रावर्णमृदुत्वायुष्कुरुते देहपुष्टिकृत् ॥ ६८ ॥

अथ शिरस्यभ्यङ्गगुणानाह—

अभ्यङ्गःशीलितो मूर्ध्नि सकलेन्द्रियतर्पकः । दृष्टिपुष्टिकरो हन्ति शिरोभूमिगतान्गदान् ॥६९॥
केशानां बहुतां दार्ढ्यं मृदुतां दीर्घतां तथा । कृष्णतां कुरुते कुर्याच्छिरसः पूर्णतामपि ॥७०॥

अथ कर्णयोस्तैलपूरणगुणानाह—

न कर्णरोगा न मलं न च मन्याहनुग्रहः । नोच्चैः श्रुतिर्न बाधिर्यं स्यान्नित्यं कर्णपूरणात् ॥७१॥

अथ कर्णस्तैलादिपूरणस्य योग्यसमयमाह—

रसाद्यैः पूरणं कर्णे भोजनात्प्राक्प्रशस्यते । तैलाद्यैः पूरणं कर्णे भास्करेऽस्तमुपागते ॥ ७२ ॥

अथ पादाभ्यङ्गगुणानाह—

पादाभ्यङ्गश्च तत्स्थैर्यंनिद्रादृष्टिप्रसादकृत् । पादसुप्तिश्रमस्तम्भसङ्कोचस्फुटनप्रणुत् ॥ ७३ ॥
व्यायामक्षुण्णवपुषं पद्भ्यां सम्मर्दितं तथा । व्याधयो नोपसर्पन्ति वैनतेयमिवोरगाः ॥७४॥

अथ स्नेहयुक्तावगाहनगुणानाह—

लोमकूपशिरोजालधमनीभिः कलेवरे । तर्पयेद्बलमाधत्ते स्नेहयुक्तोऽवगाहने ॥ ७५ ॥
अद्भिः संसिक्तमूलानां तरूणां पल्लवादयः । वर्द्धन्ते हि तथा नृणां स्नेहसंसिक्तधातवः ॥ ७६ ॥

अथाभ्यङ्गायोग्यजनानाह—

नवज्वरी अजीर्णी च नाभ्यक्तव्यः कथञ्चन । तथा विरिक्तो वान्तश्च निरूढो यश्च मानवः॥७७॥

* निरूढः = दत्तो निरूहवस्तिर्यस्मै सः ॥ ७७ ॥

पूर्वयोः कृच्छ्रताव्याधेरसाध्यत्वमथापि वा । शेषाणां च त्विह प्रोक्ता वह्निसादादयो गदाः॥७८॥

* पूर्वयोः = तरुणज्वरिणोऽजीर्णिनश्च ॥ ७८ ॥

अथोद्वर्त्तनगुणानाह—

उद्वर्त्तनं कफहरं मेदोघ्नं शुक्रदं परम् । बल्यं शोणितकृच्चापि त्वक्प्रसादमृदुत्वकृत् ॥ ७९ ॥
मुखलेपाद् दृढं चक्षुः पीनो गण्डस्तथाऽऽननम् । कान्तमव्यङ्गपिडकं भवेत्कमलसन्निभम् ॥८०॥

अथ स्नानविधिमाह—

दीपनं वृष्यमायुष्यं स्नानमोजोबलप्रदम् । कण्डूमलश्रमस्वेदतन्द्रातृड्दाहपाप्मनुत् ॥ ८१ ॥
बाह्यैश्च तैः शीताद्यैरूष्माऽन्तर्याति पीडितः । नरस्य स्नातमात्रस्य दीप्यते तेन पावकः॥८२॥
शीतेन पयसा स्नानं रक्तपित्तप्रशान्तिकृत् । तदेवोष्णेन तोयेन बल्यं वातकफापहम् ॥ ८३ ॥
शिरःस्नानमचक्षुष्यमत्युष्णेनाम्बुना सदा । वातश्लेष्मप्रकोपे तु हितं तच्च प्रकीर्त्तितम् ॥८४॥
अशीतेनाम्भसा स्नानं पयःपानं नवाः स्त्रियः । एतद्वो मानवाः ! पथ्यं स्निग्धमल्पं च भोजनम्॥८५॥

* हरिश्चन्द्रस्यैतत् ॥ ८५ ॥

अथामलकैः स्नानस्य गुणानाह—

यः सदाऽऽमलकैः स्नानं करोति स विनिश्चितम् । वलीपलितनिर्मुक्तो जीवेद्वर्षशतं नरः ॥८६॥

अथ स्नानानर्हजनानाह—

स्नानं ज्वरेऽतिसारे च नेत्रकर्णानिलार्त्तिषु । आध्मानपीनसाजीर्णभुक्तवत्सु च गर्हितम् ॥८७॥

अथ स्नानोत्तरं वस्त्रेणाङ्गमार्जनस्य गुणानाह—

स्नानस्यानन्तरं सम्यग् वस्त्रेणाङ्गस्य मार्जनम् । कान्तिप्रदं शरीरस्य कण्डूत्वग्दोषनाशनम् ॥८८॥

अथ वस्त्रधारणगुणानाह—

तत्रादौ शीतकाले धारणार्हवस्त्राणि तद्गुणवर्णनपूर्वकमाह—

कौशेयौर्णिकवस्त्रं च रक्तवस्त्रं तथैव च । वातश्लेष्महरं तत्तु शीतकाले विधारयेत् ॥८९॥

* कौशेयं = पट्टाम्बरं तसरवस्त्रं च ॥ ८९ ॥

अथोष्णकाले धारणार्हवस्त्राणि तद्गुणाँश्चाह—

मेध्यं सुशीतं पित्तघ्नं कषायं वस्त्रमुच्यते । तद्धारयेदुष्णकाले तत्रापि लघु शस्यते ॥ ९० ॥

* कषायं = 'कौमो' इति लोके, कषायरागरक्तं वा ॥ ९० ॥

अथ वर्षाकाले धारणार्हवस्त्राणि तद्गुणाँश्चाह—

शुक्लं तु शुभदं वस्त्रं शीतातपनिवारणम् । न चोष्णं न च वा शीतं तत्तु वर्षासु धारयेत्॥९१॥

अथ नवनिर्मलाम्बरधारणगुणानाह—

प्रशस्यं काम्यमायुष्यं श्रीमदानन्दवर्धनम् । स्वच्छं वर्चस्करं रुच्यं नवनिर्मलमम्बरम् ॥९२॥

* काम्यं=कामोद्दीपकम् ॥ ९२ ॥

अथ मलिनवस्त्रधारणदोषानाह—

कदाऽपि न जनैः सन्धिर्धार्यं मलिनमम्बरम् । तत्तु कण्डूकृमिकरं ग्लान्यलक्ष्मीकरं परम् ॥९३॥

* अलक्ष्मीः=अशोभा दारिद्र्यं च ॥ ९३ ॥

अथ प्रलेपगुणानाह,

तत्रादौ शीतकाले प्रलेपार्हद्रव्यगुणानाह—

कुङ्कुमं चन्दनं चापि कृष्णागुरु च मिश्रितम् । उष्णं वातकफध्वंसि शीतकाले तदिष्यते ॥९४॥

अथोष्णकाले प्रलेपनार्हद्रव्यगुणानाह—

चन्दनं घनसारेण बालकेन च मिश्रितम् । सुगन्धि परमं शीतमुष्णकाले प्रशस्यते ॥९५॥

* घनसारः=कर्पूरः, बालकं=ह्रीवेरम् ॥ ९५ ॥

अथ वर्षाकाले प्रलेपनार्थद्रव्यगुणानाह—

चन्दनं घुसृणोपेतं मृगनाभिसमायुतम् । न चोष्णं न च वा शीतं वर्षाकाले तदिष्यते ॥९६॥

* घुसृणं=कुङ्कुमम् । मृगनाभिः=कस्तूरी ॥ ९६ ॥

अथ सामान्यतोऽनुलेपगुणवर्णनपूर्वकं तदनर्हजनमप्याह—

अनुलेपस्तृषामूर्च्छादुर्गन्धस्वेददाहजित् । सौभाग्यतेजस्त्वग्वर्णप्रीत्यौजोबलवर्धनः ॥
स स्नानानर्हलोकानामनुलेपोऽपि नो हितः ॥ ९७ ॥

अथ पुष्पाभरणादिधारणगुणानाह, तत्रादौ सुगन्धिपुष्पपत्रधारणगुणानाह—

सुगन्धिपुष्पपत्राणां धारणं कान्तिकारकम् । पापरक्षोग्रहहरं कामदं श्रीविवर्द्धनम् ॥ ९८ ॥

अथ भूषणधारणगुणानाह तत्रादौ काञ्चनधारणगुणानाह—

भूषणैर्भूषयेदङ्गं यथायोग्यं विधानतः । शुचिसौभाग्यसन्तोषदायकं काञ्चनं स्मृतम् ॥ ९९॥

अथ रत्नाभरणधारणगुणानाह—

ग्रहदृष्टिहरं पुष्टिकरं दुःस्वप्ननाशनम् । पापदौर्भाग्यशमनं रत्नाभरणधारणम् ॥ १०० ॥

अथ सूर्यादिनवग्रहप्रीतिकराणि रत्नान्याह—

माणिक्यं तरणेःसुजातममलं मुक्ताफलं शीतगोर्माहेयस्य च विद्रुमो निगदितःसौम्यस्य गारुत्मतम्
देवेज्यस्य च पुष्परागमसुराचार्यस्य वज्रं शनेर्नीलं निर्मलमन्ययोश्च गदिते गोमेदवैदूर्यके॥१०१॥

अथ वस्त्रश्रृङ्गाररत्नानां धारणगुणानाह—

वासःश्रृङ्गाररत्नानां धारणं प्रीतिवर्धनम् । रक्षोघ्नमर्थ्यमोजस्यं सौभाग्यकरमुत्तमम् ॥ १०२ ॥

अथ सिद्धमन्त्रमहौषध्यादिधारणगुणानाह—

सततं सिद्धमन्त्रस्य महौषध्यास्तथैव च । रोचनासर्षपादीनां मङ्गल्यानां च धारणम् ॥१०३॥
आयुर्लक्ष्मीकरं रक्षोहरं मङ्गलदं शुभम् । हिंस्रादिभयविध्वंसि वशीकरणकारणम् ॥ १०४ ॥

अथ भोजनविधिमाह,

तत्रादौ भोजनकाले मङ्गलवस्तुदर्शनगुणानाह—

ततो भोजनवेलायां कुर्यान्मङ्गलयदर्शनम् । तस्य प्रकुर्वानं नित्यमायुर्धर्मविवर्धनम् ॥ १०५ ॥

अथ मङ्गलवस्तून्याह—

लोकेऽस्मिन्मङ्गलान्यष्टौ ब्राह्मणो गौर्हुताशनः। पुष्पस्रक्सर्पिरादित्य आपो राजा तथाऽष्टमः१०६

अथ पादुकाधारणगुणानाह—

पादुकाधारणं कुर्यात्पूर्वं भोजनतः परम् । पादरोगहरं वृष्यं चक्षुष्यं चायुषो हितम् ॥ १०७ ॥

अथ क्षुत्तृडाद्यवरोधे हानिमाह—

शरीरे जायते नित्यं वाञ्छा नृणां चतुर्विधा। बुभुक्षा च पिपासा च सुषुप्सा च रतिस्पृहा १०८॥

अथ भोजनेच्छाविघाते हानिमाह—

भोजनेच्छाविघातात्स्यादङ्गमर्दोऽरुचिः श्रमः । तन्द्रा लोचनदौर्बल्यं धातुदाहो बलक्षयः॥१०९॥

अथ जलपानेच्छाविघाते हानिमाह—

विघातेन पिपासायाः शोषः कण्ठास्ययोर्भवेत् । श्रवणस्यावरोधश्चरक्तशोषो हृदिव्यथा॥११०॥

अथ स्वापेच्छाविघाते हानिमाह—

निद्राविघाततो जृम्भा शिरोलोचनगौरवम् । अङ्गमर्दस्तथा तन्द्रा स्यादन्नापाक एव च ॥१११॥

अथ बुभुक्षायां सत्यामपि भोजनाकरणे दोषमाह—

बुभुक्षितो न योऽश्नाति तस्याहारेन्धनक्षयात्। मन्दीभवति कायाग्निर्यथाग्निर्निरिन्धनः ११२

आहारं पचति शिखी दोषानाहारवर्जितः । पचेद् दोषक्षये धातून्प्राणान्धातुक्षयेऽपि च ॥११३॥

अथ भोजनकरणे गुणानाह—

आहारः प्रीणनः सद्यो बलकृद् देहधारणः । स्मृत्यायुःशक्तिवर्णौजःसत्त्वशोभाविवर्धनः ॥११४॥

अथ भोजनसमयमाह—

यथोक्तगुणसम्पन्नं नरः सेवेत भोजनम् । विचार्य दोषकालादीन्कालयोरुभयोरपि ॥११५॥

* उभयोः कालयोः=प्रातः सायं च ॥ ११५ ॥

तथा च—

सायं प्रातर्मनुष्याणामशनं श्रुतिबोधितम् । नान्तरा भोजनं कुर्यादग्निहोत्रसमो विधिः॥११६॥

प्रातः-प्रथमयामादुपरि द्वितीययामादर्वाक् तदेवोत्तरत्राह—

तथा च—

याममध्ये न भोक्तव्यं यामयुग्मं न लङ्घयेत् । याममध्ये रसोत्पत्तिर्यामयुग्माद्बलक्षयः ॥११७॥

अन्यच्च—

क्षुत्सम्भवति पक्वेषु रसदोषमलेषु च । काले वा यदि वाऽकाले सोऽन्नकाल उदाहृतः ॥११८॥

अथ जीर्णाहारस्य लक्षणमाह—

उद्गारशुद्धिरुत्साहो वेगोत्सर्गो यथोचितः । लघुता क्षुत्पिपासा च जीर्णाहारस्य लक्षणम्॥११९॥

अथाहारस्थानमाह—

आहारं तु रहः कुर्यान्निहारमपि सर्वदा । उभाभ्यां लक्ष्म्युपेतः स्यात्प्रकाशे हीयते श्रिया ॥१२०॥

* निहारो = मलमूत्रोत्सर्गः ॥ १२० ॥

अन्यच्च—

आहारनिहारविहारयोगाः सदैव सद्भिर्विजने विधेयाः ॥ १२१ ॥

अथ भोजनकाले शुभाशुभदृष्टिमाह—

पितृमातृसुहृद्वैद्यपाकहृद्धंसबर्हिणाम् । सारसस्य चकोरस्य भोजने दृष्टिरुत्तमा ॥ १२२ ॥

दीनहीनक्षुधाऽऽर्त्तानां पापपाषण्डरोगिणाम् । कुक्कुटादेः शुनो दृष्टिर्भोजने नैव शोभना ॥१२३॥

अथ भोजनपात्रमाह—

दोषहृद् दृष्टिदं पथ्यं हैमं भोजनभाजनम् । रौप्यं भवति चक्षुष्यं पित्तहृत्कफवातकृत् ॥१२४॥

कांस्यं बुद्धिप्रदं रुच्यं रक्तपित्तप्रसादनम् । पैत्तलं वातकृद्रूक्षमुष्णं कृमिकफप्रणुत् ॥ १२५ ॥

आयसे काचपात्रे च भोजनं सिद्धिकारकम् । शोथपाण्डुहरं बल्यं कामलाऽपहमुत्तमम् ॥१२६॥

शैलेये मृण्मये पात्रे भोजनं श्रीनिवारणम् । दारुजे विशेषेण रुचिदं श्लेष्मकारि च ॥

पात्रं पत्रमयं रुच्यं दीपनं विषपापनुत् ॥ १२७ ॥

अथ जलपात्रमाह—

जलपात्रं तु ताम्रस्य तदभावे मृदो हितम् ॥ १२८ ॥

पवि ' शीतलं पात्रं रचितं स्फटिकेन यत् । काचेन रचितं तद्वत्तथा वैडूर्यसम्भवम् ॥ १२९ ॥

अथ भोजने प्रथमभोज्यपदार्थमाह—

भोजनाग्रे सदा पथ्यं लवणार्द्रकभक्षणम् । अग्निसन्दीपनं रुच्यं जिह्वाकण्ठविशोधनम् ॥१३०॥

* ननु लवणस्य पित्तजनकत्वाद् ; आर्द्रकस्य कटुकत्वेन पित्तलत्वाद् ; बुभुक्षितस्य वृद्धपित्तस्य कथं प्रथमं लवणार्द्रकभक्षणमुचितम् ? उच्यते—

"लवणं सैन्धवं ज्ञेयं चन्दनं रक्तचन्दनम्" ।

इति वचनाल्लवणमत्र सैन्धवं, तत् त्रिदोषघ्नम् ।

यत आह गुणग्रन्थे—

सैन्धवं लवणं स्वादु दीपनं पाचनं लघु । स्निग्धं रुच्यं हिमं वृष्यं सूक्ष्मं नेत्र्यं त्रिदोषहृत् ॥१॥

* आर्द्रकं तु कटुकमपि न पित्तविरोधि मधुरपाकित्वाद् । यत आह तत्रैव—

आर्द्रिका भेदिनी गुर्वी तीक्ष्णोष्णा दीपनी च सा । कटुका मधुरा पाके सूक्ष्मा वातकफापहा ॥२॥

* अथ चान्यदपि-लवणमार्द्रकं च नात्र पित्तविरोधि संयोगस्वभावात् । संयोगस्वरूपं चैतादृशम् । भोजनस्य पूर्वं लवणार्द्रकभक्षणबोधकवचनमेव प्रमाणयति ॥ १३० ॥

अथ भोजनादौ दृष्टिदोषविनाशाय ब्रह्मादीनां स्मरणमाह, तद्यथा—

अन्नं ब्रह्मा रसो विष्णुर्भोक्ता देवो महेश्वरः । इति सञ्चिन्त्य भुञ्जानं दृष्टिदोषो न बाधते ॥१३१॥

अञ्जनागर्भसम्भूतं कुमारं ब्रह्मचारिणम् । दृष्टिदोषविनाशाय हनुमन्तं स्मराम्यहम् ॥ १३२ ॥

अथ भोजनक्रममाह—

अश्नीयात्तन्मना भूत्वा पूर्वं तु मधुरं रसम्। मध्येऽम्ललवणौ पश्चात्कटुतिक्तकषायकान्॥१३३॥
फलान्यादौ समश्नीयाद्दाडिमादीनि बुद्धिमान्। विना मोचफलं तद्वद् वर्जनीया च कर्कटी १३४
मृणालबिसशालूककन्देक्षुप्रभृतीनपि। पूर्वमेव हि भोज्यानि न तु भुक्त्वा कदाचन॥ १३५ ॥

* मृणालं,=पद्मनालं, बिसं=बिससञ्ज्ञकम्। शालूककन्दः-प्रसिद्धः ॥ १३५ ॥

गुरु पिष्टमयं द्रव्यं तण्डुलान्पृथुकानपि। न जातु भुक्तवान्खादेन्मात्रां खादेद् बुभुक्षितः ॥१३६॥
घृतपूर्वं समश्नीयात्कठिनं प्राक् ततो मृदु। अन्ते पुनर्द्रवाशी तु बलारोग्येण मुञ्चति ॥१३७॥

* अयमर्थः-प्राग् घृतपूर्वं कठिनं समश्नीयाद् यथा काश्यादिवासिनः प्रथमं सव्यञ्जनां घृतपूर्वां रोटिकां भुञ्जन्ते, ततो मृदु ससूपादि ओदनं भुञ्जन्ते, अन्ते पुनर्द्रवाशिनः, भोजनान्ते दधितक्रदुग्धादि भुञ्जन्ते ॥ १३७ ॥

अथ स्वाद्वन्नस्य लक्षणमाह—

यद्यत्स्वादुतरं तत्तद्विदध्यादुत्तरोत्तरम्। भुक्त्वा यत्प्रार्थ्यते भूयस्तदुक्तं स्वादु भोजनम्॥१३८

अथ स्वाद्वन्नस्य गुणमाह—

सौमनस्यं बलं पुष्टिमुत्साहं बुद्धिमायुषः। स्वादु सञ्जनयत्यन्नमस्वादु च विपर्ययम् ॥ १३९ ॥

अथात्युष्णान्नादिभोजने दोषानाह—

अत्युष्णान्नं बलं हन्ति शीतं शुष्कंच दुर्जरम्।अतिक्लिन्नं ग्लानिकं युक्तियुक्तं हि भोजनम् १४०

अथातिद्रुतविलम्बिताशनयोर्दोषानाह—

अतिद्रुताश्निताहारे गुणान्दोषान्न विन्दति। भोज्यं शीतमहृद्यं च स्याद्विलम्बितमश्नतः १४१

अथ गुर्वन्नं त्रिविधं तन्निवारयन्माह—

मन्दानलो नरो द्रव्यं मात्रागुरु विवर्जयेत्। स्वभावतश्च गुरु यत्तथा संस्कारतो गुरु ॥ १४२ ॥
मात्रागुरुस्तु मुद्गादिर्माषादिः प्रकृतेर्गुरुः। संस्कारगुरु पिष्टान्नं प्रोक्तमित्युपलक्षणम्॥ १४३ ॥

अथाहारस्य षाड्विध्यमाह—

आहारं षड्विधं चूष्यंपेयं लेह्यं तथैव च। भोज्यं भक्ष्यं तथा चर्व्यं गुरु विद्याद्यथोत्तरम् ॥१४४॥

* चूष्यम्=इक्षुदाडिमादि, पेयं=पानकशर्करोदकादि, लेह्यं=रसालाकथिताऽऽदि कथिता 'कढ़ी' इति लोके। भोज्यं=भक्तसूपादि, भक्ष्यं=लड्डुकमादकादि, चर्व्यं=चिपिटचणकादि ॥ १४४ ॥

अथ स्वभावगुरुसंस्कारगुरुणोः स्वभावलघुनश्च भक्ष्यस्य भोजनपरिमाणमाह—

गुरूणामर्धसौहित्यं लघूनां तृप्तिरिष्यते। द्रवो द्रवोत्तरश्चापि न मात्रागुरुरिष्यते ॥ १४५ ॥

* अयमर्थः—माषपिष्टान्नादिभिरर्धसौहित्यं कर्त्तव्यं, मुद्गादिभिः स्वभावादेव लघुभिर्मात्रया तृप्तिः कर्तव्येत्यर्थः। द्रवः=पेयादिः, द्रवोत्तरः=तक्राधिक ओदनादिः, मात्रातोऽधिकोऽपि मात्रागुरुर्न मन्तव्यः, पेयस्य सर्वतो लघुत्वात् ॥ १४५ ॥

* उक्तं च सुश्रुतेन—

पेयलेह्यादिभक्ष्याणां गुरुविद्याद्यथोत्तरम् ॥ ३ ॥

पेयं=पेयाऽऽदि । लेह्यं=रसालाऽऽदि । आदिशब्दाद्भोज्यमोदनसूपादि । भक्ष्यं= मोदकादि ॥ ३ ॥ १४५ ॥

द्रवाढ्यमपि शुष्कं तु सम्यगेवापपच्यते ॥ १४६ ॥

* अयमर्थः—शुष्कमपि स्रोतोरोधकमपि द्रवाढ्यं सम्यक्पाकं याति ॥ १४६ ॥

अथ केवलस्य शुष्कान्नस्य दोषमाह—

विशुष्कमन्नमभ्यस्तं न पाकं साधु गच्छति ॥ १४७ ॥

अपक्वं नतिकिम्भवतीत्यपेक्षायामाह—

पिण्डीकृतमसंक्लिन्नं विदाहमुपगच्छति ॥ १४८ ॥

* पिण्डीकृतमष्ठीलावद्भूतम् । असंक्लिन्नं=न सम्यगार्द्रम् । विदाहमुपगच्छति=वि- दग्धं भवतीत्यर्थः ॥ १४८ ॥

अथ शुष्कादीनां वैगुण्यमाह—

शुष्कं विरुद्धं विष्टम्भि वह्निव्यापादकृद्भवेत् ॥ १४९ ॥

* शुष्कं=चिपिटकादि, विरुद्धं=क्षीरमत्स्यादि, विष्टम्भि=चणकमसूरादि, वह्निव्यापा- दकृत्=वह्निमान्द्यं कुर्यात् ॥ १४९ ॥

अथ सक्तुभक्षणविधिमाह—

न भुक्त्वा न रदैश्छित्त्वा न निशायां न वा बहून् । न जलान्तरितानद्भिः सक्तूनद्यान्न केवलान् ॥१५०

अथ सक्तुभक्षणे वर्जनीयानि सप्त कर्माण्याह—

पुनर्दानं पृथक्पानं,सामिषं पयसा निशि । दन्तच्छेदनमुष्णं च सप्त सक्तुषु वर्जयेत् ॥ १५१ ॥

सुश्रुतः—

सक्तूनामाशु जीर्येत मृदुत्वादवलेहिका ॥ १५२ ॥

अथ विषमाशनस्य लक्षणमाह—

अथाकालेऽतिमात्रं यत् तद्भवेद्विषमाशनम् । बहु स्तोकमकाले वा ज्ञेयं तद्विषमाशनम् ॥१५३॥

अथ बहुनोऽल्पस्य भक्षितस्य दोषमाह—

आलस्यगौरवाटोपसादांश्च कुरुतेऽधिकम् । हीनमात्रं तनोः कार्श्यं करोति च बलक्षयम् ॥१५४॥

* अधिकम्=अन्नमिति यावत् ॥ १५४ ॥

अथाकाले भुक्तस्य दोषमाह—

अप्राप्तकाले भुञ्जानो ह्यसमर्थतनुर्नरः । तांस्तान् व्याधीनवाप्नोति मरणं चाधिगच्छति॥१५५॥

* अप्राप्तकाले कालादतिप्राग् भुञ्जानोऽसमर्थशरीरो भवति । तथा सति तांस्तान् व्या- धीन् शिरोव्यथाविषूचिकाऽलसकविलम्बिकाऽऽद्यान् प्राप्नोति, तेषामाधिक्ये मरणमपि प्रा- प्नोतीत्यर्थः ॥ १५५ ॥

अथ भोजनकालेऽतीते सति भोजनकरणे दोषानाह—

कालेऽतीतेऽश्नतो जन्तोर्वायुनोपहतेऽनले । कृच्छ्राद्विपच्यते भुक्तं न स्याद्भोक्तुं पुनःस्पृहा। १५६

अथ भोजनप्रमाणमाह—

कुक्षेर्भागद्वयं भोज्यैस्तृतीये वारि पूरयेत्। वायोः सञ्चारणार्थाय चतुर्थमवशेषयेत् ॥
रसेनान्नस्य रसना प्रथमेनोपतर्पिता। न तथा स्वादमाप्नोति ततः शोध्याऽम्बुनाऽन्तरा ॥१५७॥

अथाम्बुपानानम्बुपानयोर्निषेधपूर्वकं मुहुर्मुहुः स्वल्पमात्रया वारिपानमाह—

अत्यम्बुपानान्न विपच्यतेऽन्नमनम्बुपानाच्च स एव दोषः।
तस्मान्नरो वह्निविवर्धनाय मुहुर्मुहुर्वारि पिबेदभूरि ॥ १५९ ॥

अथ भुक्तस्यादौ मध्येऽन्ते च जलपानस्य फलान्याह—

भुक्तस्यादौ जलं पीतं कार्श्यमन्दाग्निदोषकृत्। मध्येऽग्निदीपनं श्रेष्ठमन्ते स्थौल्यकफप्रदम्॥१५९

* भुक्तं=भोजनम् ॥ १५९ ॥

अन्यच्च वाग्भटे—

समस्थूलकृशा भुक्तमध्यान्तप्रथमाम्बुपाः ॥ १६० ॥

अथ तृषितक्षुधितयोः क्रमेण भोजनजलपानयोः सहेतुकं निषेधमाह—

तृषितस्तु न चाश्नीयात्क्षुधितो न पिबेज्जलम्। तृषितस्तु भवेद् गुल्मी क्षुधितस्तु जलोदरी १६१

अथ भोजनस्यादौ मध्येऽन्ते च मधुरादिपदार्थानां भोजनविधिं वर्णयन्

भोजनान्ते दुग्धपानविधिं सोपपत्तिकमाह—

ननु शिष्टा भोजनान्ते दुग्धं पिबन्ति तत्कथमुचितं? यतस्त्रिधा विभक्तस्य भोजनकालस्य प्रथमो भागो वातस्य, द्वितीयः पित्तस्य तृतीयः कफस्य।

अत एवाह—

अश्नीयात्तन्मना भूत्वा पूर्वं तु मधुरं रसम्। मध्येऽम्ललवणौ पश्चात्कटुतिक्तकषायकान् ॥१६२॥

* अस्यायमभिप्रायः-भोजने पूर्वं भुक्तो मधुरो रसो बुभुक्षितस्य वातपित्तयोः शमको भवति। भोजनमध्ये भुक्तावम्ललवणौ पित्ताशये च वह्निवृद्धिं कुरुतः। भोजनान्तसमये भुक्ताः कटुतिक्तकषायरसाः कफं शमयन्तीति ॥ १६२ ॥

अतो भोजनावसानसमयस्य कफकालत्वात् तत्र कथं श्लेष्मजनकं दुग्धं पातुमुचितं भवति

यत उक्तम्—

दुग्धं स्वादुरसं स्निग्धमोजस्यं धातुवर्धनम्। वातपित्तहरं वृष्यं श्लेष्मलं गुरुशीतलम्। इति१६३

उच्यते—

विदाहीन्यन्नपानानि यानि भुङ्क्ते हि मानवः। तद्विदाहप्रशान्त्यर्थं भोजनान्ते पयः पिबेत् १६४

तथा च ब्रह्मपुराणे—

कुर्यात्क्षीरान्तमाहारं न दध्यन्तं कदाचन। इति।

लवणाम्लकटूष्णानि विदाहीन्यपि यानि तु। तद्दोषं हर्तुमाहारं मधुरेण समापयेत् ॥ १६५ ॥

* भोजनावसानसमये दुग्धादिमधुरभोजनेनैव वर्धितः कफो लवणाम्लकटुभोजनजनितपित्तस्य वृद्धिं विनाशयति; पित्तवृद्धिविनाशनेन कफस्यापि वृद्धिस्तु क्षीणा भवति; क्षीणा कफवृद्धिरग्निमान्द्यादीन् व्याधीनुत्पादयितुं न शक्नोति ॥ १६५ ॥

ननु शत्रोर्नाशनेन शत्रुहन्तुर्वृद्धिर्दृश्यते न तु क्षीणता, तत् कथं कफः क्षीयत इति ? उच्यते—बलवच्छत्रुविनाशनेन शत्रुहन्तुः क्षीणता च दृश्यते ।

तथा च—

नाशनात्प्रत्यनीकस्य स्वयं च क्षीयते यथा । वह्निस्तत्सलिलोहस्य तस्तर्त नाशयेज्जलम् ॥१६६॥

नतु भोजनावसानसमये भुक्ताः कटुतिक्तकषायरसाः कफं नाशयिष्यन्ति वातस्य वृद्धिं विधास्यन्तीति चेत्, तन्न ; कट्वादीनां क्षीणशक्तिकत्वात् ।

तथा च—

यदेकं नाशयेद्दोषं तदन्यं वर्धयेत्कुतः । नाशने ह्येकदोषस्य यतस्तत्क्षीणशक्तिकम् ॥ इति ॥१६७॥

* वस्तुतो य एव रसः प्राचुर्येण भुक्तस्तस्यैव सर्वे रसा वश्या भवन्ति ।

यत आह सुश्रुतः—

जग्धाःसर्वेऽपिगच्छन्ति बलिनो वश्यतां रसाः । यथा प्रकुपिता दोषा वशं यान्ति बलीयसः१६८

* बलिनः—रसस्य ; बलीयसः—दोषस्य ॥ १६८ ॥

अथाचमनविधिमाह—

एवं भुक्त्वा समाचामेद्रूक्षग्रहणपूर्वकम् । भोजने दन्तलग्नानि निर्हृत्या चमनं चरेत् ॥ १६९ ॥

दन्तान्तरगतं चान्नं शोधनेनाहरेच्छनैः । कुर्यादनिर्हृतं तद्धि मुखस्यानिष्टगन्धताम् ॥

दन्तलग्नमनिहार्यं लेपं मन्येत दन्तवत् । न तत्र बहुशः कुर्याद्यत्नं निर्हरणं प्रति ॥ १७० ॥

आचम्य जलयुक्ताभ्यां पाणिभ्यां चक्षुषी स्पृशेत् ।

भुक्त्वा पाणितलं घृष्ट्वा चक्षुषोर्यदि दीयते । अचिरेणैव तद्वारि तिमिराणि व्यपोहति ॥१७१॥

अथ भोजनान्तरक्रियामाह—

भुक्त्वा च संस्मरेन्नित्यमगस्त्यादीन्सुखावहान् ॥ १७२ ॥

विष्णुरात्मा तथैवान्नं परिणामश्च वै यथा । सत्येन तेन मद्भुक्तं जीर्यत्वन्नमिदं तथा ॥ १७३ ॥

अगस्तिरग्निर्वडवानलश्च भुक्तं ममान्नं जरयन्त्वशेषम् ।

सुखं च मे तत्परिणामसम्भवं यच्छन्त्वरोगं मम चास्तु देहम् ॥ १७४ ॥

अङ्गारकमगस्तिं च पावकं सूर्यमश्विनौ । पञ्चैतान्संस्मरेन्नित्यं भुक्तं तस्याशु जीर्यति॥१७५॥

इत्युच्चार्य स्वहस्तेन परिमार्ज्यं तथोदरम् । अनायासप्रदायीनि कुर्यात्कर्माण्यतन्द्रितः ॥१७६॥

* अतन्द्रितः—निरन्तरं जाग्रत् तिष्ठेत् न तु स्वप्यात् ।

"भुक्तमात्रस्य तु स्वप्नाद्धन्त्यग्निं कुपितः कफः" ॥ इति वचनात् ॥ १७६ ॥

अथ भोजनोपरि वातादीनां वृद्धिक्रममाह—

जीर्णेऽन्ने वर्धते वायुर्विदग्धे पित्तमेधते । भुक्तमात्रे कफश्चापि क्रमोऽयं भोजनोपरि ॥ १७७ ॥

* विदग्धे—किञ्चित्पक्वे किञ्चिदपक्वे ॥ १७७ ॥

अथ भुक्तमात्रे सञ्जातस्य कफस्य प्रतीकारमाह—

धूमेनापोह्य हृद्यैर्वा कषायकटुतिक्तकैः । पूगैः कर्पूरकस्तूरीलवङ्गसुमनःफलैः ॥ १७८ ॥

फलैः कटुकषायैर्वा मुखवैशद्यकारिभिः । ताम्बूलपत्रसहितैः सुगन्धैर्वा विचक्षणः ॥ १७९ ॥

* धूमेन — अगुर्वादिधूमेन, अपोह्य = कफं दूरीकृत्य, कषायकटुतिक्तकैः फलैः = कर्पूरकस्तूरीलवङ्गादिभिः, पूगैः = क्रमुकैः । सुमनः फलैः = जातीफलैः, कटुकषायैः = एलाहरीतक्यादिफलैः ॥ १७८-१७९ ॥

अथ ताम्बूलभक्षणसमयमाह—

रतौ सुप्तोत्थिते स्नाते भुक्ते वान्ते च सङ्गरे । सभायां विदुषां राज्ञां कुर्यात्ताम्बूलचर्वणम् १८०

अथ ताम्बूलगुणानाह—

ताम्बूलमुक्तं तीक्ष्णोष्णं रोचनं तुवरं सरम् । तिक्तं क्षारोषणं कामरक्तपित्तकरं लघु ॥१८१॥

वश्यं श्लेष्मास्यदौर्गन्ध्यमलवातश्रमापहम् । मुखवैशद्यसौगन्ध्यकान्तिसौष्ठवकारकम् ॥१८२॥

हनुदन्तमलध्वंसि जिह्वेन्द्रियविशोधनम् । मुखप्रसेकशमनं गलामयविनाशनम् ॥ १८३ ॥

अथ नवीनताम्बूलगुणमाह—

नवं तदेव मधुरं कषायानुरसं गुरु । बलासजननं प्रायः पत्रशाकगुणं स्मृतम् ॥ १८४ ॥

अथ वङ्गदेशोद्भवताम्बूलगुणानाह—

वङ्गदेशोद्भवं पर्णं परं कटुरसं सरम् । पाचनं पित्तजननमुष्णं कफहरं स्मृतम् ॥ १८५ ॥

अथ पुराणताम्बूलगुणानाह—

पर्णं पुराणमकटु क्षुल्लकं तनु पाण्डुरम् । विशेषाद् गुणवद्द्वेयमन्यद्धीनगुणं स्मृतम् ॥१८६॥

अथ पूगीफलगुणानाह—

पूगं गुरु हिमं रूक्षं कषायं कफपित्तनुत् । मोहनं दीपनं रुच्यमास्यवैरस्यनाशनम् ॥ १८७ ॥

पूगं स्याद् हृदमध्यं यस्त्विवन्नं वाऽपि त्रिदोषनुत् ॥ सरसं गुर्वभिष्यन्दितद् भृशं वह्निनाशनम् १८८

अथ खदिरसुधाताम्बूलगुणानाह—

खदिरः कफपित्तघ्नश्चूर्णं वातबलासनुत् । संयोगतस्त्रिदोषघ्नं सौमनस्यं करोति च ॥ १८९ ॥

मुखवैशद्यसौगन्ध्यकान्तिसौष्ठवकारकम् । प्रभाते पूगमधिकं मध्याह्ने खदिरं तथा ॥

निशासु चूर्णमधिकं ताम्बूलं भक्षयेत्सदा ॥ १९० ॥

अथ ताम्बूलपर्णाग्रमध्यादिभागापरित्यागे दोषानाह—

आयुरग्रे यशो मूले लक्ष्मीर्मध्ये व्यवस्थिता । तस्मादग्रं तथा मूलं मध्यं पर्णस्य वर्जयेत् ॥१९१॥

पर्णमूले भवेद्व्याधिः पर्णाग्रे पापसम्भवः । पर्णमध्यं हरत्यायुः शिरा बुद्धिविनाशिनी ॥१९२॥

अथ ताम्बूलस्य पीतद्वयं परित्यज्य तृतीयात्पीतादनुपातव्यमित्याह—

आद्यं विषोपमं पीतं द्वितीयं भेदि दुर्जरम् । तृतीयादनुपातव्यं सुधातुल्यं रसायनम् ॥१९३॥

अथाधिकताम्बूलभक्षणे दोषानाह—

ताम्बूलं नातिसेवेत न विरिक्तो बुभुक्षितः ॥ १९४ ॥

देहदृक्केशदन्ताग्निश्रोत्रवर्णबलक्षयः । शोषः पित्तानिलास्रं स्यादतिताम्बूलचर्वणात् ॥१९५॥

अथ ताम्बूलभक्षणानर्हजनानाह—

ताम्बूलं न हितं दन्तदुर्बलेक्षणरोगिणाम् । विषमूर्च्छामदार्तानां क्षयिणां रक्तपित्तिनाम् ॥१९६॥

अथ भोजनोत्तरं चङ्क्रमणगुणानाह—

भुक्त्वा शतपदं गच्छेच्छनैस्तेन तु जायते । अन्नसंघातशैथिल्यं ग्रीवाजानुकटीषु च ॥ १९७ ॥

अथ भोजनोत्तरमुपवेशनशयनादिफलान्याह—

भुक्त्वोपविशतस्तन्द्रा शयानस्य तु पुष्टता । आयुश्चङ्क्रममाणस्य मृत्युर्धावति धावतः॥१९८॥

* चङ्क्रममाणस्य=पदशतं शनैर्गच्छतः ॥ १९८ ॥

अथ भोजनान्तरं शयनरीतिमाह—

श्वासानष्टौ समुत्तानस्तान्द्विःपार्श्वे तु दक्षिणे । ततस्तद्द्विगुणान्वामे पश्चात्स्वप्याद्यथासुखम् १९९

अथ सर्वदा वामपार्श्वेन शयने हेतुमाह—

वामादिशायामनलोनाभेरूर्ध्वेऽस्ति जन्तूनाम् । तस्मात्तु वामपार्श्वे शयीत भुक्तप्रपाकार्थम्२००

अथ शयनचर्यामाह ।

तत्रादौ खट्वाऽऽदीनामुपरि शयनफलान्याह—

त्रिदोषशमनी खट्वा तूली वातकफापहा । भूशय्या बृंहणी वृष्या काष्ठपट्टी तु वातला॥ २०१ ॥

अन्यः पुनराह—

भूशय्या वातलाऽतीवरूक्षा पित्तास्रनाशिनी । सुशय्याशयनं हृद्यं पुष्टिनिद्राधृतिप्रदम् ॥

श्रमानिलहरं वृष्यं विपरीतमतोऽन्यथा ॥ २०२ ॥

अथ संवाहनगुणमाह—

संवाहनं मांसरक्तत्वक्प्रसादकरं परम् । प्रीतिनिद्राकरं वृष्यं कफवात श्रमापहम् ॥ २०३ ॥

अथ प्रवाताप्रवातसेवनगुणानाह—

स्वेदमूर्च्छापिपासाघ्नमप्रवातमतोऽन्यथा । प्रवातं रौक्ष्यवैवर्ण्यस्तम्भकृद्दाहपित्तनुत् ॥ २०४ ॥

सुखं प्रवातं सेवेत ग्रीष्मे शरदि चान्तरा । निर्वातमायुषे सेव्यमारोग्याय च सर्वदा ॥ २०५ ॥

अथ पूर्ववायुसेवनगुणदोषानाह—

पूर्वोऽनिलो गुरुःसोष्णःस्निग्धःपित्तास्रदूषकः । विदाही वातलः श्रान्तिकफशोषवतां हितः २०६

स्वादुः पटुरभिष्यन्दी त्वग्दोषार्शोविषक्रिमीन् । सन्निप तं ज्वरं श्वासमामवातं च कोपयेत् २०७

* स्वादुः=भक्ष्यद्रव्येषु बाहुल्येन मधुररसजनकः ॥ २०७ ॥

अथ दक्षिणपश्चिमपवनयोर्गुणदोषानाह—

दक्षिणः पवनः स्वादुः पित्तरक्तहरो लघुः । वीर्येण शीतलो बल्यश्चक्षुष्यो न तु वातलः ॥ २०८ ॥

पश्चिमः पवनस्तीक्ष्णः शोषणो बलहल्लघुः । मेदःपित्तकफध्वंसी प्रभञ्जनविवर्धनः ॥ २०९ ॥

अथोत्तरवायोर्गुणदोषानाह—

उत्तरो मारुतः शीतः स्निग्धो दोषप्रकोपकृत् । क्लेदनः प्रकृतिस्थानां बलदो मधुरो मृदुः ॥२१०॥

* दोषप्रकोपकृद्=आतुराणाम् ॥ २१० ॥

अथाग्नेयादिवायूनां गुणानाह—

आग्नेयो दाहकृद्रूक्षो नैर्ऋतो न विदाहकृत् । वायव्यस्तु भवेत्तिक्त ऐशानः कटुकः स्मृतः॥२११॥

विष्वग्वायुरनायुष्यः प्राणिनां बहुरोगकृत् । अतस्तं नैव सेवेत सेवितः स्यान्न शर्मणे ॥२१२॥

अथ व्यजनतालवृन्तादिभववायूनां गुणानाह—

व्यजनस्यानिलो दाहस्वेदमूर्च्छाश्रमापहः । तालवृन्तभवो वातस्त्रिदोषशमको मतः ॥ २१३ ॥
वंशव्यजनजस्तूष्णो रक्तपित्तप्रकोपणः । चामरो वस्त्रसम्भूतो मायूरो वेत्रजस्तथा ॥ २१४ ॥
एते दोषजितो वाताः स्निग्धा हृद्याः सुपूजिताः ॥ २१५ ॥

अथ दिवास्वापप्रतिषेधमाह—

दिवा स्वापं न कुर्वीत यतोऽसौ स्यात्कफावहः । ग्रीष्मवर्ज्येषु कालेषु दिवास्वप्नो निषिध्यते ॥

अथ दिवास्वापयोग्यजनानाह—

उचितो हि दिवास्वप्नो नित्यं येषां शरीरिणाम् । वातादयः प्रकुप्यन्ति तेषामस्वपतां दिवा २१७

व्यायामप्रमदाऽध्ववाहनरतान् क्लान्तानतीसारिणः
शूलश्वासवतस्तृषापरिगतान् हिक्कामरुत्पीडितान् ॥
क्षीणान् क्षीणकफान्शिशून्मदहतान्वृद्धान्रसाजीर्णिनो
रात्रौ जागरितान्नरान्निरशनान्कामं दिवा स्वापयेत् ॥ २१८ ॥

दिवा वा यदि वा रात्रौ निद्रा सात्मीकृता तु यैः । न तेषां स्वपतां दोषो जाग्रतां चोपजायते २१९

* स्वपतां = दिवा इति यावत् । जाग्रतां = रात्राविति शेषः ॥ २१९ ॥

अथ भोजनानन्तरं शयनफलमाह—

भोजनानन्तरं निद्रा वातं हरति पित्तहृत् । कफं करोति वपुषः पुष्टिं सौख्यं तनोति हि ॥ २२० ॥

अथ शयनमर्दनादीनां फलान्याह—

शयनं पित्तनाशाय वातनाशाय मर्दनम् । वमनं कफनाशाय ज्वरनाशाय लङ्घनम् ॥ २२१ ॥
आसीनं घूर्णितं यत्तु नाभिष्यन्दि न रूक्षणम् ॥ २२२ ॥

अथापरानप्युदरेऽन्नस्य संस्थापनहेतुमाह—

शब्दान् स्पर्शांश्च रूपाणि रसान्गन्धान्मनःप्रियान् । भुक्तवानपि सेवेत तेनान्नं साधु तिष्ठति२२३

* उदरे इति शेषः ॥ २२३ ॥

अथान्नस्योदरेऽस्थितिहेतूनाह—

शब्दः स्पर्शस्तथा रूपं रसो गन्धो जुगुप्सितः । भुक्तमप्रयतं चान्नमतिहास्यं च वामयेत्॥२२४॥

* अप्रयतमपवित्रम् ॥ २२४ ॥

अथान्यदपि वर्जनीयमाह—

शयनं चासनं चाति न भजेन्न द्रवाधिकम् । नाग्न्यातपौ न प्लवनं न यानं नापि वाहनम्२२५

* प्लवनं = बाहुभ्यां जलप्रतरणं, यानं = मार्गे चलनं, वाहनमश्वादि ॥ २२५ ॥

व्यायामं च व्यवायं च धावनं यानमेव च । युद्धं गीतं च पाठं च मुहूर्तं भुक्तवांस्त्यजेत्॥२२६॥

अथाजीर्णस्य हेतूनाह—

अत्यम्बुपानाद्विषमाशनाच्च सन्धारणात् स्वप्नविपर्ययाच्च ।

कालेऽपि सात्म्यं लघु चापि भुक्तमन्नं न पाकं भजते नरस्य ॥ २२७ ॥

* सन्धारणाद् = अधोवातमलमूत्रादीनाम् ॥ २२७ ॥

ईर्ष्याभयक्रोधसमन्वितेन लुब्धेन रुग्दैन्यनिपीडितेन ।

विद्वेषयुक्तेन च सेव्यमानमन्नं न सम्यक्परिपाकमेति ॥ २२८ ॥

अथाध्यशनलक्षणमाह—

अजीर्णे भुज्यते यत्तु तदध्यशनमुच्यते ॥ २२९ ॥

तन्निवारयन्नाह—

प्राग्भुक्ते चानले मन्दे द्विरह्नि न समाहरेत् ॥ २३० ॥

* अस्यायमर्थः—प्रातर्भुक्ते अजीर्णे सति अहन्येव पुनर्न भुञ्जीतेत्यर्थः । रात्रौ पुनस्तथाऽपि सति भुञ्जीतैव । अत आह सुश्रुत एव—

"प्रातराशे त्वजीर्णे तु सायमाशो न दुष्यति" इति ॥ २३० ॥

पूर्वे भुक्ते विदग्धेऽन्ने भुञ्जानो हन्ति पावकम् ॥ २३१ ॥

* अस्य त्वयमर्थः— पूर्वे भुक्ते रात्रिभुक्ते अन्ने विदग्धे किञ्चित् पक्वे किञ्चिदपक्वे प्रातर्भुञ्जानः पावकं हन्तीत्यर्थः ॥ २३१ ॥

अत आह—

सायमाशे त्वजीर्णे तु प्रातर्भुक्तं विषोपमम् इति ॥ २३२ ॥

अथ सायमाशाजीर्णे भोजनोपायमाह—

भवेद्यदि प्रातरजीर्णशङ्का तदाऽभयां नागरसैन्धवाभ्याम् ।

विचूर्णितां शीतजलेन भुक्त्वा भुञ्जीत चान्नं मितमन्नकाले ॥ २३३ ॥

अथ दिवास्त्रीसङ्गनिषेधमाह—

आयुःक्षयभयाद्विद्वान्नाह्नि सेवेत कामिनीम् । अवशो यदि सेवेत तदा ग्रीष्मवसन्तयोः॥२३४॥

* अवशः = अजितेन्द्रियः ॥ २३४ ॥

अथोपवेशनाटनादिगुणानाह—

आस्या वर्णकफस्थौल्यसौकुमार्यसुखप्रदा । अध्वा वर्णकफस्थौल्यसौकुमार्यविनाशनः॥२३५

यत्तु चङ्क्रमणं नातिदेहपीडाकरं भवेत् । तदायुर्बलमेधाऽग्निप्रदमिन्द्रियबोधनम् ॥ २३६ ॥

अथोष्णीषधारणगुणानाह—

उष्णीषं कान्तिकृत्केश्यं रजोवातकफापहम् । लघु तच्छस्यते यस्माद् गुरु पित्ताक्षिरोगकृत्॥२३७

अथोपानद्धारणगुणानाह—

उपानद्धारणं नेत्र्यमायुष्यं पादरोगहृत् । सुखप्रचारमोजस्यं वृष्यं च परिकीर्तितम् ॥ २३८ ॥

अथानुपानद्भ्यां पादाभ्यां चङ्क्रमणे दोषानाह—

पादाभ्यामनुपानद्भ्यां सदा चङ्क्रमणं नृणाम् । अनारोग्यमनायुष्यमिन्द्रियघ्नमदृष्टिदम् ॥२३९

अथ छत्रदण्डधारणगुणानाह—

छत्रस्य धारणं वर्षाऽऽतपवातरजोऽपहम् । हिमघ्नं हितमक्ष्णोश्च मङ्गल्यमपि कीर्तितम् ॥२४०॥

सत्त्वोत्साहबलस्थैर्यधैर्यतेजोविवर्धनम् । अवष्टम्भकरं चापि भयघ्नं दण्डधारणम् ॥ २४१ ॥

अथ शिविकाऽऽरोहणगुणानाह—

ऊर्ध्वाच्छादनसंयुक्ता शिविका सर्ववल्लभा । तस्यामारोहणं नृणां त्रिदोषशमकं मतम् ॥२४२॥
वातश्लेष्मगदार्त्तानामहिता श्रमकृत्तरिः । पित्तानिलकरो हस्ती लक्ष्म्यायुःपुष्टिवर्द्धनः ॥२४३॥
घोटकारोहणं वातपित्ताग्निश्रमकृन्मतम् । मेदोवर्णकफघ्नं च हितं तद्बलिनां परम् ॥ २४४ ॥

अथातपादीनां गुणानाह, तत्रादावातपच्छायासेवनयोर्गुणानाह

आतपः स्वेदमूर्च्छाऽस्रपित्ततृष्णाक्लमश्रमान् । दाहं विवर्णतां कुर्याद् देतांश्छाया व्यपोहति ॥२४५॥

अथ वृष्टिकुहेल्योः सेवनगुणानाह—

वृष्टिर्वृष्या हिमा बल्या निद्राऽऽलस्यविधायिनी । भयावहा मोहकरी कुहेलिः कफवातला२४६

* कुहेलिः = "कुआशा" इति लोके ॥ २४६ ॥

अथाग्निधूमयोः सेवनगुणानाह—

अग्निर्वातकफस्तम्भशीतवेपथुनाशनः । आमाभिष्यन्दशमनो रक्तपित्तप्रकोपणः ॥ २४७ ॥
सद्यः श्लेष्मकरो धूमो नेत्रयोरहितो भृशम् । शिरोगौरवकृच्चापि वातपित्तं च कोपयेत् ॥ २४८ ॥

अथ सदाचरणान्याह—

मैत्रीं सद्भिः समं कुर्यात्स्नेहं सत्सु तु सर्वथा । संसर्गं साधुभिः कुर्यादसत्सङ्गं परित्यजेत् ॥ २४९ ॥

* सत्सु = सज्जनेषु । सर्वथा = मनोवाक्कर्मभिः ॥ २४९ ॥

सेवेत देवभूदेववृद्धवैद्यनृपातिथीन् । विमुखान्नार्थिनः कुर्यान्नावमन्येत कानपि ॥ २५० ॥
गुरूणां सन्निधौ तिष्ठेत्सदैव विनयान्वितः । पादप्रसारणादीनि तत्र नैव समाचरेत् ॥ २५१ ॥
अपकारपरेऽपि स्यादुपकारपरः पुमान् । आत्मवत्सकलान्पश्येद्वैरिणो दूरतो वसेत् ॥ २५२ ॥
न कञ्चिदात्मनः शत्रुं नात्मानं कस्य चिद्रिपुम् । प्रकाशयेन्नापमानं न च निःस्नेहतां प्रभोः२५३
नात्मानमुदके पश्येन्न नग्नः प्रविशेज्जलम् । तथा नाज्ञातगाम्भीर्यं न हिंस्रप्राणिसेवितम् २५४
काले हितं मितं सत्यं संवादि मधुरं वदेत् । भुञ्जीत मधुरप्रायं स्निग्धं काले हितं मितम् ॥२५५॥
न रात्रौ दधि भुञ्जीत न च निर्लवणं तथा । नामुद्गसूपं नाक्षौद्रं न चाप्यघृतशर्करम् ॥ २५६ ॥
जनस्याशयमालक्ष्य यो यथा परितुष्यति । तं तथैवानुवर्त्तेत पराराधनपण्डितः ॥ २५७ ॥
नैकः सुखी न सर्वत्र विश्वस्तो न च शङ्कितः । नोद्यमे विरमेत्क्वापि हेतावीर्ष्येत्फले न तु ॥२५८॥

* हेतौ = फलहेतौ उद्यमे, फले = धनादौ ॥ २५८ ॥

वेगान्न धारयेज्जातु मनोवेगान्विधारयेत् । न पीडयेदिन्द्रियाणि न चैतानतिलालयेत् ॥ २५९ ॥
वर्षाऽऽतपादिषु च्छत्री दण्डी रात्रौ भयेषु च । सोपानत्कस्तनुं रक्षेद्विचरेद्युगमात्रदृक् ॥२६०॥

* युगमात्रदृग् = अग्रतो हस्तचतुष्टयमितां भूमिं पश्यन् ॥ २६० ॥

नदीं तरेन्न बाहुभ्यां नाग्निस्कन्धमभिव्रजेत् । सन्दिग्धनावं वृक्षं च नारोहेद् दुष्टयानकम् २६१

* दुष्टयानं = दुष्टगजघोटकादि ॥ २६१ ॥

नासंवृतमुखं कुर्यात्सभायां च विचक्षणः । कासं हासं तथोद्गारं जृम्भणं क्षवथुं तथा ॥२६२॥

नासिकां न विकुष्णीयान्नालीतोत्कटकः क्वचित् । नोर्ध्वजानुश्चिरन्तिष्ठेन्न नखेन लिखेद्भुवम् ॥
सम्मार्जनीरजो नैव देहे दद्यात्कदाचन । न नखेन तृणं छिन्द्यान्नोच्छिष्टो ब्राह्मणं स्पृशेत् ॥२६४॥
नोपरक्तं न चोद्यन्तं नास्तं यातं दिवाकरम् । सर्वथा न समीक्षेत न जले प्रतिबिम्बितम् ॥२६५॥
नेक्षेत् सततं सूक्ष्मं दीप्तामेध्याप्रियाणि च । पौरन्दरं धनुर्नैव दर्शयेत्कमपि क्वचित् ॥ २६६ ॥
नेच्छेद् बलवता युद्धं न भारं शिरसा वहेत् । गात्रं न वादयेत्केशान्हस्तेन धुनुयान्न च ॥२६७॥
न गच्छेत्पूज्ययोर्मध्ये दम्पत्योरन्तरेण च । द्विषोऽन्नं न भुञ्जीत गणिकाऽन्नमपि क्वचित् ॥२६८॥
प्रतिभूर्न भवेत्क्वापि न च साक्षी वृथा भवेत् ॥ २६९ ॥

* प्रतिभूः = ज़ामिन् ॥ २६९ ॥

छत्रागं न धारयेज्जातु द्यूतं दूरात् परित्यजेत् ॥ २७० ॥
विश्वासं नाचरेत्स्त्रीणां ताः स्वतन्त्रा न चारयेत् । रक्षणीयाः सदा यत्नाद्यौवने तु विशेषतः २७१
न भिन्ने शयने स्वप्यान्नानेकविवरेऽपि च । नैको देवालये नैव रात्रौ तरुतलेऽपि च ॥ २७२ ॥
एवं दिनानि गमयेत्सदाचारपरः सदा । ततो रात्रिप्रयुक्तानि कुर्यात्कर्माणि मानवः ॥ २७३ ॥
इत्याचारं समासेन भाषितं यः समाचरेत् । स विन्दत्यायुरारोग्यं प्रीतिं धर्मं धनं यशः ॥२७४॥

अथ सन्ध्यायां निषिद्धकर्माण्याह—

एतानि पञ्च कर्माणि सन्ध्यायां वर्जयेद् बुधः । आहारं मैथुनं निद्रां सम्पाठं गतिमध्वनि ॥२७५॥

अथ सन्ध्याकालिकनिषिद्धकर्माचरणे दोषानाह—

भोजनाज्जायते व्याधिर्मैथुनाद्गर्भवैकृतिः । निद्राया निःस्वता पाठादायुर्हानिर्गतेर्भयम् ॥२७६॥

**अथ रात्रिचर्यामाह** । तत्रादौ ज्योत्स्नाऽऽदीनां गुणानाह—

ज्योत्स्ना शीता स्मरानन्दप्रदा तृट्पित्तदाहहृत् । तंतो हीनगुणः कुर्यादवश्यायोऽनिलं कफम्
तमो भयावहं मोहदिङ्मोहजनकं भवेत् । पित्तहृत्कफहृत्कामवर्धनं कलमकृच्च तत् ॥ २७८ ॥

अथ रात्रौ भोजनस्य समयं परिमाणं चाह—

रात्रौ च भोजनं कुर्यात्प्रथमप्रहरान्तरे । किञ्चिदूनं समश्नीयाद् दुर्जरं तत्र वर्जयेत् ॥ २७९ ॥

अथ मैथुनमाह, तत्रादौ मैथुनेच्छायां सत्यामपि तदकरणे दोषानाह—

शरीरे जायते नित्यं देहिनः सुरतस्पृहा । अव्यवायान्मेहमेदोवृद्धिः शिथिलता तनोः ॥२८०॥

अथ स्त्रीणां बालाऽऽद्यवस्थानामवधिमाह—

बालेति गीयते नारी यावद्वर्षाणि षोडश । ततस्तु तरुणी ज्ञेया द्वात्रिंशद्वत्सरावधि ॥ २८१ ॥
तदूर्ध्वमधिरूढा स्यात्पञ्चाशद्वत्सरावधि । वृद्धा तत्परतो ज्ञेया सुरतोत्सववर्जिता ॥ २८२ ॥

* अधिरूढा = प्रौढा ॥ २८२ ॥

अथ बालाऽऽदिस्त्रीणां सेवनस्य समयं फलञ्चाह—

निदाघशरदोर्बाला हिता विषयिणां मता । तरुणी शीतसमये प्रौढा वर्षावसन्तयोः ॥ २८३ ॥
नित्यं बाला सेव्यमाना नित्यं वर्धयते बलम् । तरुणी ह्रासयेच्छक्तिं प्रौढोत्पादयते जराम् ॥२८४॥

अथ सेवनेन सद्यःप्राणकराणि द्रव्याण्याह—

सद्योमांसं नवं चान्नं बाला स्त्री क्षीरभोजनम् । घृतमुष्णोदके स्नानं सद्यः प्राणकराणि षट् ॥२८५॥

* प्राणशब्दोऽत्र बलवाचकः ॥ २८५ ॥

अथ सेवनेन सद्यःप्राणहराणि द्रव्याण्याह—

पूतिमांसं स्त्रियो वृद्धा बालाऽर्कस्तरुणं दधि । प्रभाते मैथुनं निद्रा सद्यःप्राणहराणि षट्॥२८६॥

*बालाऽर्कः=कन्याऽर्कः ॥ २८६ ॥

अथ वृद्धस्य तरुणीगमने तरुणस्य च वृद्धागमने फलमाह—

वृद्धोऽपि तरुणीं गत्वा तरुणत्वमवाप्नुयात् । वयोऽधिकां स्त्रियं गत्वा तरुणः स्थविरायते॥२८७॥

अथ नियमपूर्वकं स्त्रीगमने गुणानाह—

आयुष्मन्तो मन्दजरा वपुर्वर्णबलान्विताः । स्थिरोपचितमांसाश्च भवन्ति स्त्रीषु संयताः ॥२८८॥

अथर्तुभेदेन स्त्रीसेवनप्रकारमाह—

सेवेत कामतः कामं बलाद्वाजीकृतो हिमे । प्रकामं तु निषेवेत मैथुनं शिशिरागमे ॥ २८९ ॥

अथ वसन्तादिष्वृतुषु कियता कालेन स्त्रीसेवनं युक्तमित्याह—

त्र्यहाद्वसन्तशरदोः पक्षाद् वृष्टिनिदाघयोः ॥ २९० ॥

सुश्रुतस्तु—

त्रिभिस्त्रिभिरहोभिर्हि समेयात्प्रमदां नरः । सर्वेष्वृतुषु घर्मे तु पक्षात्पक्षाद् व्रजेद् बुधः॥२९१॥

* समेयात्=संगच्छेत् । घर्मे=ग्रीष्मे ॥ २९१ ॥

अथर्तुभेदेन स्त्रीसेवनसमयभेदमाह—

शीते रात्रौ दिवा ग्रीष्मे वसन्ते तु दिवा निशि । वर्षासु वारिदध्वाने शरत्सु सरसः स्मरः॥२९२॥

अथ स्त्रीसेवननिषिद्धसमयमाह—

उपेयात्पुरुषो नारीं संध्ययोर्न च पर्वसु । गोसर्गे चार्द्धरात्रे च तथा मध्यदिनेऽपि च ॥ २९३ ॥

अथ स्त्रीसेवनयोग्यस्थानमाह—

विहारं भार्यया कुर्याद् देशेऽतिशयसंवृते । रम्ये श्लाघ्याङ्गनागाने सुगन्धे सुखमारुते ॥ २९४ ॥

अथ स्त्रीसेवनायोग्यस्थानमाह—

देशे गुरुजनासन्ने विवृतेऽतित्रपाकरे । श्रूयमाणे व्यथाहेतुवचने न रमेत ना ॥ २९५ ॥

अथ स्त्रीसेवनकालिकपुरुषाणां वेषादिकमाह—

स्नातश्चन्दनलिप्ताङ्गः सुगन्धः सुमनोऽन्वितः । भुक्तवृष्यः सुवसनः सुवेषः समलङ्कृतः॥२९६॥

ताम्बूलवदनः पत्न्यामनुरक्तोऽधिकस्मरः । पुत्रार्थी पुरुषो नारीमुपेयाच्छयने शुभे ॥ २९७ ॥

अथ मैथुनानर्हपुरुषानाह—

अत्याशितोऽधृतिः क्षुद्वान्सव्यथाङ्गः पिपासितः ।
बालो वृद्धोऽन्यवेगार्त्तस्त्यजेद्रोगी च मैथुनम् ॥ २९८ ॥

*रोगी=मैथुनसंवर्जनीयरोगयुक्तः ॥ २९८ ॥

अथ मैथुनयोग्याः स्त्रिय आह—

भार्यां रूपगुणोपेतां तुल्यशीलां कुलोद्भवाम् । अतिकामोऽभिकामां तु हृष्टो हृष्टामलङ्कृताम् ॥
सेवेत प्रमदां युक्त्या वाजीकरणबृंहितः ॥ २९९ ॥

अथ मैथुनाऽयोग्याः स्त्रिय आह—

रजस्वलामकामां च मलिनामप्रियां तथा ॥ ३०० ॥

वर्णवृद्धां वयोवृद्धां तथा व्याधिप्रपीडिताम् । हीनाङ्गीं गर्भिणीं द्वेष्यां योनिरोगसमन्विताम्॥३०१

सगोत्रां गुरुपत्नीं च तथा प्रव्रजितामपि । नाधिगच्छेत् पुमान्नारीं भूरिवैगुण्यशङ्कया ॥३०२॥

अथ पुनर्विशेषेण रजस्वलागमने दोषानाह—

रजस्वलां गतवतो नरस्याऽनियतात्मनः । दृष्ट्यायुस्तेजसां हानिरधर्मश्च ततो भवेत् ॥ ३०३ ॥

अथ पुनर्विशेषेण लिङ्गिन्यादीनां स्त्रीणां गमने पर्वसु च स्त्रीगमने दोषमाह—

लिङ्गिनीं गुरुपत्नीं च सगोत्रामथ पर्वसु । वृद्धां च संध्ययोश्चापि गच्छतो जीवितक्षयः ॥३०४॥

*लिङ्गिनीं = प्रव्राजिताम् ॥ ३०४ ॥

अथ पुनर्विशेषेण गर्भिण्यादिषु गमने नकाद्ये वा सेवने च दोषानाह—

गर्भिण्यां गर्भपीडा स्याद्व्याधितायां बलक्षयः ॥ ३०५ ॥

हीनाङ्गीं मलिनां द्वेष्यां क्षामां वन्ध्यामसंवृते । देशेऽभिगच्छतो रेतः क्षीणं म्लानं मनो भवेत्॥३०६॥

*गर्भिणीं गर्भवासदिवसाद् द्वितीये मासि गर्भस्थितेरनिश्चये यथोक्तनक्षत्रादिलाभाभावे वा तृतीये मासि पुंसवने कृते नाभिगच्छेत ।

यतः पुंसवनानन्तरमाह व्यासः—

ततस्त्यजेन्नदीतीरं देवखातोदकं तथा । भर्त्तुः शय्यां मृतापत्यां तथैवामिषभोजनम् ॥ ४ ॥

* अन्यच्च—

आमिषस्याशनं यत्नात्प्रमदा परिवर्जयेत् । देवारामनदीयानं प्रयोगं पुरुषस्य च ॥५॥३०५-३०६८

अथ बुभुक्षितादीनां पुरुषाणां स्त्रीसंभोगे मध्याह्ने स्त्रीसेवने च दोषानाह—

क्षुधितः क्षुभितात्मा च मध्याह्ने तृषितोऽबलः । स्थितस्य हानिं शुक्रस्य वायोः कोपञ्च विन्दति३०७

अथ व्याधितस्य पुंसस्तथा प्रत्यूषादिसमये स्त्रीगमने दोषानाह—

व्याधितस्य रुजा प्लीहा मूर्च्छा मृत्युश्च जायते । प्रत्यूषे चार्धरात्रे च वातपित्ते प्रकुप्यतः ३०

अथ तिर्यगादियोनौ मैथुने दोषानाह—

तिर्यग्योनावयोनौ वा दुष्टयोनौ तथैव च । उपदंशस्तथा वायोः कोपः शुक्रसुखक्षयः ॥ ३०९ ॥

अथ मलमूत्रयोर्वेगावस्थायां मैथुने चलितशुक्रधारणे विपरीतमैथुने च दोषमाह—

उच्चारिते मूत्रिते च रेतसश्च विधारणे । उत्ताने च भवेच्छीघ्रं शुक्राश्मर्यास्तु सम्भवः ॥३१०॥

अथ पुनर्विशेषेणोपस्थितशुक्रधारणनिषेधमाह—

सर्वमेतत्त्यजेत्तस्माद्यतो लोकद्वयाहितम् । शुक्रं तूपस्थितं मोहान्न सन्धार्यं कदाचन ॥३११॥

अथ सुरतान्ते हितकराणि द्रव्याण्याह—

स्नानं सशर्करं क्षीरं भक्ष्यमैक्षवसंस्कृतम् । वातो मांसरसः स्वप्नः सुरतान्ते हिता अमी ॥३१२॥

अथातिव्यवायजान् रोगानाह—

शूलकासज्वरश्वासकार्श्यपाण्ड्वामयक्षयाः । अतिव्यवायाज्जायन्ते रोगाश्चाक्षेपकादयः॥३१३॥

अथ रात्रौ निद्राजागरणयोर्गुणानाह—

रात्रौ जागरणं रूक्षं कफदोषविषार्त्तिजित्। निद्रा तु सेविता काले धातुसाम्यमतन्द्रिताम्॥३१४॥
पुष्टिं वर्णं बलोत्साहं वह्निदीप्तिं करोति हि॥ ३१५॥

अथ सुखपूर्वकनिद्रालाभार्थमौषधमाह—

यो लेढि शयनसमये मधुमिश्रं बीजपूरदलचूर्णम्। स तु लज्जाकरवातप्रसरनिरोधात्सुखं स्वपिति३१६

अथोषःकाले जलपानगुणानाह—

सवितुःसमुदयकाले प्रसृतीः सलिलस्य पिबेदष्टौ। रोगजरापरिमुक्तो जीवेद्वत्सरशतं साग्रम्॥३१७॥

* अस्य जलपानस्योपक्रमकालो रात्रेश्चतुर्थप्रहरे प्रवेशः।

तथा च भोजः—

पिबति पर्युषितं जलमन्वहं तिमिरिणीचरमे प्रहरे यदि॥ ६॥ इति

* एतज्जलपानकालमर्यादा सूर्योदयातिसन्निहितप्राक्कालः।

तथा च तन्त्रान्तरे—

अम्भसः प्रसृतीरष्टौ रवावनुदिते पिबेत्। वातपित्तकफाञ्जित्वा जीवेद्वर्षशतं सुखी॥७॥ इति।

* सलिलस्यात्र पर्युषितस्य ग्रहणं भोजवचनानुरोधात्॥ ३१७॥

अर्शःशोथग्रहण्यो ज्वरजठरजराकुष्ठमेदोविकारा·
मूत्राघातास्रपित्तश्रवणगलशिरः श्रोणिशूलाक्षिरोगाः।
ये चान्ये वातपित्तक्षतजकफकृता व्याधयः सन्ति जन्तो·
स्तांस्तानभ्यासयोगादपहरति पयः पीतमन्ते निशायाः॥ ३१८॥

अथोषःकाले नासावारिपानगुणानाह—

विगतघननिशीथे प्रातरुत्थाय नित्यं पिबति खलु नरो यो घ्राणरन्ध्रेण वारि।
स भवति मतिपूर्णश्चक्षुषा तार्क्ष्यतुल्यो, वलिपलितविहीनः सर्वरोगैर्विमुक्तः॥ ३१९॥

* निशीथोऽत्र=निशाऽन्धकारः॥ ३१९॥

अथ नासाजलपाने जलपरिमाणमाह—

पातव्यं नासया नीरं प्रसृतित्रयमात्रया॥ ३२०॥

अथ पुनर्विशेषेण नासाजलपाने गुणानाह—

व्यङ्गवलीपलितघ्नं पीनसवैस्वर्यकासशोथहरम्। रजनीक्षयेऽम्बुनस्यं रसायनं दृष्टिसञ्जननम्३२१

अथ नासावारिपानानर्हजनानाह—

स्नेहे पीते क्षते शुद्धावाध्माने स्तिमितोदरे। हिक्कायां कफवातोत्थे व्याधौ तद्वारि वारयेत्

* तद्वारि=नासापेयम्॥ ३२२॥

## अथर्तुचर्यामाह।

तत्रादौ नामनिर्देशपूर्वकमृतुषट्कमाह—

चयकोपशमा यस्मिन्दोषाणां सम्भवन्ति हि। ऋतुषट्कं तदाख्यातं रवे राशिषु संक्रमात्॥३२३॥
ग्रीष्मो मेषवृषौ प्रोक्तः प्रावृण्मिथुनकर्कटौ। सिंहकन्ये स्मृता वर्षा तुलावृश्चिकयोः शरत्॥३२४॥

धनुर्ग्राहौ च हेमन्तो वसन्तः कुम्भमीनयोः ॥ ३२५ ॥

* मेषवृषौ रविणा संक्रान्तौ । एवं मिथुनकर्कटावित्यादि ॥ ३२४-३२५ ॥

अन्ये तु—

शिशिरः पुष्पसमयो ग्रीष्मो वर्षा शरद्धिमाः। माघादिमासयुग्मैः स्युर्ऋतवः षट् क्रमादमी ३२६

अथर्तुषट्कनामविषयकमतभेदे हेतुमाह—

गङ्गाया दक्षिणे देशे वृष्टेर्बहुलभावतः । इमौ मुनिभिराख्यातौ प्रावृड्वर्षाऽभिधावृतू ॥३२७॥

तस्या एवोत्तरे देशे हिमप्रचुरभावतः । एतावुभौ समाख्यातौ हेमन्तशिशिरावृतू ॥ ३२८ ॥

अथ दक्षिणोत्तरायणयोर्लक्षणं गुणांश्चाह—

उत्तरायणमाद्यैस्तैः परैः स्याद्दक्षिणायनम् । आद्यमुष्णं बलहरं ततोऽन्यद् बलदं हिमम् ॥३२९॥

अथ ऋतूनां गुणदोषानाह—

हेमन्तः शीतलः स्निग्धःस्वादुर्जठरवह्निकृत् । शिशिरःशीतलोऽतीव रूक्षो वाताग्निवर्धनः॥३३०॥

* हेमन्तः स्वादुः प्रायेण द्रव्येषु स्वादुरसजनकः । एवमन्यत्रापि बोद्धव्यम् ॥ ३३० ॥

वसन्तो मधुरः स्निग्धः श्लेष्मवृद्धिकरश्च सः । ग्रीष्मो रूक्षोऽतिकटुकः पित्तकृत्कफनाशनः॥३३१॥

वर्षाः शीता विदाहिन्यो वह्निमान्द्यानिलप्रदाः। शरदुष्णा पित्तकर्त्री नृणां मध्यबलावहा॥३३२॥

अथ कस्मिन्नृतौ कस्य दोषस्य चयप्रकोपोपशमा भवन्तीति सहेतुकमाह—

चयप्रकोपोपशमा वायोर्ग्रीष्मादिषु त्रिषु । वर्षाऽऽदिषु च पित्तस्य श्लेष्मणः शिशिरादिषु॥३३३॥

चीयते लघुरूक्षाभिरोषधीभिः समीरणः । तद्विधस्तद्विधे देहे कालस्यौष्ण्यान्न कुप्यति ॥३३४॥

* तद्विधो रूक्षो लघुश्च । तद्विधे रूक्षे लघौ च ॥ ३३४ ॥

अद्भिरम्लविपाकाभिरोषधीभिश्च तादृशम् । पित्तं याति चयं कोपं न तु कालस्य शैत्यतः ॥३३५॥

* तादृशम् = अम्लविपाकम् ॥ ३३५ ॥

चीयते स्निग्धशीताभिरुदकौषधिभिः कफः । तुल्ये च काले देहे च स्कन्नत्वान्न प्रकुप्यति॥३३६॥

* तुल्येऽपि काले स्निग्धे शीतले च । स्कन्नत्वाद् =देहे शुष्कत्वात् ॥ ३३६ ॥

हिमे याति शमं पित्तं वायुः श्लेष्मा च चीयते। स वायुः शिशिरे कोपं यात्येवोपचितःकफः॥३३७॥

हेमन्ते सञ्चितः श्लेष्मा शिशिरे त्वतिचीयते। शीतस्निग्धगुरुद्रव्यैः शैत्यस्कन्नो न कुप्यति॥३३८॥

* स्कन्नः = कठिनीभूतः ॥ ३३८ ॥

इति कालस्वभावोऽयमाहारादिवशात्पुनः। चयादीन्यान्ति सद्योऽपि दोषाः काले विशेषतः ३३९

* चयादीन् चयकोपशमान् पूर्वाह्णे वसन्तस्य लिङ्गम् , मध्याह्ने ग्रीष्मस्य अपराह्णे प्रावृषः, प्रदोषे वार्षिकम् । शारदमर्धरात्रे, प्रत्यूषसि हैमन्तमुपलक्षयेद् । एवमहोरात्रमपि वर्षमिव शीतोष्णवर्षादिलक्षणं दोषोपचयप्रकोपोपशमैर्जानीयादिति सुश्रुतः ॥ ३३९ ॥

अथाकाले दोषवृद्धिमाह—

चयकोपशमान्दोषा विहाराहारसेवनैः । समानैर्यान्त्यकालेऽपि विपरीतैर्विपर्ययम् ॥३४०॥

* समानैः=तुल्यैः चयादियोग्यैरिति यावद् । विपर्ययं कालेऽपि वैपरीत्यं बोध्यम् ३४०

अथ दोषचयलक्षणमाह सुश्रुतः—

स्वस्थानस्थस्य दोषस्य वृद्धिः स्यात्स्तब्धकोष्ठता। पीतावभासता वह्निमन्दता चाङ्गगौरवम्॥३४१॥
आलस्यं चयहेतौ तु द्वेषश्च चयलक्षणम्। सञ्चयेऽपहृता दोषा लभन्ते नोत्तरां गतिम्॥३४२॥
ते तूत्तरासु गतिषु भवन्ति बलवत्तराः॥ ३४३॥

अथ वर्षर्तौ नियमानाह—

वर्षासु प्रबलो वायुस्तस्मात्मिष्टादयस्त्रयः। रसाः सेव्याः विशेषेण पवनस्योपशान्तये॥३४४॥
* मिष्टादयस्त्रयः=मधुराम्ललवणाः॥ ३४४॥
अवेद्वर्षासु वपुषः क्लिन्नत्वं यद्विशेषतः। तत्क्लेदशान्तये सेव्या अपि कट्वादयस्त्रयः॥३४५॥
* कट्वादयस्त्रयः=कटुतिक्तकषायाः॥ ३४५॥
स्वेदनं मर्दनं सेव्यं दध्युष्णं जाङ्गलामिषम्। शालयो यवगोधूमा जलं कौपं जलं च्युतम्॥३४६॥
न भजेत्पूर्वपवनं वृष्टिं घर्मं हिमं श्रमम्। नदीतीरं दिवास्वप्नं रूक्षं नित्यं च मैथुनम्॥३४७॥

अथ शरदृतौ नियमानाह—

सर्पिः स्वादुकषायतिक्तकरसा यच्छीतलं यल्लघु क्षीरं स्वच्छसितैक्षवः पटुरसः स्वल्पं पलं जाङ्गलम्।
गोधूमा यवमुद्गशालिसहिता नादेयमंशूदकं चन्द्रश्चन्दनमिन्दुरादिरजनी माल्यं पटो निर्मलः॥३४८॥

* अथांशूदकलक्षणमाह—

* दिवसेऽर्ककरैर्जुष्टं निशि शीतकरांशुभिः। ज्ञेयमंशूदकं नाम स्निग्धं दोषत्रयापहम्॥ ८॥
अत्र समग्रदिवसप्राप्त्यर्थं दिवापदमेवं निशापदं च॥ ८॥
* चन्द्रः=कर्पूरः॥ ३४८॥

विश्रामः सुहृदां गणेषु मधुरा वाचः सरःक्रीडनं पित्तानां च विरेचनं बलवतो युक्तं शिरामोक्षणम्।
एतान्यत्र घनावसानसमये पथ्यानि मुञ्चेद्दधिव्यायामाम्लकटूष्णतीक्ष्णदिवसस्वप्नं हिमं चातपम्॥
इक्षवः शालयो मुद्गाः सरोऽम्भः क्वथितं पयः। शरद्येतानि पथ्यानि प्रदोषे चेन्दुरश्मयः॥३५०॥

अथ हेमन्तर्तौ नियमानाह—

प्रातर्भोजनमम्लमिष्टलवणानभ्यङ्गघर्मश्रमान् गोधूमैक्षवशालिमाषपिशितं पिष्टं नवान्नं सिताम्।
कस्तूरीं वरकुङ्कुमागुरुयुतामुष्णाम्बु शौचं तथा स्निग्धं स्त्रीषु सुखं गुरूष्णवसनं सेवेत हेमन्तके ३५१

अथ शिशिरर्तौ नियमानाह—

शिशिरे शीतमधिकं रौक्ष्यं चादानकालजम्। विशेषतस्ततस्तत्र हेमन्तस्य मतो विधिः॥३५२॥

अथ वसन्तर्तौ नियमानाह—

वान्ति नस्यमथाभयां च मधुना व्यायाममुद्वर्त्तनं संसेवेत मधौ कफघ्नकवलं शूल्यं पलं जाङ्गलम्।
गोधूमान्बहुशालिभेदसहितान्मुद्गान्यवान्षष्टिकां ल्लेपश्चन्दनकुङ्कुमागुरुकृतं रूक्षं कटूष्णं लघु३५३
मिष्टमम्लं दधि स्निग्धं दिवास्वप्नं च दुर्जरम्। अवश्यायमपि प्राज्ञो वसन्ते परिवर्जयेत्॥३५४॥

अथ ग्रीष्मर्तुनियमानाह—

स्वादुस्निग्धहिमं लघु द्रवमयं द्रव्यं रसालां सितां सक्तुक्षीरमजाङ्गलानि सितया शालिं रसं मांसजम्।
शीतांशुं शयनं दिवा मलयजं शीतं पयः पानकं सेवेतोष्णदिने त्यजेत्तु कटुकक्षाराम्लघर्मश्रमान् ३५५।

अथ पूर्वोक्तर्तुचर्याऽऽचरणे फलमाह—

ऋतुष्वेषु च एतैस्तु विधिभिर्वर्तते नरः । दोषानृतुकृतान्नैव लभते स कदाचन ॥ ३९६ ॥

इति श्रीलटकनतनयश्रीमन्मिश्रभावविरचिते भावप्रकाशे दिनचर्याऽऽदिप्रकरणं पञ्चमम् ॥ ५ ॥

# अथ षष्ठं वर्गप्रकरणम् ॥ ६ ॥

## तत्र प्रथमो मिश्रवर्गः ॥ १ ॥

अथ व्याधेर्लक्षणं, तत्र वाग्भटः—

रोगस्तु दोषवैषम्यं दोषसाम्यमरोगता । रोगा दुःखस्य दातारो ज्वरप्रभृतयो हि ते ॥१॥

ते च स्वाभाविकाः केचित्केचिदागन्तवः स्मृताः ।
मानसाः केचिदाख्याताः कथिताः केऽपि कायिकाः ॥ २ ॥

* तत्र स्वाभाविकाः=शरीरस्वभावादेव जाताः क्षुत्पिपासाबुभुक्षिजरामृत्युप्रभृतयः, अथवा स्वभावादुत्पत्तेर्जाताः स्वाभाविकाः=सहजा इति यावत्, ते च जन्मान्धत्वादयः । आगन्तवोऽभिघातादिजनिताः, अथवा जन्मोत्तरभाविनः । मानसाः=कामक्रोधलोभमोहभयाभिमानदैन्यपैशुन्यशोकविषादेर्ष्याऽसूयामात्सर्यप्रभृतयः, अथवा=उन्मादापस्मारमूर्च्छाभ्रममोहतमःसंन्यासप्रभृतयः । कायिकाः=पाण्डुरोगप्रभृतयः ॥ २ ॥

अथ व्याधिभेदानाह—

कर्मजाःकथिताः केचिद्दोषजाः सन्ति चापरे । कर्मदोषोद्भवाश्चान्ये व्याधयस्त्रिविधाःस्मृताः॥३॥

तत्र कर्मजान्व्याधीनाह—

* यत् प्राक्तनं दुष्कर्म प्रबलं केवलभोगनाश्यम् , प्रायश्चित्तनाश्यं वा, ततो जाताः, न तु दुष्टवातादिदोषेण जनितास्तथा—

यथाशास्त्रंतु निर्णीतो यथाव्याधिचिकित्सितः । न शमं याति यो व्याधिःस ज्ञेयः कर्मजो बुधैः१

अथ दोषजान्व्याधीनाह—

* दोषजाः-मिथ्याऽऽहारविहारप्रकुपितवातपित्तकफजाः । ननु मिथ्याऽऽहारविहारिणामपि प्राक्तनसुकृतेन नैरुज्यं दृश्यत एव । ततो दोषजेष्वपि प्राक्तनं दुष्कर्मैव कारणं, तत्कथं दोषजा इति ? उच्यते-दोषजेष्वपि वस्तुत आदिकारणं दुष्कर्म वर्त्तत एव, किन्तु तत्र मिथ्याऽऽहारविहारदूषिता दोषा हेतवो दृश्यन्त इति दोषजा इत्युच्यन्त इति समाधिः ।

अथ कर्मदोषोद्भवान् व्याधीनाह—

स्वल्पदोषा गरीयांसस्ते ज्ञेयाः कर्मदोषजाः ॥ ३ ॥

* अत्र कारणं दुष्कर्म प्रबलं यतो दोषाल्पत्वेऽपि व्याधेर्गरीयस्त्वं तत्कर्मक्षयादेव क्षीणं भवति । दोषाः स्वल्पा अपि निदानत्वेनोक्ता दृश्यन्त एवेति दोषाणां कारणतां मन्यत इति कर्मदोषोद्भवाः ॥ ३ ॥

अथ रोगक्षयहेतूनाह—

कर्मक्षयात्कर्मकृता दोषजाः स्वस्वभेषजः । कर्मदोषोद्भवा यान्ति कर्मदोषक्षयात् क्षयम् ॥४॥

* दोषजाः स्वस्वभेषजैरिति । दोषजेष्वादिकारणं दुष्कर्म तद् भेषजार्थं द्रव्यक्षयादि-जनितदुःखभोगेन कटुतिक्तकषायाद्यहृद्यभक्षणादिजनितदुःखभोगेन च क्षयं याति । शेषा दुष्टा हेतवो दोषास्ते स्वस्वभेषजैः क्षयं यान्तीत्यर्थः ॥ ४ ॥

अथ साध्यादिभेदेन त्रिविधान् रोगानाह—

साध्या याप्या असाध्याश्च व्याधयस्त्रिविधाः स्मृताः ।
सुखसाध्यः कष्टसाध्यो द्विविधः साध्य उच्यते ॥ ५ ॥

अथ याप्यलक्षणमाह—

यापनीयं तु तं विद्यात् क्रिया धारयते हि यम् । क्रियायां तु निवृत्तायां सद्यो यश्च विनश्यति॥६॥
प्राप्ता क्रिया धारयति सुखिनं याप्यमातुरम् । प्रपतिष्यदिवागारं स्तम्भो यत्नेन योजितः ॥७॥

अथ साध्ययाप्ययोश्चिकित्साया आवश्यकत्वमाह—

साध्या याप्यत्वमायान्ति याप्याश्चासाध्यतां तथा ।
घ्नन्ति प्राणानसाध्यास्तु नराणामक्रियावताम् ॥ ८ ॥

* अक्रियावतां = चिकित्सारहितानाम् ॥ ८ ॥

अथोपद्रवस्य लक्षणमाह—

रोगारम्भकदोषस्य प्रकोपादुपजायते । योऽन्यो विकारः स बुधैरुपद्रव इहोदितः ॥ ९ ॥

अथारिष्टस्य लक्षणमाह—

रोगिणो मरणं यस्मादवश्यम्भावि लक्ष्यते । तल्लक्षणमरिष्टं स्यादिष्टं चापि तदुच्यते ॥१०॥

अथ चिकित्साया लक्षणमाह—

या क्रिया व्याधिहरणी सा चिकित्सा निगद्यते। दोषधातुमलानां या साम्यकृत्सैव रोगहृत् ११

* क्रियाऽत्र कर्म । व्याधिर्हन्यतेऽनयेति व्याधिहरणी । करणाधिकरणयोश्चेति सूत्रेण करणार्थ ल्युट् ॥ ११ ॥

तथा च—

याभिःक्रियाभिर्जायन्ते शरीरे धातवः समाः। सा चिकित्सा विकाराणां कर्म तद्भिषजां मतम्१२
याह्युदीर्णं शमयति नान्यं व्याधिं करोति च । सा क्रिया नतु या व्याधिं हरत्यन्यमुदीरयेत्१३

* क्रियाऽत्र चिकित्सा ।

तथा चामरसिंहः—

आरम्भो निष्कृतिः शिक्षा पूजनं सम्प्रधारणम् ।
उपायः कर्म चेष्टा च चिकित्सा च नव क्रिया ॥ ३ ॥ इति ॥ १३ ॥

अथ चिकित्साविध्युपदेशं कुर्वन्नाह—

जातमात्रश्चिकित्स्यःस्यान्नोपेक्ष्योऽल्पतया गदः। वह्निशत्रुविषैस्तुल्यः स्वल्पोऽपि विकरोत्यसौ
रोगमादौ परीक्षेत ततोऽनन्तरमौषधम् । ततः कर्म भिषक् पश्चाज्ज्ञानपूर्वं समाचरेत् ॥ १५ ॥

* अयमर्थः—भिषग् आदौ रोगं परीक्षेत = विचारयेत्, ततः=पश्चाद्रोगौषधविचारा-नन्तरं ज्ञानपूर्वं सावधानो न त्वविज्ञाय, कर्म चिकित्सामौषधदानादिरूपां समाचरेदित्यर्थः १५

अथ रोगाज्ञानेन चिकित्साकरणे दोषमाह—

यस्तु रोगमविज्ञाय कर्माण्यारभते भिषक्। अप्यौषधविधानज्ञस्तस्य सिद्धिर्यदृच्छया ॥१६॥

* स्वैरितया सिद्धिर्भवति नापि भवतीत्यर्थः ॥ १६ ॥

अन्यच्च—

भेषजं केवलं कर्तुं यो जानाति न चामयम्। वैद्यकर्म स चेत्कुर्याद्वधमर्हति राजतः ॥ १७ ॥

अथ रोगज्ञाने भेषजाज्ञाने दोषमाह—

यस्तु केवलरोगज्ञो भेषजेष्वविचक्षणः। तं वैद्यं प्राप्य रोगी स्याद्यथा नौर्नाविकं विना ॥१८॥

* नाविकं = कर्णधारं विना यथा नौः सङ्कटे पतति तथा रोगीत्यर्थः ॥ १८ ॥

अन्यच्च—

यस्तु केवलशास्त्रज्ञः क्रियास्वकुशलो भिषक्। स मुह्यत्यातुरं प्राप्य यथा भीरुरिवाहवम् ॥१९॥

अथ रोगौषधयोर्ज्ञाने गुणमाह—

यस्तु रोगविशेषज्ञः सर्वभैषज्यकोविदः। देशकालविभागज्ञस्तस्य सिद्धिर्न संशयः ॥ २० ॥

आदावन्ते रुजां ज्ञाने प्रयतेत चिकित्सकः। भेषजानां विधानेन ततः कुर्याच्चिकित्सितम् ॥२१॥

* चिकित्सितमित्यत्र भावे क्तः ॥ २१ ॥

विकारनामाकुशलो न जिह्रीयात्कदाचन। नहि सर्वविकाराणां नामतोऽस्ति ध्रुवा स्थितिः ॥२२॥

* न जिह्रीयान्न लज्जेद्। ध्रुवा = नियता ॥ २२ ॥

नास्ति रोगो विना दोषैर्यस्मात्तस्माच्चिकित्सकः। अनुक्तमपि दोषाणां लिङ्गैर्व्याधिमुपाचरेत्॥२३

ये न कुर्वन्त्यसाध्यानां चिकित्सां ते भिषग्वराः। अतो वैद्यैः श्रमःकार्यः साध्यासाध्यपरीक्षणे२४

* रोगज्ञानोपाया अग्रे वक्ष्यन्ते ॥ २४ ॥

अथ चिकित्सापद्धतिमाह—

शीते शीतप्रतीकारमुष्णे तृष्णनिवारणम्। कृत्वा कुर्यात्क्रियां प्राप्तां क्रियाकालं न हापयेत् २५

अप्राप्ते वा क्रियाकाले प्राप्ते वा न क्रिया कृता। क्रिया हीनाऽतिरिक्ता च साध्येष्वपि न सिध्यति २६

* अयमर्थः—काले = चिकित्साऽवसरे। अप्राप्ते = अनागते। या क्रिया = चिकित्सा, यथा ज्वरे जीर्णतामप्राप्ते तरुण एव कषायदानक्रिया न सिद्ध्यति। या च क्रिया चिकित्सा, ऽवसरे प्राप्ते न कृता, अर्थात्पश्चात्कृता, यथा दाहे कथञ्चिच्छान्ते पश्चाच्छीतानुलेपनादिक्रि-या। तथा हीनाऽतिरिक्ता च क्रिया साध्येष्वपि न सिध्यति ॥ २६ ॥

अथातिरिक्तां हीनां च क्रियां वर्जयन्नाह—

विकारेऽल्पे महत्कर्म क्रिया लघ्वी गरीयसि। द्वयमेतदकौशल्यं कौशल्यं युक्तकर्मता ॥२७॥

क्रियायास्तु गुणालाभे क्रियामन्यां प्रयोजयेत्। पूर्वस्यां शान्तवेगायां न क्रियासङ्करो हितः २८

भिन्नरूपाभिस्तु क्रियाभिः साङ्कर्यमपि न दोषाय।

यत आह—

क्रियाभिस्तुल्यरूपाभिर्न क्रियासङ्करो हितः। ताभिस्तु भिन्नरूपाभिः साङ्कर्यं नैव दुष्यति॥२९॥

*अत एवोक्तम्—

लङ्घनं बालुकास्वेदो नस्यं निष्ठीवनं तथा । अवलेहोऽञ्जनं चापि प्राक् प्रयोज्यं त्रिदोषजे ॥४॥

* ज्वर इति शेषः ॥ ४ ॥ २९ ॥

न चैकान्तेन निर्दिष्टे शास्त्रे निविशते बुधः । स्वयमप्यत्र भिषजा तर्कणीयं चिकित्सता॥३०॥

यत आह—

उत्पद्यते च साऽवस्था दोषकालबलं प्रति । यस्यां कार्यमकार्यं स्यात्कर्मकार्यं विवर्जितम्॥३१॥

* विवर्जितं कर्म कर्त्तव्यं भवतीत्यर्थः ॥ ३१ ॥

अथ चिकित्सायाः फलमाह—

क्वचिदर्थःक्वचिन्मैत्री क्वचिद्धर्मःक्वचिद्यशः। कर्माभ्यासःक्वचिच्चेति चिकित्सा नास्ति निष्फला ३२

आयुर्वेदोदितां युक्तिं कुर्वाणाश्च हिताय ये। पुण्यायुर्वृद्धिसंयुक्ता नीरोगाश्च भवन्ति ते ॥३३॥

अथ धनिभ्योऽर्थग्रहणं वैद्यानां समुचितमित्याह—

नैव कुर्वीत लोभेन चिकित्सापुण्यविक्रयम् । ईश्वराणां वसुमतां लिप्सेतार्थं तु वृत्तये ॥ ३४ ॥

अथ निःशुल्ककारितचिकित्साफलमाह—

चिकित्सितं शरीरं यो न निष्क्रीणाति दुर्मतिः । स यत्करोति सुकृतं सर्वं तद्भिषगश्नुते ॥३५॥

अथ वैद्यवृत्तिः सर्वत्र सुसिद्धेत्याह—

न देशो मनुजैर्हीनो न मनुष्या निरामयाः । ततः सर्वत्र वैद्यानां सुसिद्धा एव वृत्तयः ॥ ३६ ॥

अथ चिकित्साया अङ्गान्याह—

रोगी दूतो भिषग् दीर्घमायुर्द्रव्यं सुसेवकः । सदौषधं चिकित्साया इत्यङ्गानि बुधा जगुः॥३७॥

तत्र रोगिणो लक्षणमाह—

रोगो यस्यास्ति रोगी स स चिकित्स्यस्तु यादृशः ।
यादृशश्चाचिकित्स्योऽपि वक्ष्यमाणो निशम्यताम् ॥ ३८ ॥

तत्र चिकित्स्यस्य लक्षणमाह—

निजप्रकृतिवर्णाभ्यां युक्तः सत्त्वेन चक्षुषा । चिकित्स्यो भिषजां रोगी वैद्यभक्तो जितेन्द्रियः३९

* सत्त्वं = व्यसनाभ्युदयक्रियाऽऽदिष्वविह्वलताकरं, तेन युक्तः । चक्षुषा = चक्षुरुपलक्षितेन, ततोऽन्येनापीन्द्रियेण । चिकित्स्यः = रोगान्मोचयितव्यः ॥ ३९ ॥

अन्यच्च—

आयुष्मान्सत्त्ववान्साध्यो द्रव्यवान्मित्रवानपि। चिकित्स्यो भिषजां रोगी वैद्यवाक्यकृदास्तिकः

* आयुर्वेदोऽस्तीति मतिर्यस्य स आस्तिकः ॥ ४० ॥

अथाचिकित्स्यस्य लक्षणमाह—

चण्डः साहसिको भीरुः कृतघ्नो व्यग्र एव च। शोकाकुलो मुमूर्षुश्च विहीनः करणैश्च यः॥४१॥

वैरी वैद्यविदग्धश्च श्रद्धाहीनश्च शङ्कितः । भिषजामविधेयाः स्युर्नोपक्रम्या भिषग्विधाः ॥४२॥

* चण्डोऽत्यन्तक्रोधशीलः । साहसिकः=अविचार्यकारी । भीरुःभयशीलः । कृतघ्नो= वैद्यकृतोपकारलोपकः । व्यग्रः = व्याकुलः । विहीनः करणैश्च यः=नेत्रादीन्द्रियशक्तिरहितः ।

वैरी न चिकित्स्यः=कदाचिद्रोगोद्रेकेऽपवादभयाद् । वैद्यविदग्धो=वैद्यधूर्त्तः । शङ्कितो=वैद्यविश्वासरहितः । भिषजामविधेयाः=वैद्यवचनाविधायिनः । भिषग्विधाः=वैद्यतुल्याः । एते न उपक्रम्याः=न चिकित्स्याः ।

* तथा च सुश्रुतः—

स न सिद्ध्यति वैद्यस्तु गृहे यस्य न पूज्यते ॥ ४१-४२ ॥

अथाचिकित्स्यानां चिकित्सानिषेधमाह—

एतानुपाचरन् वैद्यो बहून् दोषानवाप्नुयात् ॥ ४३ ॥

अथ दूतस्य लक्षणमाह—

यश्चिकित्सकमानेतुं याति दूतः स कथ्यते । स च यादृक् समुचितस्तादृगत्र निगद्यते ॥४४॥
दूताः सुजातयोऽव्यङ्गाः पटवो निर्मलाम्बराः । सुखिनोऽश्ववृषारूढाः शुभ्रपुष्पफलैर्युताः॥४५॥
सजातयः सुचेष्टाश्च सजीवदिशि सङ्गताः । भिषजं समये प्राप्ता रोगिणः सुखहेतवे ॥ ४६ ॥

* सजायतः=रोगिसमानजातयः ।

यस्यां प्राणमरुद्वाति सा नाडी जीवसंज्ञिता ॥ १ ॥ ४६ ॥

अथ दूतयात्रायां शकुनविचारमाह—

वैद्याह्वानाय दूतस्य गच्छतो रोगिणः कृते । न शुभं सौम्यशकुनं प्रदीप्तं तु सुखावहम् ॥४७॥

प्रदीप्तम्=अग्निः ॥ ४७ ॥

अथ दूतो रोगी च रिक्तहस्तो वैद्यं न पश्येदित्याह । तथा हि—

रिक्तहस्तो न पश्येत्तु राजानं भिषजं गुरुम् । दैवज्ञं देवतां मित्रं फलेन फलमादिशेत् ॥ ४८ ॥

अथ सुवैद्यस्य लक्षणमाह—

चिकित्सां कुरुते यस्तु स चिकित्सक उच्यते । स च यादृक्समाचीनस्तादृशोऽपि निगद्यते ॥४९॥
तत्त्वाधिगतशास्त्रार्थो दृष्टकर्मा स्वयंकृती । लघुहस्तः शुचिः शूरः सज्जोपस्करभेषजः ॥ ५० ॥
प्रत्युत्पन्नमतिर्धीमान् व्यवसायी प्रियंवदः । सत्यधर्मपरो यश्च वैद्य ईदृक् प्रशस्यते ॥ ५१ ॥

* दृष्टकर्मा=दृष्टा परेण कृता चिकित्सा येन सः । स्वयंकृती=स्वयं चिकित्साकुशलः । लघुहस्तः=सिद्धिमद्धस्तः ॥ ४९—५१ ॥

अथ निषिद्धवैद्यस्य लक्षणमाह—

कुचैलः कर्कशः स्तब्धो ग्रामीणः स्वयमागतः । पञ्च वैद्या न पूज्यन्ते धन्वन्तरिसमा यदि ॥५२॥

* कर्कशः=अप्रियवादी । स्तब्धः=साभिमानः । ग्रामीणः=व्यवहाराचतुरः ॥ ५२ ॥

अथ वैद्यस्य कर्माह—

व्याधेस्तत्त्वपरिज्ञानं वेदनायाश्च निग्रहः । एतद्वैद्यस्य वैद्यत्वं न वैद्यः प्रभुरायुषः ॥ ५३ ॥

* अस्यायमर्थः—व्याधेः सम्यक् परिचयो वेदनायाः शान्तिकरणं च वैद्यस्य कर्म न तु वैद्य आयुषः प्रभुरित्यर्थः । अपरे त्वेवं व्याचक्षते-व्याधेस्तत्त्वतः परिचयो वेदनायाः शान्तिकरणं च । एतदेव न वैद्यस्य वैद्यत्वं किन्तु वैद्य आयुषोऽपि प्रभुः, आगन्तु-मृत्युशताहरणात् ।

* तथा च सुश्रुते धन्वन्तरिः—

एकोत्तरं मृत्युशतमथर्वाणः प्रचक्षते । तत्रैकः कालसंयुक्तः शेषास्त्वागन्तवः स्मृताः ॥ ६ ॥

* अयमर्थः—अथर्वाणः=अथर्वतत्त्वज्ञत्वेनाथर्वतुल्याः, मृत्युमेकोत्तरं शतं प्रचक्षते तत्रैको मृत्युः कालसंयुक्तः । कालः=आयुषोऽन्ते शरीरिणामवश्यं संहर्त्ता । सर्वैरुपायैर्निवारयितुमशक्यः स ब्रह्मादीनायुषोऽन्ते संहरति । यत आह-लिङ्गपुराणे कार्त्तिकेयं प्रतिमहादेवः—

"ममायुर्ग्रसते कालः कुतः पुत्र ! रसायनम् ॥" इति ॥ ७ ॥

* तेन कालेन संयुक्तः संहाराय नियुक्तः सोऽवश्यम्भावी । शेषाःशतमृत्यवः, आगन्तवः=आगन्तुरूपहेतुजन्मानः कार्यकारणयोरभेदोपचाराद् ।

* आगन्तवो हेतवो यथा—

विषभक्षणमजीर्णमत्यन्तभोजनं च, दुर्देशजलपानं, तथाऽतिबलवैरिव्याघ्रवनमहिषमत्तमातङ्गादिभिर्युद्धं, दन्दशूकेन क्रीडनम्, अत्युच्चवृक्षाग्रारोहणम्, बाहुभ्यां महातरङ्गिणीतरणम्, एकाकिनो रात्रौ दुर्गे मार्गे गमनमित्यादि ॥ ६ ॥

* आगन्तुहेतुजा मृत्यवो दुर्निमित्तभाविभावनाबलवत्त्वाद्, आयुषि सत्यपि मारयन्ति । यथा मल्लिकातैलवर्त्तिवह्निषु विद्यमानेषु वात्या दीपं नाशयति ।

* तथा च—

यथा सत्यपि तैलादौ दीपं निर्वापयेन्मरुत् । एवमायुष्यहीनेऽपि हिंसन्त्यागन्तुमृत्यवः ॥८॥

* किन्तु-आगन्तुनिमित्तानि निवारयितुं च शक्यन्ते ।

* यत आह सुश्रुते धन्वन्तरिः—

दोषागन्तुनिमित्तेभ्यो रसमन्त्रविशारदौ । रक्षेतां नृपतिं नित्यं यत्नाद्वैद्यपुरोहितौ ॥ ९ ॥

* वैद्यमन्त्रिणौ नृपतिं नित्यं यत्नाद्रक्षेताम् । कुतः ? दोषागन्तुनिमित्तेभ्यः । दोषाः—निषिद्धाहारविहारदूषिता वातपित्तकफा रोगोत्पादकाः, आगन्तवः—निषिद्धा विहारा अतिबलवैरिविग्रहादयः, ते निमित्तानि येषां, तेभ्यः—शतमृत्युभ्यः । ननु वैद्यपुरोहितौ कथं शतं मृत्यून् निवारयितुं शक्तौ ? तत्राह—यतस्तौ रसमन्त्रविशारदौ, प्रथमं वैद्यो दिनचर्यारात्रिचर्यर्तुचर्योक्ताहारविहाराभ्यां वातपित्तकफधातुमलान्समानेव रक्षति ततो रसज्ञत्वाद्रसैर्मृत्युञ्जयादिभिर्निषिद्धाहारविहारदूषितदोषजनितान्विकारान्मृत्युहेतूनपहरति । मन्त्री च सद्बुद्धिदानेन मृत्युहेतुभ्यो निषिद्धविहारेभ्यो नृपतिं निवारयति । तत आगन्तुमृत्यवो निवारयितुं शक्या न त्ववश्यम्भाविनः ॥ १३ ॥

अथायुर्विचारमाह—

भिषगादौ परीक्षेत रुग्णस्यायुः प्रयत्नतः । तत आयुषि विस्तीर्णे चिकित्सा सफला भवेत्॥१४॥

अथ दीर्घायुषो लक्षणान्याह—

सौम्या दृष्टिर्भवेद्यस्य श्रोत्रं वक्त्रं तथैव च । स्वादुं गन्धं विजानाति स साध्यो नात्र संशयः १५

पाणिपादौ च यस्योष्णौ दाहः स्वल्पतरो भवेत् । जिह्वा तु कोमला यस्य।स रोगी न विनश्यति १६

स्वेदहीनो ज्वरो यस्य श्वासो नासिकया चरेत् । कण्ठश्च कफहीनः स्यात्स रोगी जीवति ध्रुवम् १७

यस्य निद्रा सुखेन स्याच्छरीरं द्युतिमद्भवेत् । इन्द्रियाणि प्रसन्नानि स रोगी नैव नश्यति ५८

अथ स्वल्पायुषो लक्षणान्याह—

शरीरशीलयोर्यस्य प्रकृतेर्विकृतिर्भवेत्। तदरिष्टं समासेन व्यासतश्च निबोध मे ॥ ५९ ॥
शृणोति विविधाञ्छब्दान्विपरीताञ्छृणोति च । यो न शृणोति चाकस्मात्तं वदन्ति गतायुषम्
यस्तूष्णमिव गृह्णाति शीतमुष्णं च शीतवत्। उष्णगात्रोऽतिमात्रं यो भृशं शीतेन कम्पते ॥६१॥

* तमपि गतायुषं वदन्तीत्यन्वयः ॥ ६१ ॥

प्रहारं नैव जानाति यो गच्छेदन्यथाऽपि वा । पांशुनेवावकीर्णानि यश्च गात्राणि मन्यते ॥६२॥
वर्णान्यता वा राज्यो वा यस्य गात्रे भवन्ति हि ।स्नातानुलिप्तं यं चापि भजन्ते नीलमाक्षिकाः॥
विपरीतेन गृह्णाति रसान्यश्चोपयोजितान् । यो वा रसान्न संवेत्ति तं गतासुं प्रचक्षते ॥६४॥
सुगन्धं वेत्ति दुर्गन्धं दुर्गन्धञ्च च सुगन्धवत्। गृह्णाति योऽन्यथा गन्धं शान्ते दीपे निरामयः६५
रात्रौ सूर्यं ज्वलन्तं वा दिवा वा चन्द्रवर्चसम्। दिवा ज्योतींषि यश्चापि ज्वलितानीव पश्यति६६

* दिवा वा चन्द्रवर्चसं सूर्यमित्यन्वयः । ज्योतींषि=नक्षत्राणि ॥ ६६ ॥

विद्युत्वतोऽसिताम्मेघान् गगने निर्घने घनान् । विमानयानप्रासादैर्यश्च संकुलमम्बरम् ॥६७॥
यश्चानिलं मूर्त्तिमन्तमन्तरिक्षेऽवलोकते । धूमनीहारवासोभिरावृतामिव मेदिनीम् ॥ ६८ ॥
प्रदीप्तमिव यो लोकं यो वा प्लुतमिवाम्भसा । भूमिमष्टापदाकारां लेखाभिर्यश्च पश्यति॥६९॥
यो न पश्यति ऋक्षाणि यश्च देवीमरुन्धतीम् । ध्रुवमाकाशगङ्गां च तं वदन्ति गतायुषम् ॥७०॥
आदर्शेऽम्बुनि धर्मे वा छायां यश्च न पश्यति। पश्यत्येकाङ्गहीनां वा विकृतां वाऽन्यसत्त्वजाम्७१
श्वकाककङ्कगृध्राणां प्रेतानां यक्षरक्षसाम् । आतुरो लभते मृत्युं स्वस्थो व्याधिमवाप्नुयात्॥७२॥
ह्रीश्रियौ नश्यतो यस्य तेज ओजः स्मृतिः प्रभा । अकस्माच्च भजन्ते यं स गतासुरसंशयम्॥७३॥

* प्रभाऽत्र प्रतिभा ॥ ७३ ॥

यस्याधरौष्ठः पतितः क्षिप्तश्चोर्ध्वं तथोत्तरः। उभौ वा जाम्बवाभासौ दुर्लभं तस्य जीवितम्॥७४॥
आरक्ता दशना यस्य श्यावा वा स्युः पतन्ति वा। खञ्जनप्रतिभा वाऽपि तं गतायुषमादिशेत् ७५
कृष्णा तथाऽनुलिप्ता च जिह्वा शून्या च यस्य वै। कर्कशा वा भवेद्यस्य सोऽचिराद्विजहात्यसून्७६
कुटिला स्फुटिता वाऽपि शुष्का वा यस्य नासिका । अवस्फूर्जति भग्ना वा स न जीवति मानवः७७

* अवस्फूर्जति=श्वासवेगेनोच्चैः शब्दं करोतीत्यर्थः ॥ ७७ ॥

सङ्क्षिप्ते विषमे स्तब्धे रूक्षे स्रस्ते च लोचने । स्यातां परिस्रुते यस्य स गतायुर्नरो ध्रुवम् ॥७८॥
केशाःलीमन्तिनो यस्य सङ्क्षिप्ते विनते भ्रुवौ। लुठन्ति चाक्षिपक्ष्माणि सोऽचिराद्याति मृत्यवे७९

* लुठन्ति=पतन्ति ॥ ७९ ॥

नाहरत्यन्नमास्यस्थं न धारयति यः शिरः । एकाग्रदृष्टिर्मूढात्मा सद्यः प्राणान्विमुञ्चति ॥८०॥
उत्थाप्यमानो बहुशः संमोहं योऽधिगच्छति । बलवान्दुर्बलो वाऽपि तं पक्वं भिषगादिशेत् ८१
निद्रा निरन्तरं यस्य यो जागर्त्ति च सर्वदा । मुह्येद्वा वक्तुकामश्च प्रत्याख्येयः स जानता॥८२॥
उत्तरौष्ठं च यो लिह्यादुत्कारांश्च करोति यः । प्रेतैर्वा भाषते सार्धं प्रेतरूपं तमादिशेत् ॥८३॥

* उत्करान् = हस्तपादादिविक्षेपान् ॥ ८३ ॥

खेभ्यश्च रोमकूपेभ्यो यस्य रक्तं प्रवर्त्तते । पुरुषस्याविषार्त्तस्य स सद्यो जीवितं त्यजेत् ॥८४॥
सम्यक् चिकित्स्यमानस्य विकारो योऽभिवर्धते । प्रक्षीणबलमांसस्य लक्षणं तद् गतायुषः ८५।

अथ गतायुषां पुरुषाणामोषधिप्रदानमकिञ्चित्कारं भवतीत्यत्र हेतुमाह--

भूताः प्रेताः पिशाचाश्च रक्षांसि विविधानि च । मरणाभिमुखं जन्तुमुपसृत्य च नित्यशः ॥८६॥
तानि भेषजवीर्याणि प्रतिघ्नन्ति जिघांसया । तस्मान्मोघाः क्रियाः सर्वा भवन्त्येव गतायुषः ८७

* नन्वायुषि सति चिकित्सायाः साफल्यमुक्तम्, आयुरस्ति चेत्तदा तदेव जीवनहेतुः, किं चिकित्साविधानेन ? तत्रोच्यते, आयुषि सति चिकित्सायाः फलं वेदनानिग्रहः ।

* उक्तञ्च—

आयुष्मान्पुरुषो जीवेत्सव्यथो भेषजं विना । भेषजेन पुनर्जीवेत्स एव हि निरामयः ॥ १० ॥

* किञ्च-आयुषि सत्यपि रोगी चिकित्सां विनोत्थातुं न शक्नोति ।

यत आह चरकः--

सति आयुषि नोपायं विनोत्थातुं क्षमो रुजी। दर्शितश्चात्र दृष्टान्तः पङ्कमग्नो यथा गजः ॥११॥

* किञ्च-चिकित्सां विना आयुष्मानप्यवसीदति ।

यत आह स एव--

सति चायुषि नष्टः स्यादामयैश्चाचिकित्सितः। यथा सत्यपि तैलादौ दीपो निर्वाति वात्यया ॥१२॥

* अत एवोक्तम्—

साध्या याप्यत्वमायान्ति याप्या गच्छन्त्यसाध्यताम् ।
घ्नन्ति प्राणानसाध्यास्तु नराणामक्रियावताम् ॥ १३ ॥ इति ॥

* चिकित्सा तु अनिश्चितायुषोऽपि कर्तव्या ।

यत आह—

तावत्प्रतिक्रिया कार्या यावच्छ्वसिति मानवः । कदाचिद्दैवयोगेन दृष्टरिष्टोऽपि जीवति ॥१४॥

* इति तु यस्यासाध्यत्वं सन्दिग्धं तं प्रत्युक्तं । येषु त्वसाध्यता शास्त्रेणानुभवेन विनिश्चिता ते पुनर्न चिकित्स्याः ।

यत उक्तम्—

सद्वैद्यास्ते न येऽसाध्यानारभन्ते चिकित्सितुम् ॥ १५ ॥ इति ॥ ८६-८७ ॥

अथ द्रव्यावश्यकतामाह—

सर्वं द्रव्यमपेक्षन्ते रोगिप्रभृतयो यतः। विना वित्तं न भैषज्यं चिकित्साऽङ्गं ततो धनम् ॥८८॥

अथ परिचारकस्य लक्षणमाह--

स्निग्धोऽजुगुप्सुर्बलवान्युक्तो व्याधितरक्षणे । वैद्यवाक्यकृदश्रान्तो युज्यते परिचारकः ॥८९॥

* स्निग्धः=प्रीतः, अजुगुप्सुः=अनिन्दकः ॥ ८९ ॥

अथ भेषजस्य लक्षणमाह--

वैद्यो व्याधिं हरेद्येन तद् द्रव्यं प्रोक्तमौषधम् । तद्यादृशमदग्धं स्याद्रोगघ्नं तादृशं ब्रुवे ॥९०॥

अथौषधग्रहणपरिभाषामाह--

प्रशस्तदेश सञ्जा प्रशस्तेऽहनि चोद्धृतम् । अल्पमात्रं बहुगुणं गन्धवर्णरसान्वितम् ॥९१॥
दोषघ्नमग्लानिकरमधिकं न विकारि यत्॥ समीक्ष्य काले दत्तं च भेषजं स्याद्गुणावहम्॥९२॥
आग्नेया विन्ध्यशैलाद्याःसौम्यो हिमगिरिःस्मृतः। अतस्तदौषधानि स्युरनुरूपाणि हेतुभिः॥९३॥

* आग्नेयाः=अधिकाग्न्यंशाः, सौम्यः=अधिकसोमांशः, ओषधय एवौषधानि। अत्र स्वार्थ अण्। अनुरूपाणि=सदृशानि ॥ ९३ ॥

अन्येष्वपि प्ररोहन्ति वनेषूपवनेषु च । गृह्णीयात्तानि सुमनाः शुचिः प्रातः सुवासरे ॥ ९४ ॥
आदित्यसम्मुखो मौनी नमस्कृत्य शिवं हृदि । साधारणधराद्रव्यं गृह्णीयादुत्तराश्रितम् ॥९५॥

* साधारणधराद्रव्यं=सर्वभूमिभवं द्रव्यम् । उत्तराश्रितं=स्वस्मादुत्तरदिग्भवम् ९४-९५॥

वल्मीककुत्सितानूपश्मशानोषरमार्गजाः । जन्तुवह्निहिमव्याप्ता नौषध्यः कार्यसाधिकाः ॥९६॥
शरद्यखिलकार्य्यार्थं ग्राह्यं सरसमौषधम् । विरेकवमनार्थं तु वसन्तान्ते समाहरेत् ॥ ९७ ॥

* वसन्तान्ते=वसन्तमध्ये । समाहरेत्=संगृह्णीयात्॥ ९७ ॥

अतिस्थूलजटा याः स्युस्तासां ग्राह्यास्त्वचो ध्रुवम् ।
गृह्णीयात्सूक्ष्ममूलानि सकलान्यपि बुद्धिमान् ॥ ९८ ॥

अन्यच्च--

महान्ति येषां मूलानि काष्ठगर्भाणि सर्वतः । तेषां तु वल्कलं ग्राह्यं ह्रस्वमूलानि सर्वशः ॥९९॥
न्यग्रोधादेस्त्वचो ग्राह्याः सारः स्यात् बीजकादितः ।
तालीसादेश्च पत्राणि फलं स्यात्त्रिफलाऽऽदितः ॥ १०० ॥
क्वचिन्मूलं क्वचित्कन्दः क्वचित्पत्रं क्वचित्फलम् ।
क्वचित्पुष्पं क्वचित्सर्वं क्वचित्सारः क्वचित्त्वचः ॥ १०१ ॥

चित्रकं सूरणं निम्बो वासा च त्रिफला क्रमात् । धातकी कण्टकारी च खदिरः क्षीरिपादपः १०२
क्वचिन्निम्बस्य गृह्णीयात्पत्राभावे त्वचामपि । बालं फलं तु बिल्वस्य पक्वमारग्वधस्य च॥१०३॥
अङ्गेऽनुक्ते जटा ग्राह्या भागेऽनुक्तेऽखिलं समम् । पात्रेऽनुक्ते मृदःपात्रं कालेऽनुक्ते स्वहर्मुखम्१०॥
नवान्येव हि योज्यानि द्रव्याण्यखिलकर्मसु । विना विडङ्गकृष्णाभ्यां गुडधान्याज्यमाक्षिकैः१०॥

* धान्यमन्नम् ॥ १०५ ॥

पुराणं तु प्रशस्तं स्यात्ताम्बूलं काञ्जिकं तथा । शुष्कं नवीनद्रव्यं तु योज्यं सकलकर्मसु॥१०६॥
आर्द्रं तु द्विगुणं युञ्ज्यादेष सर्वत्र निश्चयः। गुडूची कुटजो वासा कूष्माण्डश्च शतावरी ॥१०७॥
अश्वगन्धा सहचरः शतपुष्पा प्रसारिणी । प्रयोक्तव्याः सदैवार्द्रा द्विगुणं नैव कारयेत् ॥ १०८ ॥

* सहचरः=कुरण्टकः, "कटसरैया" इति लोके ॥ १०८ ॥

अन्यच्च--

वासानिम्बपटोलकेतकबलाकूष्माण्डकेन्दीवरी-
वर्षाभूकुटजाश्च कन्दसहिता सा पूतिगन्धाऽमृता ।

ऐन्द्री नागबला कुरुण्टकपुरश्छत्राऽमृताः सर्वदा
सार्द्रा एव तु न क्वचिद् द्विगुणिताः कार्येषु योज्या बुधैः ॥ १०९ ॥

* इन्दीवरी=शतावरी । पूतिगन्धा=गन्धप्रसारणी । ऐन्द्री = इन्द्रवारुणी । नागबला = गुलशकरी । कुरण्टकः=पीतपुष्पः ( कटसरैया ) । पुरः = गुग्गुलुः ॥ १०९ ॥

घृतं तैलं च पानीयं कषायं व्यञ्जनादिकम् । पक्त्वा शीतीकृतं चोष्णं तत्सर्वं स्याद्विषोपमम् ११०

अथ द्रव्याणां परीक्षामाह--

सूक्ष्मास्थिमांसला पथ्या सर्वकर्मणि पूजिता । क्षिप्ताऽम्भसि निमज्जेद्या भल्लातक्यस्तथोत्तमाः ॥
वराहमूर्द्धवत्कन्दो वाराहीकन्दसंज्ञकः । सौवर्चलं तु काचाभं सैन्धवं स्फटिकप्रभम् ॥ ११२ ॥
सुवर्णच्छविकं ज्ञेयं स्वर्णमाक्षिकमुत्तमम् । ओड्रपुष्पप्रतीकाशा मनोह्वा चोत्तमा मता ॥ ११३ ॥
श्रेष्ठं शिलाजतु ज्ञेयं प्रक्षिप्तं न विशीयते । तोयपूर्णे कांस्यपात्रे प्रतानेन विवर्धते ॥ ११४ ॥
कर्पूरस्तुवरः स्निग्ध एला सूक्ष्मफला वरा । श्वेतचन्दनमत्यन्तं सुगन्धि गुरुपूजितम् ॥११५॥
रक्तचन्दनमत्यन्तं लोहितं प्रवरं मतम् । काकतुण्डनिभः स्निग्धो गुरुः श्रेष्ठो गुरुर्मतः ॥ ११६ ॥
सुगन्धि लघु रूक्षं च सुरदारु वरं मतम् । सरलं स्निग्धमत्यर्थ सुगन्धि च गुणावहम् ॥ ११७ ॥
अतिपीता प्रशस्ता तु ज्ञेया दारुनिशा बुधैः । जातीफलं गुरु स्निग्धं समं सुश्रान्तरं वरम् ॥ ११८ ॥
मृद्वीका सोत्तमा ज्ञेया या स्याद् गोस्तनसन्निभा । करमर्दफलाकारा मध्यमा सा प्रकीर्तिता ११९ ।

*गोस्तनसन्निभा "मुनक्का" इति लोके । करमर्दफलाकारा "करम्बा" इति लोके ॥ ११९ ॥

खण्डं तु विमलं श्रेष्ठं चन्द्रकान्तसमप्रभम् । गव्याज्यसदृशं स्वच्छं गन्धं मधु वरं मतम् ॥ १२० ॥

अथ स्वभावतो हितानि द्रव्याण्याह--

शालीनां लोहितः शालिः षष्टिकेषु च षष्टिकः । शूकधान्येष्वपि यवो गोधूमः प्रवरो मतः १२१ ॥
शिम्बीधान्ये वरो मुद्गो मसूरश्चाढकी तथा । रसेषु मधुरः श्रेष्ठो लवणेषु च सैन्धवः ॥ १२२ ॥
दाडिमामलकं द्राक्षा खर्जूरं च परूषकम् । राजादनं मातुलुंगं फलवर्गेषु शस्यते ॥ १२३ ॥

*परूषकं "फालसा" इति लोके । राजादनं "खिरणी इति लोके । मातुलुगं "बिजउरा" इति लोके ॥ १२३ ॥

पत्रशाकेषु वास्तूकं जीवन्ती पोतिका वरा । पटोलं फलशाकेषु कन्दशाकेषु सूरणम् ॥ १२४ ॥
एणः कुरङ्गो हरिणो जाङ्गलेषु प्रशस्यते । पक्षिणां तित्तिरिर्लावो वरो मत्स्येषु रोहितः ॥ १२५ ॥
हरिणस्ताम्रवर्णः स्यादेणः कृष्णतया मतः । कुरङ्गस्ताम्र उद्दिष्टो हरिणाकृतिको महान् ॥ १२६ ॥
जलेषु दिव्यं दुग्धेषु गव्यमाज्येषु गोभवम् । तैलेषु तिलजं तैलमैक्षवेषु सिता हिता ॥ १२७ ॥

अथ स्वभावादहितानि द्रव्याण्याह--

शिम्बीषु माषाग्ग्रीष्मर्त्तौ लवणेष्वौषरं त्यजेत् । फलेषु लकुचं शाके सार्षपं न हितं मतम् ॥ १२८ ॥
गोमांसं ग्राम्यमांसेषु न हितं महिषीवसा । मेषीपयः कुसुम्भस्य तैलं त्याज्यं च फाणितम् ॥ १२

*इक्षुरसः परिपक्वो योऽघनः फाणितम् । तद्धि "छोयाराव" इति लोके ॥ १२९ ॥

अथ संयोगविरुद्धानि द्रव्याण्याह--

मत्स्यमानूपमांसं च दुग्धयुक्तं विवर्जयेत् । कपोतं सर्षपस्नेहभर्जितं परिवर्जयेत् ॥ १३० ॥

मत्स्यानिक्षोर्विकारेण तथा क्षौद्रेण वर्जयेत् । सक्तून्मांसपयोयुक्तानुष्णे दधि विवर्जयेत् ॥१३१॥
उष्णैरम्भोऽम्बुना क्षौद्रं पायसं कृसरान्वितम् । रम्भाफलं त्यजेत्त कदधिबिल्वफलान्वितम् ॥१३२॥
दशाहमुषितं सर्पिः कांस्ये मधुवृतं समम् । कृतान्नं च कषायं च पुनरुष्णीकृतं त्यजेत् ॥ १३३ ॥
एकत्र बहुमांसानि विरुध्यन्ते परस्परम् । मधु सर्पिर्वसा तैलं पानीयं वा पयस्तथा ॥ १३४ ॥

अथ भेषजग्रहणसंकेतमाह—

लवणं सैन्धवं प्रोक्तं चन्दनं रक्तचन्दनम् । चूर्णलेहासवस्नेहाः साध्या धवलचन्दनैः ॥
कषायलेपयोः प्रायो युज्यते रक्तचन्दनम् ॥ १३५ ॥

अन्तःसम्मार्जने ज्ञेया ह्यजमोदा यवानिका । बहिःसम्मार्जने सैव विज्ञातव्याऽजमोदिका १३६
पयःसर्पिःप्रयोगेषु गव्यमेव हि गृह्यते ॥ शकृद्रसो गोमयाम्बु मूत्रं गोमूत्रमुच्यते ॥ १३७ ॥

अथ प्रतिनिधिद्रव्याण्याह—

चित्रकाभावतो दन्ती क्षारः शिखरिजोऽथवा । अभावे धन्वयासस्य प्रक्षेप्या तु दुरालभा १३८

*शिखरी = अपामार्गः ॥ १३८ ॥

तगरस्याप्यभावे तु कुष्ठं दद्याद्भिषग्वरः । मूर्वाऽभावे त्वचो ग्राह्या जिङ्गिनीप्रभवा बुधैः ॥१३९॥
अहिंस्राया अभावे तु मानकन्दः प्रकीर्तितः । लक्ष्मणाया अभावे तु नीलकण्ठशिखा मता १४०

*नीलकण्ठशिखा = मयूरशिखा ॥ १४० ॥

बकुलाभावतो देयं कह्लारोत्पलपंकजम् । नीलोत्पलस्याभावे तु कुमुदं देयमिष्यते ॥ १४१ ॥
जातीपुष्पं न यत्रास्ति लवङ्गं तत्र दीयते । अर्कपर्णोह्निपयसो ह्यभावे तद्रसो मतः ॥ १४२ ॥
पौष्कराभावतः कुष्ठं तथा लाङ्गल्यभावतः । स्थौणेयकस्याभावे तु भिषग्भिर्दीयते नदः १४३
चविकागजपिप्पल्यौ पिप्पलीमूलवत्स्मृतौ ॥ १४४ ॥

अभावे सोमराज्यास्तु प्रपुन्नाडफलं मतम् । यदि न स्याद्दारुनिशा तदा देया निशा बुधैः १४५

*सोमराजी = बाकुची । प्रपुन्नाडफलं = चक्रमर्दफलम् । दारुनिशा = दारुहरिद्रा । निशा = हरिद्रा ॥ १४५ ॥

रसाञ्जनस्याभावे तु दार्वीक्वाथः प्रयुज्यते । सौराष्ट्र्यभावतो देया स्फटिका तद्गुणा जनैः ॥१४६॥

*सौराष्ट्री = "सोरठी माटी" इति लोके । स्फटिका = "फिट्किरी" इति लोके ॥ १४६ ॥

तालीसपत्रकाभावे स्वर्णताली प्रशस्यते । भाङ्गर्यभावे तु तालीसं कण्टकारीजटाऽथवा ॥ १४७ ॥
रुचकाभावतो दद्याल्लवणं पांशुपूर्वकम् । अभावे मधुयष्ट्यास्तु धातकीं च प्रयोजयेत् ॥ १४८ ॥

*रुचकं = "चोहार" इति लोके । पांशुलवणं = "खारी" अथवा "रेह" इति लोके ॥ १४८ ॥

अम्लवेतसकाभावे चुक्रं दातव्यमिष्यते । द्राक्षा यदि न लभ्येत प्रदेयं काश्मरीफलम् ॥ १४९ ॥
तयोरभावे कुसुमं मधूकस्य मतं बुधैः । लवङ्गकुसुमं देयं नलस्याभावतः पुनः ॥ १५० ॥
कस्तूर्यभावे कंकोलं क्षेपणीयं विदुर्बुधाः । कङ्कोलस्याप्यभावे तु जातीपुष्पं प्रदीयते ॥ १५१ ॥
सुगन्धिमुस्तकं देयं कर्पूराभावतो बुधैः । कर्पूराभावतो देयं ग्रन्थिपर्णं विशेषतः ॥ १५२ ॥
कुंकुमाभावतो दद्यात्कुसुम्भकुसुमं नवम् । श्रीखण्डचन्दनाभावे कर्पूरं देयमिष्यते ॥ १५३ ॥
अभावे श्वेतयोर्वैद्यः प्रक्षिपेद्रक्तचन्दनम् । रक्तचन्दनकाभावे नवोशीरं विदुर्बुधाः ॥ १५४ ॥

मुस्ता चातिविषाऽभावे शिवाऽभावे शिवा मता । अभावे नागपुष्पस्य पद्मकेशरमिष्यते ॥१५५
मेदाजीवककाकोलीऋद्धिद्वन्द्वेऽपि चाऽसति । वरीविदार्यश्वगन्धावाराहीश्च क्रमात् क्षिपेत् ॥१५६

*वरी = शतावरी ॥ १५६ ॥

वाराह्याश्च तथाऽभावे चर्मकारालुको मतः । वाराहीकन्दसंज्ञस्तु पश्चिमे गृष्टिसंज्ञकः ॥ १५७ ॥
वाराहीकन्द एवान्यश्चर्मकारालुको मतः । अनूपसम्भवे देशे वराह इव लोमवान् ॥ १५८ ॥
भल्लातकासहत्वे तु रक्तचन्दनमिष्यते । भल्लाताभावतश्चित्रं नलश्चेक्षोरभावतः ॥ १५९ ॥
सुवर्णाभावतः स्वर्णमाक्षिकं प्रक्षिपेद् बुधः । श्वेतं तु माक्षिकं ज्ञेयं बुधै रजतवद् ध्रुवम् ॥१६०॥
माक्षिकस्याप्यभावे तु प्रदद्यात्स्वर्णगैरिकम् । सुवर्णमथवा रौप्यं मृतं यत्र न लभ्यते ॥१६१॥
तत्र कान्तेन कर्माणि भिषक्कुर्याद्विचक्षणः । कान्ताभावे तीक्ष्णलौहं योजयेद्वैद्यसत्तमः ॥१६२॥
अभावे मौक्तिकस्यापि मुक्ताशुक्तिं प्रयोजयेत् । मधु यत्र न लभ्येत तत्र जीर्णगुडो मतः ॥१६३॥
मत्स्यण्ड्यभावतो दद्याद्भिषजः सितशर्कराम् । असम्भवे सितायास्तु बुधैः खण्डं प्रयुज्यते ॥१६४॥
क्षीराभावे रसो मौद्गो मासुरो वा प्रदीयते । अत्र प्रोक्तानि वस्तूनि यानि तेषु च तेषु च ॥१६५॥
योज्यमेकतराभावे परं वैद्येन जानता । रसवीर्यविपाकाद्यैः समं द्रव्यं विचिन्त्य च ॥ १६६ ॥
युञ्ज्यात्तद्विषमन्यच्च द्रव्याणां तु रसादिवित् । योगे यदप्रधानं स्यात्तस्य प्रतिनिधिर्मतः ॥१६७॥
यत्तु प्रधानं तस्यापि सदृशं नैव गृह्यते । व्याधेरयुक्तं यद् द्रव्यं गणोक्तमपि तत्त्यजेत् ॥
अनुक्तमपि युक्तं यद्योजयेत्तद्रसादिवित् ॥ १६८ ॥

अथ द्रव्यगतपञ्चपदार्थकर्माण्याह—

द्रव्ये रसो गुणो वीर्यं विपाकः शक्तिरेव च । पदार्थाः पञ्च तिष्ठन्ति स्वं स्वं कुर्वन्ति कर्म च ॥१६९॥

तत्र रसमाह वाग्भटः—

रसाः स्वाद्वम्ललवणतिक्तोषणकषायकाः । षड् द्रव्यमाश्रितास्ते च यथापूर्वं बलावहाः ॥१७०॥

*ऊषणः = कटुः ॥ १७० ॥

तत्राद्या मारुतं घ्नन्ति त्रयस्तिक्तादयः कफम् । कषायतिक्तमधुराः पित्तमन्ये तु कुर्वते ॥ १७१ ॥
ये रसा वातशमना भवन्ति यदि तेषु वै । रौक्ष्यलाघवशैत्यानि न ते हन्युः समीरणम् ॥ १७२॥
ये रसाः पित्तशमना भवन्ति यदि तेषु वै । तीक्ष्णोष्णलघुताश्चैव नैते तत्कर्मकारिणः ॥१७३॥
ये रसाः श्लेष्मशमना भवन्ति यदि तेषु वै । स्नेहगौरवशैत्यानि न ते हन्युः कफं तदा ॥१७४॥

अथ मधुररसस्य गुणानाह—

मधुरो हि रसः शीतो धातुस्तन्यबलप्रदः । चक्षुष्यो वातपित्तघ्नः कुर्यात्स्थौल्यमलक्रिमीन् ॥१७५॥
विषघ्नः पिच्छिलश्चापि स्निग्धः प्रीत्यायुषोर्हितः । बालवृद्धक्षतक्षीणवर्णकेशेन्द्रियौजसाम् ॥१७६
प्रशस्तो बृंहणः कण्ठ्यो गुरुः सन्धानकृन्मतः ॥ १७७ ॥

अथातियुक्तस्य मधुररसस्य गुणानाह—

सोऽतियुक्तो ज्वरश्वासगलगण्डार्बुदक्रिमीन् । स्थौल्याग्निमान्द्यमेहांश्च कुर्यान्मेदःकफामयान् १७८

अथाम्लस्य गुणानाह—

रसोऽम्लः पावनो रुच्यः पित्तश्लेष्मास्रदो लघुः । लेखितोष्णो बहिः शीतः क्लेदनः पवनापहः

स्निग्धस्तीक्ष्णः सरः शुक्रविबन्धानाहहृद्धितः । हर्षणो रोमदन्तानामक्षिभ्रूविनिकोचनः ॥१८०॥

*लेखितः=लेखनः । बहिःशीतः=स्पर्शे शीतः । विनिकोचनः=सङ्कोचनः ॥१७९-१८०॥

अथातियुक्तस्याम्लस्य गुणानाह—

सोऽतियुक्तो भ्रमं कुर्यात्तृड्दाहतिमिरज्वरान् । कण्डूपाण्डुत्ववीसर्पशोथविस्फोटकुष्ठकृत् ॥१८१॥

अथ लवणस्य गुणानाह—

लवणः शोधनो रुच्यः पाचनः कफपित्तदः ।

पुंस्त्ववातहरः कायशैथिल्यमृदुताकरः बलहा आस्यजलदः कपोलगलदाहकृत् ॥ १८२ ॥

अथातियुक्तस्य लवणस्य गुणानाह—

सोऽतियुक्तोऽक्षिपाकास्रपित्तकोठक्षतादिकृत् । वलीपलितखालित्यकुष्ठवीसर्पतृट्प्रदः ॥ १८३ ॥

*कोठः=वरटीकृतदंशशोथवत् । पलितं=केशशुक्लता । खालित्यं=शिरसि केशनाशः १८३

अथ कटुरसस्य गुणानाह—

कटुरुष्णश्च तीक्ष्णश्च विशदो वातपित्तकृत् । श्लेष्महृल्लघुराग्नेयः कृमिकण्डूविषापहः ॥ १८४ ॥

शुक्रस्तन्यहरश्चापि मेदःस्थौल्यापकर्षणः । अश्रुदो नासिकास्याक्षिजिह्वाऽक्षोद्वेजको मतः ॥१८५॥

दीपनः पाचनो रुच्यो नासिकाशोषणो भृशम् । क्लेदमेदोवसामज्जशकृन्मूत्रोपशोषणः ॥१८६॥

स्रोतःप्रकाशको रूक्षो मेध्यो वर्चोविबन्धकृत् ॥ १८७ ॥

*आग्नेयः=अधिकाग्न्यंशः । मेध्यो=मेधायै हितः । वर्चोविबन्धकृत्=मलबन्धं करोति॥

अथातियुक्तस्य कटुरसस्य गुणानाह—

सोऽतियुक्तो भ्रान्तिदाहमुखताल्वोष्ठशोषकृत् । कण्ठादिपीडामूर्च्छाऽन्तर्दाहदो बलकान्तिहृत्॥

अथ तिक्तरसस्य, गुणानाह—

तिक्तः शीतस्तृषामूर्च्छाज्वरपित्तकफाञ्जयेत् । क्रिमिकुष्ठविषोत्क्लेददाहरक्तगदापहः ॥१८९॥

रुच्यः स्वयमरोचिष्णुः कण्ठस्तन्यविशोधनः । वातलोऽग्निकरो नासाशोषणो रूक्षणो लघुः १९०

*रुच्यः=अन्येषु वस्तुषु रुचिमुत्पादयति । स्वयमरोचिष्णुः=तथा निम्बः स्वयं न रोचते अन्येषु वस्तुषु रुचिं करोति ॥ १८९-१९० ॥

अथातियुक्तस्य तिक्तस्य गुणानाह—

सोऽतियुक्तः शिरःशूलमन्यास्तम्भश्रमार्तिकृत् । कम्पमूर्च्छातृषाकारी बलशुक्रक्षयप्रदः ॥१९१॥

अथ कषायरसस्य गुणानाह—

कषायो रोपणो ग्राही स्तम्भनः शोधनस्तथा । लेखनः पीडनः सौम्यः शोषणो व्रणरोपणः १९२

कफशोणितपित्तघ्नो रूक्षः शीतो लघुर्मतः । रक्तप्रसादन आमस्य स्तम्भनो विशदो मतः ।

जिह्वाया जाड्यकृत्कण्ठस्रोतसां च विबन्धकृत् ॥ १९३ ॥

*रोपणो व्रणस्य । स्तम्भनो गात्राणाम् । शोधनो व्रणस्य । लेखनो व्रणादुत्सन्नमांसस्य। पीडनो हृदयस्य वातकारित्वात् । सौम्यः=सोमादुत्पन्नः शोषणो व्रणमज्जादीनाम् ॥१९३॥

अथातियुक्तस्य कषायस्य गुणानाह—

सोऽतियुक्तो ग्रहाध्मानहृत्पीडाक्षेपणादिकृत् ॥ १९४ ॥

अथ मधुरादीनामपरान् विशेषानाह—

मधुरं श्लेष्मलं प्रायो जीर्णाच्छालियवादृते । मुद्गाद् गोधूमतः क्षौद्रात्सिताया जाङ्गलामिषात्॥१९५
अम्लं पित्तकरं प्रायो विना धात्रीं च दाडिमीम् । लवणं प्रायशो द्वेषि नेत्रयोः सैन्धवं विना॥१९६
प्रायः कटु तथा तिक्तमवृष्यं वातकोपनम् । शुण्ठीकृष्णारसोनानि पटोलममृतां विना ॥१९७॥

उक्तं च चरकेऽपि—

पिप्पली नागरं वृष्यं कटु चावृष्यमुच्यते । प्रायशः स्तम्भनं प्रोक्तं कषायमभयां विना॥ १९८॥
सामान्येनात्र निर्दिष्टा गुणाः षड्रससम्भवाः । रसानां योगतस्तु स्यादन्य एव गुणोदयः ॥१९९॥
संयोगाद्दूषितां याति समामाज्येन माक्षिकम् । अमृतत्वं विषं याति सर्पदष्टस्य वै यथा॥२००॥

अथाकाशादिसम्बन्धिद्रव्यगुणानाह—

लघुर्गुरुस्तथा स्निग्धो रुक्षस्तीक्ष्ण इति क्रमात् । नभोभूवारिवातानां वह्नेरेते गुणाः स्मृताः२०१

अथ लघ्वादिगुणवतां द्रव्याणां गुणानाह—

लघु पथ्यं परं प्रोक्तं कफघ्नं शीघ्रपाकि च ॥ २०२ ॥

*लघु = द्रव्यम् । एवं गुर्वादि ॥

तथा चोक्तम्—

गुर्वादयो गुणा द्रव्ये पृथ्व्यादौ रसाश्रये । रसेषु व्यपदिश्यन्ते साहचर्योपचारतः॥१॥इति२०२
गुरुवातहरं पुष्टश्लेष्मकृच्चिरपाकि च । स्निग्धं वातहरं श्लेष्मकारि वृष्यं बलावहम् ॥
रूक्षं समीरणकरं परं कफहरं मतम् ॥ २०३ ॥

तीक्ष्णं पित्तकरं प्रायो लेखनं कफवातहृत् । सुश्रुते तु गुणा एते विंशतिस्तान्ब्रुवे शृणु ॥२०४॥
गुरुर्लघुः स्निग्धरूक्षौ तीक्ष्णः श्लक्ष्णः स्थिरः सरः । पिच्छिलो विशदः शीत उष्णश्च मृदुकर्कशौ॥
स्थूलः सूक्ष्मो द्रवः शुष्क आशुर्मन्दः स्मृता गुणाः ॥ २०५ ॥

*तत्र गुरुलघुस्निग्धरूक्षतीक्ष्णा गुणा उक्ता एव ।

अन्येषान्त्वाह—

श्लक्ष्णः स्नेहं विनाऽपि स्यात्कठिनोऽपि हि चिक्कणः ॥ २०६ ॥

स्थिरो वातमलस्तम्भी सरस्तेषां प्रवर्तकः । पिच्छिलस्तन्तुलो बल्यःसन्धानःश्लेष्मलो गुरुः २०७

* सन्धानो भग्नस्य ॥ २०७ ॥

क्लेदच्छेदकरः ख्यातो विशदो व्रणरोपणः । शीतस्तु ह्लादनः स्तम्भी मूर्च्छातृट् स्वेददाहनुत् ।
उष्णो भवति शीतस्य विपरीतश्च पाचनः ॥ २०८ ॥

*ह्लादनः = सुखजनकः, स्तम्भी=रक्तातिप्रवृत्त्यादीनाम् । उष्णः = शीतस्य विपरीतस्ते-नाऽसुखजनकः । रक्तातिप्रवृत्त्यादीनामस्तम्भनः । मूर्च्छातृट्स्वेददाहकृत् । पाचनो व्रणादा-नाम् ॥ मृदुकर्कशौ प्रसिद्धौ ॥ २०८ ॥

स्थूलः स्थौल्यकरो देहे स्रोतसामवरोधकृत् ॥ २०९ ॥

देहस्य सूक्ष्मच्छिद्रेषु विशेद्यत्सूक्ष्ममुच्यते । द्रवः क्लेदकरो व्यापी शुष्कस्तद्विपरीतकः ॥२१०॥
आशुराशुकरो देहे धावत्यम्भसि तैलवत् । मन्दःसकलकार्येषु शिथिलोऽल्पोऽपि कथ्यते॥२११॥

* अथ गुणप्रस्तावाद्दीपनादयो गुणाः सलक्षणा उच्यन्ते । तत्रादौ दीपनमाह—

पचेन्नामं वह्निकृच्चद्दीपनं तद्यथा मिसिः ॥ २१२ ॥

* वह्निकृद्=वह्निदीप्तिकृत् । ननु यद्वह्निं प्रदीपयति तदामं कथं न पचेदित्याशङ्कायामुच्यते, दीपनद्रव्यं तावन्तं वह्निं प्रदीपयति यद् अन्ने भोक्तुमिच्छामुत्पादयति, न त्वामं पक्तुं क्षमं यथा-सूक्ष्मदीपाग्निरुद्द्योतं करोति न तु बृहत्स्थालीस्थान् तण्डुलानोदनं कर्त्तुं क्षमः ॥२१२॥

अथ पाचनमाह—

* ननु यद्वह्निं न दीपयति तदामं कथं पचतीत्याशङ्कायामाह—

पचत्यामं न वह्निं च कुर्याद्यत्तद्धि पाचनम् । नागकेशरवद्विद्याच्चित्रो दीपनपाचनः ॥ २१३ ॥

* पाचनं वह्निदीप्तिमकुर्वाणमप्यामं पचति । यथाऽग्न्याधानीस्थोऽङ्गारसमूहोऽन्नं पचति । न तु दीपवत्सर्वतः प्रदीपयति ॥ २१३ ॥

अथ शमनमाह—

न शोधयति यद्दोषान्समान्नोदीरयत्यपि । समीकरोति विषमाञ्छमनं तद्यथाऽमृता ॥२१४॥

* यद् द्रव्यं दोषत्रयं न शोधयति, लोऽध्वोर्ध्वमार्गाभ्यां नानयति, समान्दोषान् नोदीरयति न वर्धयति च शमनं तद् ॥ २१४ ॥

अथानुलोमनमाह—

कृत्वा पाकं मलानां च भित्वा बन्धमधो नयेत् । तच्चानुलोमनं ज्ञेयं यथा प्रोक्ता हरीतकी२१५

* मलानामपक्वानां वातपित्तश्लेष्मणां, बन्धं=वायुबन्धं भित्वाऽधो नयेद्=मलानधः पातयति ॥ २१५ ॥

अथ स्रंसनमाह—

पक्तव्यं यदपक्त्वैव श्लिष्टं कोष्ठे मलादिकम् । नयत्यधः स्रंसनं तद्यथा स्यात्कृतमालकम्२१६

* मलादिकम्=आदिशब्दात् कफपित्ते । कृतमालः=धनबहेरा"सोंदालवा"इति लोके २१६

अथ भेदनमाह—

मलादिकमबद्धं यद् बद्धं वा पिण्डितं मलैः । भित्त्वाऽधः पातयति यद् भेदनं कटुकी यथा २१७

* अबद्धं=शिथिलं, बद्धं=गाढं, मलैः=दोषैस्तत्रापि वातैः, बहुत्वमाधिक्यबोधनार्थं तैः । पिण्डितं=गुटिकीकृतम् ॥ २१७ ॥

अथ रेचनमाह—

विपक्वं यदपक्वं वा मलादि द्रवतां नयेत् । रेचयत्यपि तज्ज्ञेयं रेचनं त्रिवृता यथा ॥ २१८ ॥

* रेचयत्यपि=अधः पातयति च । त्रिवृता="पनिला" इति लोके ॥ २१८ ॥

अथ वमनमाह—

अपक्वं पित्तश्लेष्माणं बलादूर्ध्वं नयेत्तु यत् । वमनं तद्धि विज्ञेयं मदनस्य फलं यथा ॥२१९॥

* ऊर्ध्वं नयेद्=मुखमार्गेण बहिष्कुर्याद् । मदनस्य फलं "मयनफल" इति लोके ॥ २१९ ॥

अथ देहसंशोधनमाह—

स्थानाद् बहिर्नयेदूर्ध्वमधो वा मलसञ्चयम्। देहसंशोधनं तत्स्याद् देवदालीफलं तथा ॥२२०॥

* देवदाली "[illegible]" इति लोके ॥ २२० ॥

अथ ग्राह्याह—

दीपनं पाचनं यत्स्यादुष्णत्वाद् द्रवशोषकम्। ग्राहि तच्च यथा शुण्ठा जीरकं गजपिप्पली॥२२१॥

अथ स्तम्भनमाह—

रौक्ष्याच्छैत्यात्कषायत्वाल्लघुपाकाच्च यद्भवेत्। वातकृत्स्तम्भनं तत्स्याद्यथा वत्सकटुण्टुकौ ॥२२२॥

* वातकृत्=प्रतिलोमवातकृत्। स्तम्भनमधोगामि मलादीनाम्। वत्सकः (कुरैआ) टुण्टुकः (सोनापाठा) ॥ २२२ ॥

अथ छेदनमाह—

श्लिष्टान्कफादिकान्दोषानुन्मूलयति यद् बलात्। छेदनं तद्यथाक्षारा मरिचानि शिलाजतु २२३

* क्षाराः=यवक्षारादयः ॥ २२३ ॥

अथ लेखनमाह—

धातून्मलान्वा देहस्य विशोष्योल्लेखयेच्च यत्। लेखनं तद्यथा क्षौद्रं नीरमुष्णं वचा यवाः ॥

* उल्लेखयेत्=कृशीकुर्यात्। लेखनं=कृशीकारकम्। क्षौद्रं=मधु। यवाः=इन्द्रयवाः ॥२२४॥

अथ वाजीकरणमाह—

यस्माद् द्रव्याद्भवेत्स्त्रीषु हर्षो वाजीकरं हि तत्। यथाऽश्वगन्धा मुसली शर्करा च शतावरी॥२२५॥

* हर्षो=रन्तुं समुत्साहः ॥ २२५ ॥

अथ शुक्रलमाह—

यस्माच्छुक्रस्य वृद्धिःस्याच्छुक्रलं हि तदुच्यते। यथा नागबलाऽद्याःस्युर्बीजं च कपिकच्छुजम्२२६

* नागबला="गुलशकरी" इति लोके ॥ २२६ ॥

अथ शुक्रस्य जनकं रेचकञ्चाह—

दुग्धं माषाश्च भल्लातफलमज्जाऽऽमलानि च। एतानि जनकानि स्यू रेचकानि च रेतसः॥२२७॥

* जनकानि=प्रभावाच्छीघ्रमेव रसाद्युत्पादनपूर्वकं शुक्रं जनयन्ति। रेचकानि=आधिक्यात्प्रवर्त्तयन्ति च ॥ २२७ ॥

अथ शुक्रस्य प्रवर्त्तकं रेचकं स्तम्भकं क्षयकारकञ्चाह—

प्रवर्त्तिनी स्त्री शुक्रस्य रेचनं बृहतीफलम्। जातीफलं स्तम्भकं स्यात्कालिङ्गं क्षयकारि च ॥२२८॥

* स्त्री—स्मरणकीर्त्तनदर्शनसम्भाषणस्पर्शनचुम्बनालिङ्गननिधुवनैः समस्तैर्व्यस्तैश्च शुक्रस्य प्रवर्त्तिनी=प्रवृत्तिकारिणी। रेचनं बृहतीफलम्-बृहत्कण्टकारीफलमपि शुक्रस्य रेचकं प्रवर्तकम्। कालिङ्गं=कालिन्दफलम् ॥ २२८ ॥

अथ रसायनमाह—

रसायनन्तु तज्ज्ञेयं यज्जराव्याधिनाशनम्। यथा हरीतकी धात्री गुग्गुलुश्च शिलाजतु ॥२२९॥

अथ व्यवाय्याह—

पूर्वं व्याप्याखिलं कायं ततः पाकञ्च गच्छति । व्यवायि तद् यथा भङ्गा फेनञ्चाहिसमुद्भवम्२३०

*अन्यद् द्रव्यं पक्वं तद्गुणं करोति । व्यवायि तु अपक्वमेव स्वगुणैः सकलशरीरं व्याप्य पाकं याति । अहिसमुद्भवं फेनम्=अफीम ॥ २३० ॥

अथ विकाशयाह—

सन्धिबन्धांस्तु शिथिलान् यत्करोति विकाशि तत् । विशोष्यौजश्च धातुभ्यो यथा क्रमुककोद्रवौ

*धातुभ्यः=सकलशरीरस्थेभ्यो वीर्यभ्यः । ओजः=उपधातुविशेषं शिशोष्य । क्रमुकः= पूगफलम् ॥ २३१ ॥

अथ मदकार्याह—

बुद्धिं लुम्पति यद् द्रव्यं मदकारि तदुच्यते । तमोगुणप्रधानञ्च यथा मद्यं सुराऽऽदिकम् ॥२३२॥

*मदकारि=मादकम् ॥ २३२ ॥

अथ विषमाह—

व्यवायि च विकाशि स्याच्छ्लेष्मच्छेदि मदावहम् । आग्नेयं जीवितहरं योगवाहि स्मृतं विषम्

*व्यवायि=सकलकायगुणव्यापनपूर्वकपाकगमनशीलम् । विकाशि=ओजः शोषणपूर्वकसन्धिबन्धशिथिलीकरणशीलम् । मदावहं=तमोगुणाधिक्येन बुद्धिविध्वंसकम् । आग्नेयम् =अधिकाग्निगुणम् । योगवाहि=संसर्गिगुणग्राहकम् । विषं लक्ष्यं, दृष्टान्तो वत्सनाभशक्तुकादिभिः ॥ २३३ ॥

अथ प्रमाथ्याह—

निजवीर्य्येण यद् द्रव्यं स्रोतोभ्योदो षसञ्चयम् । निरस्यति प्रमाथि स्यात्तद्यथा मारिचं वचा

* दोषाः=वातादयः ॥ २३४ ॥

अथाभिष्यन्द्याह—

पैच्छिल्याद्गौरवाद्द्रव्यं रुद्ध्वा रसवहाः शिराः । धत्ते यद्गौरवं तत्स्यादभिष्यन्दि यथा दधि२३५

* गौरवं शरीरे ॥ २३५ ॥

अथ विदाह्याह—

विदाहि द्रव्यमुद्गारमम्लं कुर्यात्तथा तृषाम् । हृदि दाहं च जनयेत्पाकं गच्छति तच्चिरात् २३६

अथ योगवाह्याह—

गृह्णाति योगवाहि द्रव्यं संसर्गिवस्तुगुणान् । पच्यमानं यथैतन्मधुजलतैलाज्यसूतलोहादिः२३७

अथ वीर्यमाह, तत्रवाग्भटः—

उष्णशीतगुणोत्कर्षाद् बुधैर्वीर्यं द्विधा स्मृतम् । यत्सर्वमग्निषोमीयं दृश्यते भुवनत्रयम् ॥२३८॥

अथ तद्गुणानाह—

उष्णं वातकफौ हन्यात् पित्तं तु तनुते तराम् । शीतं वातकफातङ्कान्कुरुते पित्तहृत्परम्॥२३९॥

अन्यच्च—

तत्रोष्णं भ्रमतृड्ग्लानिस्वेददाहाशुपाकताम् । शमञ्च वातकफयोः करोति शिशिरं पुनः ॥

ह्लादनं जीवनं स्तम्भं प्रसादं रक्तपित्तयोः ॥ २४० ॥

अथ विपाकमाह—

जाठरेणाग्निना योगाद्यदुदेति रसान्तरम् । रसानां परिणामान्ते स विपाक इति स्मृतः ॥२४१॥

अथ मधुरादिरसयुक्तपदार्थानां विपाकरसानाह—

मिष्टः पटुश्च मधुरमम्लोऽम्लं पच्यते रसः । कटुतिक्तकषायाणां पाकः स्यात्प्रायशः कटुः॥२४२॥

* अथ च वाग्भटः—

त्रिधा रसानां पाकः स्यात्स्वाद्वम्लकटुकात्मकः । प्रायःपदेन व्रीहिःस्यात्स्वादुरम्लो विपाकतः१७

*शिवा कषाया मधुरा पाके, शुण्ठी कटुका मधुरपाकेत्यादि ॥१७॥ इति ॥ २४२ ॥

अथ विपाकानां गुणानाह—

श्लेष्मकृन्मधुरः पाको वातपित्तहरो मतः । अम्लस्तु कुरुते पित्तं वातश्लेष्मगदापहः ॥२४३॥

कटुः करोति पवनं कफं पित्तञ्च नाशयेत् । विशेष एवं रसतो विपाकानां निदर्शितः ॥ २४४ ॥

अथ प्रभावमाह—

रसादिसाम्ये यत्कर्म विशिष्टं तत्प्रभावजम् । दन्ती रसाद्यैस्तुल्यापि चित्रकस्य विरेचनी २४५

मधूकस्य च मृद्वीका घृतं क्षीरस्य दीपनम् । प्रभावस्तु यथा धात्री लकुचस्य रसादिभिः २४६

समाऽपि कुरुते दोषत्रितयस्य विनाशनम् ॥ २४७ ॥

क्वचित्तु केवलं द्रव्यं कर्म कुर्यात् प्रभावतः । ज्वरं हन्ति शिरोबद्धा सहदेवीजटा यथा ॥ २४८ ॥

*तथा नानौषधियोगेषु फलं प्रति स्वभाव एवाश्रयणीयो न तु तत्र रसादिरूपहेतुविचारः कर्त्तव्यः ।

यत आह सुश्रुतः—

अमीमांसान्यचिन्त्यानि प्रसिद्धानि स्वभावतः । आगमेनोपयोज्यानि भेषजानि विचक्षणैः२४९

प्रत्यक्षलक्षणफलाः प्रसिद्धाश्च स्वभावतः । नौषधीर्हेतुभिर्विद्वान् परीक्षेत कदाच न ॥ २५० ॥

विरुद्धगुणसंयोगे भूयसाऽल्पं हि जीयते ॥ रसं विपाकस्तौ वीर्यं प्रभावस्तान् व्यपोहति॥२५१॥

इति वर्गप्रकरणे मिश्रवर्गः प्रथमः समाप्तः ॥ १ ॥

---

## अथ हरीतक्यादिवर्गो द्वितीयः ॥ २ ॥

*रसगुणवीर्यविपाकप्रभावाणां स्वरूपाण्यभिधाय कुत्र द्रव्ये के रसगुणवीर्यविपाकप्रभावाः सन्तीति बोधयितुं द्रव्यगतान् रसगुणवीर्यविपाकप्रभावानाह,

तत्र प्रथमं हरीतक्योत्पत्तिनामलक्षणगुणानाह—

दक्षं प्रजापतिं स्वस्थमश्विनौ वाक्यमूचतुः । कुतो हरीतकी जाता तस्यास्तु कति जातयः ॥१॥

रसाः कति समाख्याताः कति चोपरसाःस्मृताः। नामानि कति चोक्तानि किं वा तासां च लक्षणम्

के च वर्णा गुणाः के च का च कुत्र प्रयुज्यते । केन द्रव्येण संयुक्ता कांश्च रोगान् व्यपोहति॥३॥

प्रश्नमेतद्यथा पृष्टं भगवन् वक्तुमर्हसि । अश्विनोर्वचनं श्रुत्वा दक्षो वचनमब्रवीत् ॥ ४ ॥

पपात बिन्दुर्मेदिन्यां शक्रस्य पिबतोऽमृतम् । ततो दिव्यात्समुत्पन्ना सप्तजातिर्हरीतकी ॥५॥

अथ हरीतकीनामान्याह—

हरीतक्यभया पथ्या कायस्था पूतनाऽमृता । हैमवत्यव्यथा चापि चेतकीश्रेयसी शिवा ॥६॥
वयस्था विजया चापि जीवन्ती रोहिणीति च ॥ ७ ॥

अथ हरीतक्याः सप्तभेदानाह—

विजया रोहिणी चैव पूतना चामृताऽभया । जीवन्ती चेतकी चेति पथ्यायाः सप्त जातयः ॥८॥

* अथ सप्तजातेर्हरीतक्या उत्पत्तिस्थानान्याह—

विन्ध्याद्रौ विजया हिमाचलभवा स्याच्चेतकी पूतना
सिन्धौ स्यादथ रोहिणी निगदिता जाता प्रतिस्थानके ।
चम्पायाममृताऽभया च जनिता देशे सुराष्ट्राह्वये
जीवन्तीति हरीतकी निगदिता सप्त प्रभेदा बुधैः ॥ १ ॥ ८ ॥]

अथ तेषां पृथग्लक्षणान्याह—

अलाबुवृत्ता विजया वृत्ता सा रोहिणी स्मृता। पूतनाऽस्थिमती सूक्ष्मा कथिता मांसलाऽमृता॥९॥
पञ्चरेखाऽभया प्रोक्ता जीवन्ती स्वर्णवर्णिनी । त्रिरेखा चेतकी ज्ञेया सप्तानामियमाकृतिः ॥१०॥

अथ हरीतकीप्रयोगानाह—

विजया सर्वरोगेषु रोहिणी व्रणरोहिणी । प्रलेपे पूतना योज्या शोधनार्थेऽमृता हिता ॥ ११ ॥
अक्षिरोगेऽभया शस्ता जीवन्ती सर्वरोगहृत् । चूर्णार्थे चेतकी शस्ता यथायुक्तं प्रयोजयेत् ॥१२॥
चेतकी द्विविधा प्रोक्ता श्वेता कृष्णा च वर्णतः। षडङ्गुलायता शुक्ला कृष्णा त्वेकाङ्गुला स्मृता॥१३॥
काचिदास्वादमात्रेण काचिद्गन्धेन भेदयेत् । काचित्स्पर्शेन दृष्ट्याऽन्या चतुर्द्धा भेदयेच्छिवा॥१४॥
चेतकीपादपच्छायामुपसर्पन्ति ये नराः । भिद्यन्ते तत्क्षणादेव पशुपक्षिमृगादयः ॥ १५ ॥
चेतकी तु धृता हस्ते यावत्तिष्ठति देहिनः । तावद्भिद्येत वेगैस्तु प्रभावान्नात्र संशयः ॥ १६ ॥
नृपाणां सुकुमाराणां कृशानां भेषजद्विषाम् । चेतकी परमा शस्ता हिता सुखविरेचनी ॥ १७ ॥
सप्तानामपि जातीनां प्रधाना विजया स्मृता । सुखप्रयोगा सुलभा सर्वरोगेषु शस्यते ॥१८॥

अथ हरीतकीगुणानाह—

हरीतकी पञ्चरसाऽलवणा तुवरा परम् । रूक्षोष्णा दीपनी मेध्या स्वादुपाका रसायनी ॥१९॥
चक्षुष्या लघुरायुष्या बृंहणी चानुलोमिनी । श्वासकासप्रमेहार्शःकुष्ठशोथोदरक्रिमीन् ॥ २० ॥
वैस्वर्यग्रहणीरोगविबन्धविषमज्वरान् । गुल्माध्मानतृषाछर्दिहिक्काकण्डूहृदामयान् ॥ २१ ॥
कामलां शूलमानाहं प्लीहानञ्च यकृत्तथा । अश्मरीं मूत्रकृच्छ्रञ्च मूत्राघातञ्च नाशयेत् ॥२२॥

अथ हरीतक्या प्रभावनिबन्धनं दोषहन्तृत्वं न तु रसनिबन्धनमित्याह—

स्वादुतिक्तकषायत्वात्पित्तहृत्कफहृत्तु सा । कटुतिक्तकषायत्वादम्लत्वाद्वातहृच्छिवा ॥२३॥
पित्तकृत्कटुकाम्लत्वाद्वातकृन्न कथं शिवा ॥ २४ ॥
प्रभावाद्दोषहन्तृत्वं सिद्धं यत्तत्प्रकाश्यते । हेतुभिः शिष्यबोधार्थं नापूर्वं क्रियतेऽधुना ॥ २५ ॥
कर्मान्यत्वं गुणैः साम्यं दृष्टमाश्रयभेदतः । यतस्ततो नेति चिन्त्यं धात्रीलकुचयोर्यथा ॥२६॥

अथ हरीतक्यां तद्रसादीनां स्थानान्याह—

पथ्याया मज्जनि स्वादुः स्नाय्वामम्लो व्यवस्थितः। वृन्ते तिक्तस्त्वचि कटुरस्थिस्थस्तुवरो रसः

अथोत्तमहरीतक्या लक्षणान्याह—

नवा स्निग्धा घना वृत्ता गुर्वी क्षिप्ता च याऽम्भसि ।
निमज्जेत्सा प्रशस्ता च कथिताऽतिगुणप्रदा ॥ २८ ॥

नवादिगुणयुक्तत्वं तथैकत्र द्विकर्षता । हरीतक्याः फले यत्र द्वयं तच्छ्रेष्ठमुच्यते ॥ २९ ॥

अथ हरीतक्याः प्रयोगभेदेन फलभेदानाह—

चर्विता वर्द्धयत्यग्निं पेषिता मलशोधिनी । स्विन्ना संग्राहिणी पथ्या भृष्टा प्रोक्ता त्रिदोषनुत् ३०

उन्मीलिनी बुद्धिबलेन्द्रियाणां निर्मूलिनी पित्तकफानिलानाम् ।
विस्रंसिनी मूत्रशकृन्मलानां हरीतकी स्यात् सह भोजनेन ॥ ३१ ॥

अन्नपानकृतान्दोषान्वातपित्तकफोद्भवान् । हरीतकी हरत्याशु भुक्तस्योपरि योजिता ॥३२॥

लवणेन कफं हन्ति पित्तं हन्ति सशर्करा । घृतेन वातजान् रोगान्सर्वरोगान्गुडान्विता ॥३३॥

अथ रसायनगुणार्थिनां कृते हरीतकीप्रयोगविधिमाह—

सिन्धूत्थशर्कराशुण्ठीकणामधुगुडैः क्रमात् । वर्षादिष्वभया प्राश्या रसायनगुणैषिणा ॥ ३४ ॥

अथ हरीतकीभक्षणानर्हजनानाह—

अध्वातिखिन्नो बलवर्जितश्च रूक्षः कृशो लङ्घनकर्शितश्च ।
पित्ताधिको गर्भवती च नारी विमुक्तरक्तस्त्वभयां न खादेत् ॥ ३५ ॥

अथ बिभीतकस्य नामानि गुणांश्चाह—

बिभीतकस्त्रिलिङ्गः स्यादक्षः कर्षफलस्तु सः । कलिद्रुमो भूतवासस्तथा कलियुगालयः ॥ ३६ ॥

बिभीतकं स्वादुपाकं कषायं कफपित्तनुत् । उष्णवीर्यं हिमस्पर्शं भेदनं कासनाशनम् ॥ ३७ ॥

रूक्षं नेत्रहितं केश्यं कृमिवैस्वर्यनाशनम् । बिभीतमज्जा तृट्छर्दिकफवातहरो लघुः ॥
कषायो मदकृच्चाथ धात्रीमज्जाऽपि तद्गुणः ॥ ३८ ॥

अथामलक्या नामानि गुणांश्चाह—

त्रिष्वामलकमाख्यातं धात्री तिष्यफलाऽमृता ॥ ३९ ॥

हरीतकीसमं धात्रीफलं किन्तु विशेषतः । रक्तपित्तप्रमेहघ्नं परं वृष्यं रसायनम् ॥ ४० ॥

हन्ति वातं तदम्लत्वात्पित्तं माधुर्यशैत्यतः । कफं रूक्षकषायत्वात्फलं धात्र्यास्त्रिदोषजित् ४१

यस्य यस्य फलस्येह वीर्यं भवति यादृशम् । तस्य तस्यैव वीर्येण मज्जानमपि निर्दिशेत् ॥४२॥

अथ त्रिफलाया लक्षणनामगुणानाह—

पथ्याबिभीतधात्रीणां फलैः स्यात्त्रिफला समैः । फलत्रिकञ्च त्रिफला सा वरा च प्रकीर्त्तिता ४३

त्रिफला कफपित्तघ्नी मेहकुष्ठहरा सरा । चक्षुष्या दीपनी रुच्या विषमज्वरनाशिनी ॥ ४४ ॥

अथ शुण्ठ्या नामानि गुणांश्चाह—

शुण्ठी विश्वा च विश्वञ्च नागरं विश्वभेषजम् । ऊषणं कटुभद्रञ्च शृङ्गवेरं महौषधम् ॥ ४५ ॥

शुण्ठी रुच्याऽऽमवातघ्नी पाचनी कटुका लघुः । स्निग्धोष्णा मधुरा पाके कफवातविबन्धनुत् ॥४६॥

वृष्या स्वर्या वमिश्वासशूलकासहृदामयान्। हन्ति श्लीपदशोथार्शं आनाहोदरमारुतान्॥४७॥
आग्नेयगुणभूयिष्ठात् तोयांशपरिशोषि यत्। संगृह्णाति मलं तत्तु ग्राहि शुण्ठ्यादयो यथा ॥४८॥
विबन्धभेदिनी या तु सा कथं ग्राहिणी भवेत्। शक्तिर्विबन्धभेदे स्याद्यतो न मलपातने ॥ ४९ ॥

अथार्द्रकस्य नामानि गुणांश्चाह—

आर्द्रकं शृङ्गवेरं स्यात् कटुभद्रं तथाऽऽर्द्रिका। आर्द्रिका भेदिनी गुर्वी तीक्ष्णोष्णा दीपनी मता ५०
कटुका मधुरा पाके रूक्षा वातकफापहा। ये गुणाः कथिताः शुण्ठ्यास्तेऽपि सन्त्यार्द्रकेऽखिलाः॥५१॥
भोजनाग्रे सदा पथ्यं लवणार्द्रकभक्षणम्। अग्निसंदीपनं रुच्यं जिह्वाकण्ठविशोधनम् ॥ ५२ ॥
कुष्ठपाण्ड्वामये कृच्छ्रे रक्तपित्ते व्रणे ज्वरे। दाहे निदाघशरदोर्नैव पूजितमार्द्रकम् ॥ ५३ ॥

अथ पिप्पल्या नामानि गुणांश्चाह—

पिप्पली मागधी कृष्णा वैदेही चपला कणा। उपकुल्योषणा शौण्डी कोला स्यात्तीक्ष्णतण्डुला
पिप्पली दीपनी वृष्या स्वादुपाका रसायनी। अनुष्णा कटुका स्निग्धा वातश्लेष्महरी लघुः ५५
पिप्पली रेचनी हन्ति श्वासकासोदरज्वरान्। कुष्ठप्रमेहगुल्मार्शःप्लीहशूलाममारुतान् ॥ ५६ ॥
आर्द्रा कफप्रदा स्निग्धा शीतला मधुरा गुरुः। पित्तप्रशमनी सा तु शुष्का पित्तप्रकोपिणी॥५७॥
पिप्पली मधुसंयुक्ता मेदःकफविनाशिनी। श्वासकासज्वरहरा वृष्या मेध्याऽग्निवर्द्धिनी॥५८॥
जीर्णज्वरेऽग्निमान्द्ये च शस्यते गुडपिप्पली। कासाजीर्णारुचिश्वासहृत्पाण्डुकृमिरोगनुत्॥
द्विगुणः पिप्पलीचूर्णाद् गुडोऽत्र भिषजां मतः॥ ५९ ॥

अथ मरीचस्य नामानि गुणांश्चाह—

मरिचं वेल्लजं कृष्णमूषणं धर्मपत्तनम्॥ ६० ॥
मरिचं कटुकं तीक्ष्णं दीपनं कफवातजित्। उष्णं पित्तकरं रूक्षं श्वासशूलकृमीन्हरेत्॥ ६१ ॥
तदार्द्रं मधुरं पाके नात्युष्णं कटुकं गुरु। किञ्चित्तीक्ष्णगुणं श्लेष्मप्रसेकि स्यादपित्तलम् ॥ ६२ ॥

अथ त्रिकटुकलक्षणनामगुणांश्चाह—

विश्वोपकुल्या मरिचं त्रयं त्रिकटु कथ्यते। कटुत्रिकं तु त्रिकटु त्र्यूषणं व्योष उच्यते ॥ ६३ ॥
त्र्यूषणं दीपनं हन्ति श्वासकासत्वगामयान्। गुल्ममेहकफस्थौल्यमेदःश्लीपदपीनसान् ॥ ६४ ॥

अथ पिप्पलीमूलस्य नामानि गुणांश्चाह—

ग्रन्थिकं पिप्पलीमूलमूषणं चटकाशिरः। दीपनं पिप्पलीमूलं कटूष्णं पाचनं लघु॥ ६५ ॥
रूक्षं पित्तकरं भेदि कफवातोदरापहम्। आनाहप्लीहगुल्मघ्नं कृमिश्वासक्षयापहम् ॥ ६६ ॥

अथ चतुरूषणस्य लक्षणगुणानाह—

त्र्यूषणं सकणामूलं कथितं चतुरूषणम्। व्योषस्येव गुणाः प्रोक्ता अधिकाश्चतुरूषणे ॥६७॥

अथ चव्यनामगुणानाह—

भवेच्चव्यं तु चविका कथिता सा तथोषणा। कणामूलगुणं चव्यं विशेषाद् गुदजापहम्॥६८॥

अथ गजपिप्पल्या नामानि गुणांश्चाह—

चविकायाः फलं प्राज्ञैः कथिता गजपिप्पली। कपिवल्ली कोलवल्ली श्रेयसी वशिरश्च सा ॥६९॥
गजकृष्णा कटुर्वातश्लेष्महृद्वह्निवर्धिनी। उष्णा निहन्त्यतीसारं श्वासकण्ठामयक्रिमीन् ॥७०॥

अथ चित्रकस्य नामानि गुणाँश्चाह—

चित्रकोऽनलनामा च पीठो व्यालस्तथोषणः । चित्रकः कटुकः पाके वह्निकृत्पाचनो लघुः ॥ ७१ ॥
रूक्षोष्णो ग्रहणीकुष्ठशोथार्शःकृमिकासनुत् । वातश्लेष्महृद् ग्राही वातघ्नः श्लेष्मपित्तहृत् ॥ ७२ ॥

अथ पञ्चकोलस्य लक्षणगुणानाह—

पिप्पली पिप्पलीमूलं चव्यचित्रकनागरैः । पञ्चभिः कोलमात्रं यत्पञ्चकोलं तदुच्यते ॥ ७३ ॥
पञ्चकोलं रसे पाके कटुकं रुचिकृन्मतम् । तीक्ष्णोष्णं पाचनं श्रेष्ठं दीपनं कफवातनुत् ॥
गुल्मप्लीहोदरानाहशूलघ्नं पित्तकोपनम् ॥ ७४ ॥

अथ षडूषणस्य लक्षणगुणानाह—

पञ्चकोलं समरिचं षडूषणमुदाहृतम् । पञ्चकोलगुणं तत्तु रूक्षमुष्णं विषापहम् ॥ ७५ ॥

अथ यवान्या नामानि गुणाँश्चाह—

यवानिकोग्रगन्धा च ब्रह्मदर्भाऽजमोदिका ॥ ७६ ॥
सैवोक्ता दीप्यकादीप्या तथा स्याद्यवसाह्वया । यवानी पाचनी रुच्या तीक्ष्णोष्णा कटुका लघुः ॥
दीपनी च तथा तिक्ता पित्तला शुक्रशूलहृत् । वातश्लेष्मोदरानाहगुल्मप्लीहकृमिप्रणुत् ॥ ७८ ॥

अथाजमोदाया नामानि गुणांश्चाह—

अजमोदा खराश्वा च मायूरी दीप्यकस्तथा । तथा ब्रह्मकुशा प्रोक्ता कारवी लोचमस्तका ॥ ७९ ॥
अजमोदा कटुस्तीक्ष्णा दीपनी कफवातनुत् । उष्णा विदाहिनी हृद्या वृष्या बलकरी लघुः ॥
नेत्रामयकृमिच्छर्दिहिक्काबस्तिरुजो हरेत् ॥ ८० ॥

अथ पारसीकयवानीगुणानाह—

पारसीकयवानी तु यवानीसदृशी गुणैः । विशेषात्पाचनी रुच्या ग्राहणी मादिनी गुरुः ॥ ८१ ॥

अथ शुक्लजीरककृष्णजीरककालिकानां नामानि गुणांश्चाह—

जीरको जरणोऽजाजी कणा स्याद्दीर्घजीरकः ॥ ८२ ॥
कृष्णजीरः सुगन्धश्च तथैवोद्गारशोधनः । कालाजाजी तु सुषवी कालिका चोपकालिका ॥ ८३ ॥
पृथ्वीका कारवी पृथ्वी पृथुकृष्णोपकुञ्चिका । उपकुञ्ची च कुञ्ची च बृहज्जीरक इत्यपि ॥ ८४ ॥
जीरकत्रितयं रूक्षं कटूष्णं दीपनं लघु । संग्राहि पित्तलं मेध्यं गर्भाशयविशुद्धिकृत् ॥ ८५ ॥
ज्वरघ्नं पाचनं वृष्यं बल्यं रुच्यं कफापहम् । चक्षुष्यं पवनाध्मानगुल्मच्छर्द्यतिसारहृत् ॥ ८६ ॥

अथ धान्यकस्य नामानि गुणांश्चाह—

धान्यकं धानकं धान्यं धाना धानेयकं तथा । कुनटी धेनुका छत्रा कुस्तुम्बुरु वितुन्नकम् ॥ ८७ ॥
धान्यकं तुवरं स्निग्धमवृष्यं मूत्रलं लघु । तिक्तं कटूष्णवीर्यञ्च दीपनं पाचनं स्मृतम् ॥ ८८ ॥
ज्वरघ्नं रोचकं ग्राहि स्वादुपाकि त्रिदोषनुत् । तृष्णादाहवमिश्वासकासकार्श्यक्रिमिप्रणुत् ।
आर्द्रन्तु तद्गुणं स्वादु विशेषात्पित्तनाशनम् ॥ ८९ ॥

अथ शतपुष्पामिश्रेययोर्नामानि गुणांश्चाह—

शतपुष्पा शताह्वा च मधुरा कारवी मिसिः । अतिलम्बो सितच्छत्रा संहितच्छत्रिकाऽपि च ९०
छत्रा शालेयशालीनो मिश्रेया मधुरा मिसिः । शतपुष्पा लघुस्तीक्ष्णा पित्तकृद्दीपनी कटुः ॥ ९१ ॥

उष्णा ज्वरानिलश्लेष्मव्रणशूलाक्षिरोगहृत्। मिश्रेया तद्गुणा प्रोक्ता विशेषाद्योनिशूलनुत् ९०
अग्निमान्द्यहरी हृद्या बद्धविट्क्रिमिशुक्रहृत्। रूक्षोष्णा पाचनी कासवमिश्लेष्मानिलान् हरेत् ९१

अथ मेथीवनमेथीनामगुणानाह—

मेथिका मेथिनी मेथी दीपनी बहुपत्रिका। बोधिनी बहुबीजा च ज्योतिर्गन्धफला तथा ॥९४॥
वल्लरी चन्द्रिका मन्था मिश्रपुष्पा च कैरवी। कुञ्चिका बहुपर्णी च पीतबीजा मुनिच्छदा ॥९५॥
मेथिका वातशमनी श्लेष्मघ्नी ज्वरनाशिनी। ततः स्वल्पगुणा वन्या वाजिनां सा तु पूजिता ९६

अथ चन्द्रशूरस्य नामानि गुणाँश्चाह—

चन्द्रिका चर्महन्त्री च पशुमेहनकारिका। नन्दिनी कारवी भद्रा वासपुष्पा सुवासरा ॥ ९७ ॥
चन्द्रशूरं हितं हिक्कावातश्लेष्मातिसारिणाम्। असृग्वातगदद्वेषि बलपुष्टिविवर्द्धनम् ॥ ९८ ॥

अथ चतुर्बीजलक्षणगुणानाह

मेथिका चन्द्रशूरश्च कालाजाजी यवानिका। एतच्चतुष्टयं युक्तं चतुर्बीजमिति स्मृतम् ॥ ९९ ॥
तच्चूर्णं भक्षितं नित्यं निहन्ति पवनामयम्। अजीर्णं शूलमाध्मानं पार्श्वशूलं कटिव्यथाम् १००

अथ हिङ्गुनामगुणानाह—

सहस्रवेधि जतुकं बाह्लीकं हिङ्गु रामठम् ॥ १०१ ॥
हिङ्गूष्णं पाचनं रुच्यं तीक्ष्णं वातबलासनुत्। शूलगुल्मोदरानाहक्रिमिघ्नं पित्तवर्द्धनम् ॥१०२॥

अथ वचाया नामानि गुणांश्चाह

वचोग्रगन्धा षड्ग्रन्था गोलोमी शतपर्विका। क्षुद्रपत्री च मङ्गल्या जटिलोग्रा च लोमशा १०३
वचोग्रगन्धा कटुका तिक्तोष्णा वान्तिवह्निकृत्। विबन्धाध्मानशूलघ्नी शकृन्मूत्रविशोधिनी ॥
अपस्मारकफोन्मादभूतजन्त्वनिलान् हरेत् ॥ १०४ ॥

अथ पारसीक ( खुरासानी ) वचाया नामानि गुणांश्चाह—

पारसीकवचा शुक्ला प्रोक्ता हैमवतीति सा। हैमवत्युदिता तद्वद्वातं हन्ति विशेषतः ॥ १०५ ॥

अथ महाभरीवचा यस्या लोके "कुलिंजन" इति नामान्तरं तस्या गुणानाह—

सुगन्धाऽप्युग्रगन्धा च विशेषात्कफकासनुत्। सुस्वरत्वकरी रुच्या, हृत्कण्ठमुखशोधिनी ॥१०६॥

अथ अपरा सुगन्धा स्थूलग्रन्थिः यस्या लोके महाभरी इति नाम तस्या गुणानाह—

स्थूलग्रन्थिः सुगन्धा स्यात्ततो हीनगुणा स्मृता ॥ १०७ ॥

अथ चोपचीनीति लोके या प्रसिद्धा तस्या नाम गुणांश्चाह—

द्वीपान्तरवचा किञ्चित्तिक्तोष्णा वह्निदीप्तिकृत्। विबन्धाध्मानशूलघ्नी शकृन्मूत्रविशोधिनी, १०८
वातव्याधीनपस्मारमुन्मादं तनुवेदनाम्। व्यपोहति विशेषेण फिरङ्गामयनाशिनी ॥ १०९ ॥

अथ हवुषाद्वयम्, तन्मध्ये प्रथमं फलं मत्स्यसदृशं विस्रगन्धं द्वितीयमश्वत्थफलसदृशं मत्स्यगन्धम्, तयोर्नामानि गुणांश्चाह—

हवुषा वपुषा विस्रा पराऽश्वत्थफला मता। मत्स्यगन्धा प्लीहहन्त्री विषघ्नी ध्वाङ्क्षनाशिनी ११०
हवुषा दीपनी तिक्ता मृदूष्णा तुवरा गुरुः। पित्तोदरसमीरार्शोग्रहणीगुल्मशूलहृत् ॥

यशाऽप्येतद्गुणा प्रोक्ता रूपभेदो द्वयोरपि ॥ १११ ॥

अथ विडङ्गस्य नामानि गुणांश्चाह—

पुंसि क्लीबे विडङ्गः स्यात्कृमिघ्नो जन्तुनाशनः। तण्डुलाश्च तथा वेल्लममोघा चित्रतण्डुला ॥११२

विडङ्गं कटु तीक्ष्णोष्णं रूक्षं वह्निकरं लघु। शूलाध्मानोदरश्लेष्मकृमिवातविबन्धनुत्॥ ११३ ॥

अथ तुम्बुरुफलस्य नामानि गुणांश्चाह—

तुम्बुरुः सौरभः सौरो वनजः सानुजोऽन्धकः ॥ ११४ ॥

तुम्बुरु प्रथितं तिक्तं कटुपाकेऽपि तत्कटु। रूक्षोष्णं दीपनं तीक्ष्णं रुच्यं लघु विदाहि च ॥११५॥

वातश्लेष्माक्षिकर्णौष्ठशिरोरुग्गुरुताकृमीन्। कुष्ठशूलारुचिश्वासप्लीहकृच्छ्राणि नाशयेत् ॥११६॥

अथ वंशलोचनस्य नामानि गुणांश्चाह—

स्याद्वंशरोचना वांशी तुगाक्षीरी तुगा शुभा। त्वक्क्षीरी वंशजा शुभ्रा वंशक्षीरी च वैणवी ॥११७॥

वंशजा बृंहणी वृष्या बल्या स्वाद्वी च शीतला। तृष्णाकासज्वरश्वासक्षयपित्तास्रकामलाः ॥

हरेत्कुष्ठं व्रणं पाण्डुं कषाया वातकृच्छ्रजित् ॥ ११८ ॥

अथ समुद्रफेनस्य नामानि गुणांश्चाह—

समुद्रफेनः फेनश्च डिण्डीरोऽब्धिकफस्तथा ॥ ११९ ॥

समुद्रफेनश्चक्षुष्यो लेखनः शीतलश्च सः। कषायो विषपित्तघ्नः कर्णरुक्कफहृत्सरः ॥ १२० ॥

अथाष्टवर्गस्य लक्षणगुणानाह—

जीवकर्षभकौ मेदे काकोल्यौ ऋद्धिवृद्धिके। अष्टवर्गोऽष्टभिर्द्रव्यैः कथितश्चरकादिभिः ॥१२१॥

अष्टवर्गो हिमःस्वादुर्बृंहणः शुक्रलो गुरुः। भग्नसन्धानकृत्कामबलासबलवर्द्धनः ॥

वातपित्तास्रतृड्दाहज्वरमेहक्षयप्रणुत् ॥ १२२ ॥

तत्रादौ जीवकर्षभकयोरुत्पत्तिलक्षणनामगुणानाह—

जीवकर्षभकौ ज्ञेयौ हिमाद्रिशिखरोद्भवौ। रसोनकन्दवत्कन्दौ निःसारौ सूक्ष्मपत्रकौ ॥ १२३ ॥

जीवकः कूर्चकाकार ऋषभो वृषशृङ्गवत्। जीवको मधुरः शृङ्गो ह्रस्वाङ्गः कूर्चशीर्षकः ॥ १२४ ॥

ऋषभो वृषभो धीरो विषाणी द्राक्ष इत्यपि। जीवकर्षभकौ बल्यौ शीतौ शुक्रकफप्रदौ ॥१२५॥

मधुरौ पित्तदाहास्रकार्श्यवातक्षयापहौ ॥ १२६ ॥

अथ मेदामहामेदयोरुत्पत्तिलक्षणनामगुणानाह—

महामेदाऽभिधः कन्दो मोरङ्गादौ प्रजायते। महामेदा तथा मेदा स्यादित्युक्तं मुनीश्वरैः॥१२७॥

शुक्लार्द्रकनिभः कन्दो लताजातः सुपाण्डुरः। महामेदाऽभिधो ज्ञेयो मेदालक्षणमुच्यते ॥ १२८ ॥

शुक्लकन्दो नखच्छेद्यो मेदोधातुमिव स्रवेत्। यः स मेदेति विज्ञेयो जिज्ञासातत्परैर्जनैः ॥१२९॥

शल्यपर्णी मणिच्छिद्रा मेदा मेदोभवाऽध्वरा। महामेदा वसुच्छिद्रा त्रिदन्ती देवतामणिः १३०

मेदायुग्मं गुरु स्वादु वृष्यं स्तन्यकफावहम्। बृंहणं शीतलं पित्तरक्तवातज्वरप्रणुत् ॥ १३१ ॥

अथ काकोलीक्षीरकाकोल्योरुत्पत्तिलक्षणनामगुणानाह—

जायते क्षीरकाकोली महामेदोद्भवस्थले ॥ १३२ ॥

यत्र स्यात्क्षीरकाकोली काकोली तत्र जायते । पीवरीसदृशः कन्दः सक्षीरः प्रियगन्धवान् १३३
स प्रोक्तः क्षीरकाकोली काकोलीलिङ्गमुच्यते । यथा स्यात्क्षीरकाकोली काकोल्यपि तथा भवेत्
एषा किञ्चिद्भवेत्कृष्णा भेदाऽयमुभयोरपि । काकोली वायसोली च वीरा कायस्थिका तथा१३५
सा शुक्ला क्षीरकाकोली वयस्था क्षीरवल्लिका । कथिता क्षीरिणी धीरा क्षीरशुक्ला पयस्विनी१३६
काकोलीयुगलं शीतं शुक्रलं मधुरं गुरु । बृंहणं वातदाहास्रपित्तशोषज्वरापहम् ॥ १३७ ॥

अथ ऋद्धिवृद्धयोरुत्पत्तिलक्षणनामगुणानाह—

ऋद्धिर्वृद्धिश्च कन्दौ द्वौ भवतः कोशलेऽचले । श्वेतलोमान्वितः कन्दो लताजातः सरन्ध्रकः १३८
स एव ऋद्धिर्वृद्धिश्च भेदमप्येतयोर्ब्रुवे । तूलग्रन्थिसमा ऋद्धिर्वामावर्तफला च सा ॥ १३९ ॥
वृद्धिस्तु दक्षिणावर्त्तफला प्रोक्ता महर्षिभिः । ऋद्धिर्योग्यं सिद्धिलक्ष्म्यौ वृद्धेरप्याह्वया इमे १४०
ऋद्धिर्बल्या त्रिदोषघ्नी शुक्रला मधुरा गुरुः । प्राणैश्वर्यकरी मूर्च्छारक्तपित्तविनाशिनी ॥१४१॥
वृद्धिर्गर्भप्रदा शीता बृंहणी मधुरा स्मृता । वृष्या पित्तास्रशमनी क्षतकासक्षयापहा ॥ १४२ ॥
राज्ञामप्यष्टवर्गस्तु यतोऽयमतिदुर्लभः । तस्मादस्य प्रतिनिधिं गृह्णीयात्तद्गुणं भिषक् ॥१४३॥

* मुख्यसदृशः प्रतिनिधिः ॥ १४३ ॥

अथाष्टवर्गस्य प्रतिनिधिमाह—

मेदाजीवककाकोलीऋद्धिद्वन्द्वेऽपि चासति । वरीविदार्यश्वगन्धावाराहीश्च क्रमात् क्षिपेत्॥१४४॥

* मेदामहामेदास्थाने शतावरीमूलम् । जीवकर्षभकस्थाने विदारीमूलम् । काकोलीक्षीरकाकोलीस्थाने अश्वगन्धामूलम् । ऋद्धिवृद्धिस्थाने वाराहीकन्दं गुणैस्तत्तुल्यं क्षिपेत् ॥ १४४ ॥

अथ यष्टीमधुनामगुणानाह—

यष्टीमधु तथा यष्टीमधुकं क्लीतकं तथा । अन्यत् क्लीतनकं तत्तु भवेत्तोये मधूलिका ॥ १४५ ॥
यष्टी हिमा गुरुः स्वाद्वी चक्षुष्या बलवर्णकृत् । सुस्निग्धा शुक्रला केश्या स्वर्या पित्तानिलास्रजित् ॥
व्रणशोथविषच्छर्दितृष्णाग्लानिक्षयापहा ॥ १४६ ॥

अथ काम्पिल्लस्य नामगुणानाह—

काम्पिल्लः कर्कशश्चन्द्रो रक्ताङ्गो रोचनोऽपि च । काम्पिल्लः कफपित्तास्रक्रिमिगुल्मोदरव्रणान् ॥
हन्ति रेची कटूष्णश्च मेहानाहविषाश्मनुत् ॥ १४७ ॥

अथारग्वधस्य ( धनवहेरा, अमलतास ) नामगुणानाह—

आरग्वधो राजवृक्षः शम्याकश्चतुरङ्गुलः । आरेवतो व्याधिघातः कृतमालः सुवर्णकः ॥ १४८ ॥
कर्णिकारो दीर्घफलः स्वर्णाङ्गः स्वर्णभूषणः । आरग्वधो गुरुः स्वादुः शीतलः स्रंसनोत्तमः ॥१४९
ज्वरहृद्रोगपित्तास्रवातोदावर्त्तशूलनुत् । तत्फलं स्रंसनं रुच्यं कुष्ठपित्तकफापहम् ॥ १५० ॥
ज्वरे तु सततं पथ्यं कोष्ठशुद्धिकरं परम् ॥ १५१ ॥

अथ कटुकाया ( कुटकी ) नामगुणानाह—

कट्वी तु कटुका तिक्ता कृष्णभेदा कटम्भरा । अशोका मत्स्यशकला चक्राङ्गी शकुलादनी॥१५२॥
मत्स्यपित्ता काण्डरुहा रोहिणी कटुरोहिणी ॥ कट्वी तु कटुका पाके तिक्ता रूक्षा हिमा लघुः॥१५३॥
भेदिनी दीपनी हृद्या कफपित्तज्वरापहा । प्रमेहश्वासकासास्रदाहकुष्ठक्रिमिप्रणुत् ॥ १५४ ॥

अथ किरातकस्य ( चिरायता ) नामगुणानाह—
किरातत्तिक्तः कैरातः कटुतिक्तः किरातकः ॥ १५६ ॥
काण्डतिक्तोऽनार्यतिक्तो भूनिम्बो रामसेनकः । किरातकोऽन्यो नैपालः सोऽर्द्धतिक्तोज्वरान्तकः
किरातः सारको रूक्षः शीतलस्तिक्तको लघुः । सन्निपातज्वरश्वासकफपित्तास्रदाहनुत् ।
कासशोथतृषाकुष्ठज्वरव्रणकृमिप्रणुत् ॥ १५७ ॥
अथेन्द्रयवस्य नामगुणानाह—
उक्तं कुटजबीजं तु यवमिन्द्रयवं तथा । कलिङ्गं चापि कालिङ्गं तथा भद्रयवा अपि ॥ १५८ ॥
क्वचिदिन्द्रस्य नामैव भवेत्तदभिधायकम् । फलानीन्द्रयवास्तस्य तथा भद्रयवा अपि ॥ १५९ ॥
इन्द्रयवं त्रिदोषघ्नं संग्राहि कटु शीतलम् ॥ १६० ॥
ज्वरातीसाररक्तार्शोवामवीसर्पकुष्ठनुत् । दीपनं गुदकीलास्रवातास्रश्लेष्मशूलजित् ॥ १६१ ॥
अथ मदनस्य ( मयनफल ) नामगुणानाह—
मदनश्छर्दनः पिण्डो नटः पिण्डीतकस्तथा । करहाटो मरुवकः शल्यको विषपुष्पकः ॥१६२ ॥
मदनो मधुरस्तिक्तो वीर्योष्णो लेखनो लघुः । वान्तिकृद्विद्रधिहरः प्रतिश्यायव्रणान्तकः ॥
रूक्षः कुष्ठकफानाहशोथगुल्मव्रणापहः ॥ १६३ ॥
अथ रास्नाया नामानि गुणांश्चाह—
रास्ना युक्तरसा रस्या सुवहा रसना रसा । एलापर्णी च सुरसा सुगन्धा श्रेयसी तथा ॥१६४॥
रास्नाऽऽमपाचिनी तिक्ता गुरूष्णा कफवातजित् ॥ १६५ ॥
शोथश्वाससमीरास्रवातशूलोदरापहा । कासज्वरविषाशीतिवातिकामयसिध्महृत् ॥ १६६ ॥
अथ ( रास्नाभेदः ) नाकुली ( नाई ) नामगुणानाह—
नाकुली सुरसा नागसुगन्धा गन्धनाकुली । नकुलेष्टा भुजङ्गाक्षी सर्पाङ्गी विषनाशिनि ॥१६७॥
नाकुली तुवरा तिक्ता कटुकोष्णा विनाशयेत्। भोगिलूतावृश्चिकाखुविषज्वरकृमिव्रणान् ॥ १६८ ॥
अथ माचिकाया ( पश्चिमदेशे "मोइया" इति लोके प्रसिद्धो वृक्षविशेषः ) नामगुणानाह—
माचिका प्रस्थिकाऽम्बष्ठा तथा चाम्बालिकाऽम्बिका । मयूरविदला केशी सहस्रा बालमूलिका१६९
माचिकाऽम्ला रसे पाके कषाया शीतला लघुः। पक्वातिसारपित्तास्रकफकण्ठामयापहा॥ १७० ॥
अथ तेजोवत्या (तेजवल्कल "तेजवल" इति च लोके) नामानि गुणांश्चाह—
तेजस्विनी तेजवती तेजोह्वा तेजनी तथा । तेजस्विनी कफश्वासकासास्यामयवातहृत् ॥
पाचन्युष्णा कटुस्तिक्ता रुचिवह्निप्रदीपिनी ॥ १७१ ॥
अथ ज्योतिष्मती ( मालकांगुनी ) तस्या नामानि गुणांश्चाह—
ज्योतिष्मती स्यात् कटभी ज्योतिष्का कङ्गनीति च ।
पारावतपदी पिण्या लता प्रोक्ता ककुन्दनी ॥ १७२ ॥
ज्योतिष्मती कटुस्तिक्ता सरा कफसमीरजित् । अत्युष्णा वामनी तीक्ष्णा वह्निबुद्धिस्मृतिप्रदा
अथ कुष्ठम् ( कूठ ) तस्य नामानि गुणांश्चाह—
कुष्ठं रोगाह्वयं वाप्यं पारिभव्यं तथोत्पलम् ॥ १७४ ॥

कुष्ठमुष्णं कटु स्वादु शुक्रलं तिक्तकं लघु । हन्ति वातास्रवीस कासकुष्ठमरुत्कफान् ॥१७५॥

अथ कुष्ठभेदः—पुष्करमूलं, तस्य नामानि गुणांश्चाह—

उक्तं पुष्करमूलन्तु पौष्करं पुष्करञ्च तत् । पद्मपत्रञ्च काश्मीरं कुष्ठभेदमिमं जगुः ॥ १७६ ॥
पौष्करं कटुकं तिक्तमुष्णं वातकफज्वरान् । हन्ति शोथारुचिश्वासान् विशेषात्पार्श्वशूलनुत् १७७

अथ कटुपर्णी ( चोक ) तस्या नामगुणानाह—

कटुपर्णी हैमवती हेमक्षीरी हिमावती । हेमाह्वा पीतदुग्धा च तन्मूलं चोकमुच्यते ॥ १७८ ॥
हेमाह्वा रेचनी तिक्ता भेदन्युत्क्लेशकारिणी । कृमिकण्डूविषानाहकफपित्तास्रकुष्ठनुत् १७९॥

अथ कर्कटशृङ्गी ( काँकडाशृङ्गी ) तस्या नामानि गुणांश्चाह—

शृङ्गी कर्कटशृङ्गी च स्यात्कुलीरविषाणिका । अजशृङ्गी तु चक्रा च कर्कटाख्या च कीर्तिता १८०
शृङ्गी कषाया तिक्तोष्णा कफवातक्षयज्वरान् । श्वासोर्ध्ववाततृट्कासहिक्कारुचिवमीन्हरेत् १८१

अथ कट्फलः ( कायफल ) तस्य नामानि गुणांश्चाह—

कट्फलः सोमवल्कश्च कैटर्यः कुम्भिकाऽपि च । श्रीपर्णिका कुमुदिका भद्रा भद्रवतीति च १८२
कट्फलस्तुवरस्तिक्तः कटुर्वातकफज्वरान् । हन्ति श्वासप्रमेहार्शःकासकण्ठामयारुचीः ॥१८३॥

अथ भार्गी ( भारङ्गी ) तस्या नामानि गुणांश्चाह—

भार्गी भृगुभवा पद्मा फञ्जी ब्राह्मणयष्टिका । ब्राह्मण्यङ्गारवल्ली च खरशाकश्च हञ्जिका ॥१८४॥
भार्गी रूक्षा कटुस्तिक्ता रुच्योष्णा पाचनी लघुः ।
दीपनी तुवरा गुल्मरक्तनुन्नाशयेद् ध्रुवम् । शोथकासकफश्वासपीनसज्वरमारुतान् ॥ १८५ ॥

अथ पाषाणभेदः, तस्य नामानि गुणांश्चाह—

पाषाणभेदकोऽश्मघ्नो गिरिभिद्भिन्नयोजनी । अश्मभेदो हिमस्तिक्तः कषायो बस्तिशोधनः १८६
भेदनो हन्ति दोषार्शोगुल्मकृच्छ्राश्महृद्रुजः । योनिरोगान् प्रमेहांश्च प्लीहशूलव्रणानि च १८७

अथ धातकी ( धाई ) तस्या नामानि गुणांश्चाह—

धातकी धातुपुष्पी च ताम्रपुष्पी च कुञ्जरा । सुभिक्षा बहुपुष्पी च वह्निज्वाला च सा स्मृता १८८
धातकी कटुका शीता मृदुकृत्तुवरा लघुः । तृष्णाऽतीसारपित्तास्रविषक्रिमिविसर्पजित् ॥१८९॥

अथ मञ्जिष्ठा ( मंजीठ ) तस्या नामानि गुणांश्चाह—

मञ्जिष्ठा विकसा जिङ्गी समङ्गा कालमेषिका ॥ १९० ॥
मण्डूकपर्णी भण्डीरी भण्डी योजनवल्ल्यपि । रसायन्यरुणा काला रक्ताङ्गी रक्तयष्टिका ॥१९१॥
भण्डीतकी च गण्डीरी मञ्जूषा वस्त्ररञ्जिनी । मञ्जिष्ठा मधुरा तिक्ता कषाया स्वरवर्णकृत् १९२
गुरुरुष्णा विषश्लेष्मशोथयोन्यक्षिकर्णरुक् । रक्तातीसारकुष्ठास्रविसर्पव्रणमेहनुत् ॥ १९३ ॥

अथ कुसुम्भं, तस्य नामानि गुणांश्चाह—

स्यात्कुसुम्भं वह्निशिखं वस्त्ररञ्जकमित्यपि । कुसुम्भं वातलं कृच्छ्ररक्तपित्तकफापहम् ॥१९४॥

अथ लाक्षा ( लाही ) तस्या नामानि गुणांश्चाह—

लाक्षा पलङ्कषाऽलक्तो यावो वृक्षामयो जतुः । लाक्षा वर्ण्या हिमा बल्या स्निग्धा च तुवरा लघुः १९५
अनुष्णा कफपित्तास्रहिक्काकासज्वरप्रणुत् । व्रणोरःक्षतवीसर्पक्रिमिकुष्ठगदापहा ॥

अलक्तको गुणैस्तद्वद् विशेषाद्व्यङ्गनाशनः ॥ १९६ ॥

अथ हरिद्रा, तस्या नामानि गुणांश्चाह—

हरिद्रा काञ्चनी पीता निशाख्या वरवर्णिनी। कृमिघ्नी हलदी योषित्प्रिया हट्टविलासिनी ॥१९७॥
हरिद्रा कटुका तिक्ता रूक्षोष्णा कफपित्तनुत्। वर्ण्या त्वग्दोषमेहास्रशोथपाण्डुव्रणापहा १९८

अथ कर्पूरहरिद्राया नामानि गुणांश्चाह—

दार्वीभेदाऽऽम्रगन्धा च सुरभीदारु दारु च। कर्पूरा पद्मपत्रा स्यात्सुरीमत् सुरतारका ॥१९९॥
आम्रगन्धिहरिद्रा या सा शीता वातला मता। पित्तहृन्मधुरा तिक्ता सर्वकण्डूविनाशिनी २००

अथ वनहरिद्राया नामगुणानाह—

अरण्यहलदीकन्दः कुष्ठवातास्रनाशनः ॥ २०१ ॥

अथ दारुहरिद्रा, तस्या नामानि गुणांश्चाह—

दार्वी दारुहरिद्रा च पर्जन्या पर्जनीति च। कटङ्कटेरी पीता च भवेत्सैव पचम्पचा ॥
सैव कालीयकः प्रोक्तस्तथा कालेयकोऽपि च ॥ २०२ ॥
पीतद्रुश्च हरिद्रुश्च पीतदारु च पीतकम्। दार्वी निशागुणा किन्तु नेत्रकर्णास्यरोगनुत् ॥२०३॥

अथ रसाञ्जनस्य नामानि गुणांश्चाह—

दार्वीक्वाथसमं क्षीरं पादं पक्त्वा यदा घनम्। तदा रसाञ्जनाख्यं तन्नेत्रयोः परमं हितम्॥२०४॥
रसाञ्जनं तार्क्ष्यशैलं रसगर्भं च तार्क्ष्यजम्। रसाञ्जनं कटु श्लेष्मविषनेत्रविकारनुत् ॥ २०५ ॥
उष्णं रसायनं तिक्तं छेदनं व्रणदोषहृत् ॥ २०६ ॥

अथ वाकुची तस्या नामानि गुणांश्चाह -

अवल्गुजो वाकुची स्यात् सोमराजी सुपर्णिका। शशिलेखा कृष्णफला सोमा पूतिफलीति च २०७
सोमवल्ली कालमेषी कुष्ठघ्नी च प्रकीर्तिता। वाकुची मधुरा तिक्ता कटुपाका रसायनी ॥२०८॥
विष्टम्भहृद्धिमा रुच्या सरा श्लेष्मास्रपित्तनुत्। रूक्षा हृद्या श्वासकुष्ठमेहज्वरकृमिप्रणुत् २०९
तत्फलं पित्तलं कुष्ठकफानिलहरं कटु। केश्यं त्वच्यं कृमिश्वासकासशोथामपाण्डुनुत् ॥२१०॥

अथ चक्रमर्दः, तस्य नामानि गुणांश्चाह—

चक्रमर्दः प्रपुन्नाटो दद्रुघ्नो मेषलोचनः। पद्माटः स्यादेडगजश्चक्री पुन्नाट इत्यपि ॥ २११ ॥
चक्रमर्दो लघुः स्वादू रूक्षः पित्तानिलापहः। हृद्यो हिमः कफश्वासकुष्ठदद्रुकृमीन् हरेत् २१२
हन्त्युष्णं तत्फलं कुष्ठकण्डूदद्रुविषानिलान्। गुल्मकासकृमिश्वासनाशनं कटुकं स्मृतम् २१३

अथातिविषा (अतीस) तस्या नामगुणानाह—

विषा त्वतिविषा विश्वा शृङ्गी प्रतिविषाऽरुणा। शुक्लकन्दा चोपविषा भङ्गुरा घुणवल्लभा२१४
विषा सोष्णा कटुस्तिक्ता पाचनी दीपनी हरेत्। कफपित्तातिसारामविषकासवमिकृमीन् २१५

अथ लोध्रः ( शावरलोध्र–पटिआलोध इति लोके ) तस्य नामगुणानाह—

लोध्रस्तिल्वस्तिरीटश्च शावरो गालवस्तथा ॥ २१६ ॥

द्वितीयः पट्टिकालोध्रः क्रमुकः स्थूलवल्कलः। जीर्णपत्रो बृहत्पत्रः पट्टी लाक्षाप्रसादनः ॥२१७॥
लोध्रो ग्राही लघुः शीतश्चक्षुष्यः कफपित्तनुत्। कषायो रक्तपित्तासृग्ज्वरातीसारशोथहृत्२१८

अथ लशुनः, तस्य नामान्याह—

लशुनस्तु रसोनः स्यादुग्रगन्धो महाबलः । अरिष्टो म्लेच्छकन्दश्च यवनेष्टो रसोनकः ॥ २१९ ॥

अथ लशुनोत्पत्तिमाह—

यदाऽमृतं वैनतेयो जहार सुरसत्तमात् । तदा ततोऽपतद् बिन्दुः स रसोनोऽभवद् भुवि ॥२२०॥

अथ रसोनशब्दस्य निरुक्तिमाह—

पञ्चभिश्च रसैर्युक्तो रसेनाम्लेन वर्जितः । तस्माद्रसोन इत्युक्तो द्रव्याणां गुणवेदिभिः ॥२२१॥

अथ लशुने रसस्थानान्याह—

कटुकश्चापि मूलेषु तिक्तः पत्रेषु संस्थितः । नाले कषाय उद्दिष्टो नालाग्रे लवणः स्मृतः ॥

बीजे तु मधुरः प्रोक्तो रसस्तद्गुणवेदिभिः ॥ २२२ ॥

अथ लशुनगुणानाह—

रसोनो बृंहणो वृष्यः स्निग्धोष्णः पाचनः सरः । रसे पाके च कटुकस्तीक्ष्णो मधुरको मतः २२३

भग्नसन्धानकृत्कण्ठ्यो गुरुः पित्तास्रवृद्धिदः । बलवर्णकरो मेधाहितो नेत्र्यो रसायनः ॥२२४॥

हृद्रोगजीर्णज्वरकुक्षिशूलविबन्धगुल्मारुचिकासशोफान् ॥

दुर्नामकुष्ठानलसादजन्तुसमीरणश्वासकफांश्च हन्ति ॥ २२५ ॥

अथ लशुनसेविनां हिताहितपदार्थानाह—

मद्यं मांसं तथाऽम्लञ्च हितं लशुनसेविनाम् । व्यायाममातपं रोषमतिनीरं पयो गुडम् ॥

रसोनमश्नन्पुरुषस्त्यजेदेतान्निरन्तरम् ॥ २२६ ॥

अथ पलाण्डुः ( पियाज ) तस्य नामगुणानाह—

पलाण्डुर्यवनेष्टश्च दुर्गन्धो मुखदूषकः । पलाण्डुस्तु बुधैर्ज्ञेयो रसोनसदृशो गुणैः ॥ २२७ ॥

स्वादुः पाके रसेऽनुष्णः कफकृन्नातिपित्तलः । हरते केवलं वातं बलवीर्यकरो गुरुः ॥ २२८ ॥

अथ भल्लातकः ( भिलावा ) तन्नाम तत्फलमज्जवृन्तानां तस्य च गुणानाह—

भल्लातकं त्रिषु प्रोक्तमरुष्कोऽरुष्करोऽग्निकः । तथैवाग्निमुखी भल्ली वीरवृक्षश्च शोफकृत् २२९

भल्लातकफलं पक्वं स्वादुपाकरसं लघु । कषायं पाचनं स्निग्धं तीक्ष्णोष्णं छेदि भेदनम् ॥२३०॥

मेध्यं वह्निकरं हन्ति कफवातव्रणोदरम् । कुष्ठार्शोग्रहणीगुल्मशोफानाहज्वरक्रिमीन् ॥२३१॥

तन्मज्जा मधुरो वृष्यो बृंहणो वातपित्तहा । वृन्तमारुष्करं स्वादु पित्तघ्नं केश्यमग्निकृत् २३२

भल्लातकः कषायोष्णः शुक्रलो मधुरो लघुः । वातश्लेष्मोदरानाहकुष्ठार्शोग्रहणीगदान् ॥

हन्ति गुल्मज्वरश्वित्रवह्निमान्द्यक्रिमिव्रणान् ॥ २३३ ॥

अथ भङ्गा ( भांग ) तस्या नामगुणानाह—

भङ्गा गञ्जामातुलानि मादिनी विजया जया ॥ २३४ ॥

भङ्गा कफहरी तिक्ता ग्राहिणी पाचनी लघुः । तीक्ष्णोष्णा पित्तला मोहमन्दवाग्वह्निवाद्धनी २३५

अथ खाखसः ( पोस्ता ) तस्य नामगुणानाह—

तिलभेदः खसतिलः खाखसश्चापि स स्मृतः । स्यात् खाखसफलोद्भूतं वल्कलं शीतलं लघु २३६

ग्राहि तिक्तं कषायञ्च वातकृत् कफकासहृत् ॥ २३७ ॥

आतूलं शोषकं रूक्षं मदकृद्वाग्निवर्धनम् । मुहुर्मोहकरं रुच्यं सेवनात्पुंस्त्वनाशनम् ॥ २३८ ॥

अथाहिफेनकम् ( अफीम ) तस्य नामगुणानाह—

उक्तं खसफलक्षीरमाफूकमहिफेनकम् । आफूकं शोषणं ग्राहि श्लेष्महरं वातपित्तलम् ॥

तथा खसफलोद्भूतवल्कलप्रायमित्यादि ॥ २३९ ॥

अथ खाखसतिलाः, तेषां नामानि गुणांश्चाह —

उच्यन्ते खसबीजानि ते खाखसतिला अपि ॥ २४० ॥

खसबीजानि बल्यानि वृष्याणि सुगुरूणि च । जनयन्ति कफं तानि शमयन्ति समीरणम् २४१

अथ सैन्धवः, तस्य नामगुणानाह —

सैन्धवोऽस्त्री शीतशिवं माणिमन्थञ्च सिन्धुजम् । सैन्धवं लवणं स्वादु दीपनं पाचनं लघु ॥

स्निग्धं रुच्यं हिमं वृष्यं सूक्ष्मं नेत्र्यं त्रिदोषहृत् ॥ २४२ ॥

अथ शाकम्भरीयं, तस्य नामगुणानाह—

शाकम्भरीयं कथितं गुडाख्यं रौमकं तथा ॥ २४३ ॥

गुडाख्यंलघु वातघ्नमत्युष्णं भेदिपित्तलम् । तीक्ष्णोष्णं चापि सूक्ष्मञ्चाभिष्यन्दि कटुपाकिच२४४

अथ सामुद्रं लवणं ( पाङ्गा ) तस्य नामगुणानाह—

सामुद्रं यत्तु लवणमक्षीवं वशिरञ्च तत् । समुद्रजं सागरजं लवणोदधिसम्भवम् ॥ २४५ ॥

सामुद्रं मधुरं पाके सतिक्तं मधुरं गुरु । नात्युष्णं दीपनं भेदि सक्षारमविदाहि च ॥

श्लेष्मलं वातनुत्तीक्ष्णमरूक्षं नातिशीतलम् ॥ २४६ ॥

अथ विडलवणं ( विरियासंचर ) तस्य नामगुणानाह—

विडं पाक्यञ्च कृतकं तथा द्राविडमासुरम् । विडं सक्षारमूर्ध्वाधःकफवातानुलोमनम् ॥ २४७ ॥

*ऊर्ध्वं कफमधो वातं सञ्चारयेदित्यर्थः ॥ २४७ ॥

दीपनं लघु तीक्ष्णोष्णं रूक्षं रुच्यं व्यवायि च । विबन्धानाहविष्टम्भहृद्रुग्गौरवशूलनुत् ॥२४८॥

अथ सौवर्चलं लवणं, तस्य नामगुणानाह—

सौवर्चलं स्याद् रुचकं मन्थपाकञ्च तन्मतम् । रुचकं रोचनं भेदि दीपनं पाचनं परम् ॥ २४९ ॥

सुस्नेहं वातनुन्नातिपित्तलं विशदं लघु । उद्गारशुद्धिदं सूक्ष्मं विबन्धानाहशूलजित् ॥ २५० ॥

अथ खानिजं लवणं, तस्य नामगुणानाह—

औद्भिदं पांशुलवणं यज्जातं भूमितः स्वयम् । क्षारं गुरु कटु स्निग्धं शीतलं वातनाशनम् २५१

अथ चणकाम्लकं, तस्य गुणानाह—

चणकाम्लकमत्युष्णं दीपनं दन्तहर्षणम् । लवणानुरसं रुच्यं शूलाजीर्णविबन्धनुत् ॥ २५२ ॥

अथ यवक्षारः स्वर्जिका सुवर्चिका च, तन्नामगुणानाह—

पाक्यं क्षारो यवक्षारो यावशूको यवाग्रजः। स्वर्जिकाऽपिस्मृतः क्षारः कापोतः सुखवर्चकः॥२५३॥

कथितः स्वर्जिकाभेदो विशेषज्ञैः सुवर्चिका । यवक्षारो लघुः स्निग्धः सुसूक्ष्मोवह्निदीपनः ॥२५४॥

निहन्तिशूलवातामश्लेष्मश्वासगलामयान्। पाण्ड्वर्शोग्रहणीगुल्मानाहप्लीहहृदामयान्॥२५५॥

स्वर्जिकाऽल्पगुणा तस्माद्विशेया गुल्मशूलहृत्। सुवर्चिकास्वर्जिकावद् बोद्धव्या गुणतो जनैः २५६

अथ टङ्कणक्षारः ( सुहागाखार ) तस्य नामगुणानाह—

सौभाग्यं टङ्कणं क्षारो धातुद्रावकमुच्यते। टङ्कणं वह्निकृद्रूक्षं कफहृद्वातपित्तकृत् ॥ २५७ ॥

अथ क्षारद्वयं क्षारत्रयं क्षाराष्टकं च, तेषां लक्षणानि गुणांश्चाह—

स्वर्जिका यावशूकश्च क्षारद्वयमुदाहृतम्। टङ्कणेन युतं तत्तु क्षारत्रयमुदीरितम् ॥ २५८ ॥
मिलितं तत्तद्गुणकृद्विशेषाद् गुल्महृत्परम्। पलाशवज्रिशिखरिचिञ्चार्कतिलनालजाः ॥२५९॥
यवजः स्वर्जिका चेति क्षाराष्टकमुदाहृतम्। क्षारा एतेऽग्निना तुल्या गुल्मशूलहरा भृशम् ॥२६०॥

अथ चुक्रं ( चूक ) तन्नामगुणानाह—

चुक्रं सहस्रवेधि स्याद्रसाम्लं शुक्तमित्यपि। चुक्रमत्यम्लमुष्णञ्च दीपनं पाचनं परम् ॥२६१॥
शूलगुल्मविबन्धामवातश्लेष्महरं परम्। वमितृष्णाऽऽस्यवैरस्यहृत्पीडावह्निमान्द्यहृत् ॥२६२॥

इति मिश्रलटकनतनयश्रीमिश्रभावविरचिते भावप्रकाशे वर्गप्रकरणे द्वितीयो हरीतक्यादिवर्गः समाप्तः ॥२॥

---

## अथ तृतीयः कर्पूरादिवर्गः ॥ ३ ॥

अथ कर्पूरं, तस्य नामानि गुणांश्चाह—

पुंसि क्लीबे च कर्पूरः सिताभ्रो हिमवालुकः। घनसारश्चन्द्रसंज्ञो हिमनामाऽपि स स्मृतः ॥१॥
कर्पूरः शीतलो वृष्यश्चक्षुष्यो लेखनो लघुः। सुरभिर्मधुरस्तिक्तः कफपित्तविषापहः ॥ २ ॥
दाहतृष्णाऽऽस्यवैरस्यमेदोदौर्गन्ध्यनाशनः। कर्पूरो द्विविधः प्रोक्तः पक्वापक्वप्रभेदतः।
पक्वात्कर्पूरतः प्राहुरपक्वं गुणवत्तरम् ॥ ३ ॥

अथ चीनाककर्पूरः ( चिनिया ) तस्य नामानि गुणाँश्चाह—

चीनाकसंज्ञः कर्पूरः कफक्षयकरः स्मृतः। कुष्ठकण्डूवमिहरस्तथा तिक्तरसश्च सः ॥ ४ ॥

अथ कस्तूरी, तस्या नामभेदगुणानाह—

मृगनाभिर्मृगमदः कथितस्तु सहस्रभित्। कस्तूरिका च कस्तूरी वेधमुख्या च सा स्मृता॥५॥
कामरूपोद्भवा कृष्णा नैपाली नीलवर्णयुक्। काश्मीरी कपिलच्छाया कस्तूरी त्रिविधा स्मृता॥६॥
कामरूपोद्भवा श्रेष्ठा नैपाली मध्यमा भवेत्। काश्मीरदेशसम्भूता कस्तूरी ह्यधमा मता ॥७॥
कस्तूरिका कटुस्तिक्ता क्षारोष्णा शुक्रला गुरुः। कफवातविषच्छर्दिशीतदौर्गन्ध्यशोषहृत् ॥८॥

अथ लताकस्तूरी ( मुष्कबीजम् ) तस्या नामानि गुणांश्चाह—

लता कस्तूरिका तिक्ता स्वाद्वी वृष्या हिमा लघुः।
चक्षुष्या छेदिनी श्लेष्मतृष्णाबस्त्यास्यरोगहृत् ॥ ९ ॥

अथ गन्धमार्जारवीर्यं ( जवादिकस्तूरी ) तस्य नामानि गुणांश्चाह—

गन्धमार्जारवीर्यन्तु वीर्यकृत्कफवातहृत्। कण्डूकुष्ठहरं नेत्र्यं सुगन्धं स्वेदगन्धनुत् ॥ १० ॥

अथ चन्दनं, तस्य नामान्याह—

श्रीखण्डं चन्दनं न स्त्री भद्रश्रीस्तैलपर्णिकः। गन्धसारो मलयजस्तथा चन्द्रद्युतिश्च सः ॥ ११ ॥

अथोत्तमचन्दनस्य लक्षणमाह—

स्वादु तिक्तं कषे पीतं छेदे रक्तं तनौ सितम्। ग्रन्थिकोटरसंयुक्तं चन्दनं श्रेष्ठमुच्यते ॥ १२ ॥

अथ चन्दनस्य गुणानाह—

चन्दनं शीतलं रूक्षं तिक्तमाह्लादनं लघु। श्रमशोषविषश्लेष्मतृष्णापित्तास्रदाहनुत् ॥ १३ ॥

अथ पीतचन्दनम् ( कलम्बक इति लोके ) तस्य नामानि गुणांश्चाह—

कालीयकं तु कालीयं पीताभं हरिचन्दनम् ॥ १४ ॥

हरिप्रियं कालसारं तथा कालानुसार्य्यकम्। कालीयकं रक्तगुणं विशेषाद्व्यङ्गनाशनम् ॥ १५ ॥

अथ रक्तचन्दनम्, तस्य नामानि गुणाँश्चाह—

रक्तचन्दनमाख्यातं रक्ताङ्गं क्षुद्रचन्दनम्। तिलपर्णं रक्तसारं तत्प्रवालफलं स्मृतम् ॥ १६ ॥

रक्तं शीतं गुरु स्वादु च्छर्दितृष्णाऽस्रपित्तहृत्। तिक्तं नेत्राहितं वृष्यं ज्वरव्रणविषापहम् ॥ १७ ॥

अथ पतङ्गम् ( बकम ) तस्य नामानि गुणांश्चाह—

पतङ्गं रक्तसारञ्च सुरङ्गं रञ्जनं तथा। पट्टरञ्जकमाख्यातं पत्तूरञ्च कुचन्दनम् ॥ १८ ॥

पतङ्गं मधुरं शीतं पित्तश्लेष्मव्रणास्रनुत्। हरिचन्दनवद्वेद्यं विशेषाद्दाहनाशनम् ॥ १९ ॥

अथ सर्वेषां चन्दनानां मध्ये मलयजस्य श्रेष्ठतामाह—

चन्दनानि तु सर्वाणि सदृशानि रसादिभिः। गन्धेन तु विशेषोऽस्ति पूर्वः श्रेष्ठतमो गुणैः ॥ २० ॥

अथागुरु कृष्णागुरु च ( अगर ) तयोर्नामानि गुणांश्चाह—

अगुरु प्रवरं लोहं राजार्हं योगजं तथा। वंशिकं कृमिजं चाऽपि कृमिजग्धमनार्यकम् ॥ २१ ॥

अगुरूष्णं कटु त्वच्यं तिक्तं तीक्ष्णञ्च पित्तलम्। लघु कर्णाक्षिरोगघ्नं शीतवातकफप्रणुत् ॥ २२ ॥

कृष्णं गुणाधिकं तत्तु लोहवद्वारि मज्जति। अगुरुप्रभवः स्नेहः कृष्णागुरुसमः स्मृतः ॥ २३ ॥

अथ देवदारु, तस्य नामानि गुणांश्चाह—

देवदारु स्मृतं दारुभद्रं दार्विन्द्रदारु च। मस्तदारु द्रुकिलिमं किलिमं सुरभूरुहः ॥ २४ ॥

देवदारु लघु स्निग्धं तिक्तोष्णं कटुपाकि च। विबन्धाध्मानशोथामतन्द्राहिक्काज्वरास्रजित् ॥

प्रमेहपीनसश्लेष्मकासकण्डूसमीरनुत् ॥ २५ ॥

अथ सरलः ( धूप ) तस्य नामानि गुणांश्चाह—

सरलः पीतवृक्षः स्यात्तथा सुरभिदारुकः। सरलो मधुरस्तिक्तो कटुपाकरसो लघुः ॥ २६ ॥

स्निग्धोष्णः कर्णकण्ठाक्षिरोगरक्षोहरः स्मृतः। कफानिलस्वेददाहकासमूर्च्छाव्रणापहः ॥ २७ ॥

अथ तगरं पिण्डतगरं च, तयोर्नामानि गुणांश्चाह—

कालानुसार्यं तगरं कुटिलं नहुषं नतम्। अपरं पिण्डतगरं दण्डहस्ती च बर्हिणम् ॥ २८ ॥

तगरद्वयमुष्णं स्यात्स्वादु स्निग्धं लघु स्मृतम्। विषापस्मारशूलाक्षिरोगदोषत्रयापहम् ॥ २९ ॥

अथ पद्मकम्, तस्य नामानि गुणांश्चाह—

पद्मकं पद्मगन्धि स्यात्तथा पद्माह्वयं स्मृतम्। पद्मकं तुवरं तिक्तं शीतलं वातलं लघु ॥ ३० ॥

वीसर्पदाहविस्फोटकुष्ठश्लेष्मास्रपित्तनुत्। गर्भसंस्थापनं रुच्यं वमिव्रणतृषाप्रणुत् ॥ ३१ ॥

अथ गुग्गुलुः, तस्य नामान्याह—

गुग्गुलुर्देवधूपश्च जटायुः कौशिकः पुरः । कुम्भोलूखलकं क्लीबे महिषाक्षः पलङ्कषः ॥ ३२ ॥

अथ गुग्गुलुभेदानाह—

महिषाक्षो महानीलः कुमुदः पद्म इत्यपि । हिरण्यः पञ्चमो ज्ञेयो गुग्गुलोः पञ्च जातयः ॥३३॥

अथ तेषां लक्षणानि गुणांश्चाह—

भृंगाञ्जनसवर्णस्तु महिषाक्ष इति स्मृतः । महानीलस्तु विज्ञेयः स्वनामसमलक्षणः ॥ ३४ ॥
कुमुदः कुमुदाभः स्यात्पद्मो माणिक्यसन्निभः । हिरण्याक्षस्तु हेमाभः पञ्चानां लिङ्गमीरितम् ३५
महिषाक्षो महानीलो गजेन्द्राणां हिताबुभौ । हयानां कुमुदः पद्मः स्वास्थ्यारोग्यकरौ परौ ३६
विशेषेण मनुष्याणां कनकः परिकीर्त्तितः । कदाचिन्महिषाक्षश्च मतः कैश्चिन्नृणामपि ॥३७॥

अथ सामान्यतो गुग्गुलुगुणानाह—

गुग्गुलुर्विशदस्तिक्तो वीर्योष्णः पित्तलः सरः । कषायः कटुकः पाके कटू रूक्षो लघुः परः ॥३८॥
भग्नसन्धानकृद् वृष्यः सूक्ष्मः स्वर्यो रसायनः । दीपनः पिच्छिलो बल्यः कफवातव्रणापचीः॥३९॥
मेदोमेहाश्मवातांश्च क्लेदकुष्ठाममारुतान् । पिडिकाग्रन्थिशोफार्शोगण्डमालाकृमीञ्जयेत् ॥४०॥
माधुर्याच्छमयेद्वातं कषायत्वाच्च पित्तहा । तिक्तत्वात्कफजित्तेन गुग्गुलुः सर्वदोषहा ॥ ४१ ॥

अथ नवीनस्य प्राचीनस्य च गुग्गुलोर्लक्षणं गुणांश्चाह—

स नवो बृंहणो वृष्यः पुराणस्त्वतिलेखनः ॥ ४२ ॥
स्निग्धः काञ्चनसङ्काशः पक्वजम्बूफलोपमः । नूतनो गुग्गुलुः प्रोक्तः सुगन्धिर्यस्तु पिच्छिलः॥४३
शुष्को दुर्गन्धकश्चैव त्यक्तप्रकृतिवर्णकः । पुराणः स तु विज्ञेयो गुग्गुलुर्वीर्यवर्जितः ॥ ४४ ॥

अथ गुग्गुलुसेविनां त्याज्यान्याह—

अम्लं तीक्ष्णमजीर्णञ्च व्यवायं श्रममातपम् । मद्यं रोषं त्यजेत्सम्यग् गुणार्थी पुरसेवकः ॥४५॥

अथ सरलनिर्यासगुग्गुलुः तस्य नामानि गुणांश्चाह—

श्रीवासः सरलस्रावः श्रीवेष्टो वृक्षधूपकः । श्रीवासो मधुरस्तिक्तः स्निग्धोष्णस्तुवरः सरः॥४६॥
पित्तलो वातमूर्द्धाक्षिस्वररोगकफापहः । रक्षोघ्नः स्वेददौर्गन्ध्ययूकाकण्डूव्रणप्रणुत् ॥ ४७ ॥

अथ रालः, तस्य नामानि गुणांश्चाह—

रालस्तु शालनिर्यासस्तथा सर्ज्जरसः स्मृतः । देवधूपो यक्षधूपस्तथा सर्वरसश्च सः ॥ ४८ ॥
रालो हिमो गुरुस्तिक्तः कषायो ग्राहको हरेत् । दोषास्रस्वेदवीसर्पज्वरव्रणविपादिकाः ॥
ग्रहभग्नाग्निदग्धांश्च शूलातीसारनाशनः ॥ ४९ ॥

अथ कुन्दुरुः ( गंधाबरोजा ) [ सुगन्धद्रव्यं शल्लकीनिर्यासः ] तस्य नामानि गुणांश्चाह—

कुन्दुरुस्तु सुकुन्दः स्यात्सुगन्धः कुन्द इत्यपि ॥ ५० ॥
कुन्दुरुर्मधुरस्तिक्तस्तीक्ष्णस्त्वच्यः कटुर्हरेत ॥ ज्वरस्वेदग्रहालक्ष्मीमुखरोगकफानिलान् ॥५१॥

अथ शिलारसः, तस्य नामानि गुणांश्चाह —

सिह्लकस्तु तुरुष्कः स्यात्तथा यवनदेशजः । कपितैलश्च संख्यातस्तथा च कपिनामकः ॥५२॥

सिह्लकः कटुकः स्वादुः स्निग्धोष्णः शुक्रकान्तिकृत् । वृष्यः कण्ठ्यः स्वेदकुष्ठज्वरदाहग्रहापहः॥५३

अथ जातीफल, तस्य नामानि गुणांश्चाह—

जातीफलं जातिकोशं मालतीफलमित्यपि । जातीफलं रसे तिक्तं तीक्ष्णोष्णं रोचनं लघु ॥
कटुकं दीपनं ग्राहि स्वर्यं श्लेष्मानिलापहम् ॥ ५४ ॥
निहन्ति मुखवैरस्यं मलदौर्गन्ध्यकृष्णताः ॥ कृमिकासवमिश्वासशोषपीनसहृद्रुजः ॥ ५५ ॥

अथ जातीपत्री, तस्या नामानि गुणांश्चाह—

जातीफलस्य त्वक् प्रोक्ता जातीपत्री भिषग्वरैः ॥ ५६ ॥
जातीपत्री लघुः स्वादुः कटूष्णा रुचिवर्णकृत् । कफकासवमिश्वासतृष्णाकृमिविषापहा ॥५७॥

अथ लवङ्गं, तस्य नामानि गुणांश्चाह—

लवङ्गं देवकुसुमं श्रीसंज्ञं श्रीप्रसूनकम् । लवङ्गं कटुकं तिक्तं लघु नेत्रहितं हिमम् ॥ ५८ ॥
दीपनं पाचनं रुच्यं कफपित्तास्रनाशकृत् । तृष्णां छर्दिं तथाऽऽध्मानं शूलमाशु विनाशयेत् ॥
कासं श्वासञ्च हिक्काञ्च क्षयं क्षपयति ध्रुवम् ॥ ५९ ॥

अथ स्थूलैला ( बड़ी इलायची ) तस्या नामानि गुणांश्चाह—

एला स्थूला च बहुला पृथ्वीका त्रिपुटाऽपि च ॥ ६० ॥
भद्रैला बृहदेला च चन्द्रबाला च निष्कुटिः । स्थूलैला कटुका पाके रसे चानलकृल्लघुः ॥६१॥
रूक्षोष्णा श्लेष्मपित्तास्रकण्डूश्वासतृषाऽपहा । हृल्लासविषवस्त्यास्यशिरोरुग्वमिकासनुत् ६२

अथैला ( गुजराती इलायची ) तस्या नामानि गुणांश्चाह—

सूक्ष्मोपकुञ्चिका तुत्था कोरङ्गी द्राविडी त्रुटिः । एला सूक्ष्मा कफश्वासकासार्शोमूत्रकृच्छ्रहृत् ॥
रसे तु कटुका शीता लघ्वी वातहरी मता ॥ ६३ ॥

अथ त्वक्पत्रम् ( तज ) तस्य नामानि गुणांश्चाह —

त्वक्पत्रञ्च वराङ्गं स्याद् भृङ्गं चोचं तथोत्कटम् । त्वचं लघूष्णं कटुकं स्वादु तिक्तञ्च रूक्षकम्॥६४
पित्तलं कफवातघ्नं कण्ड्वामारुचिनाशनम् । हृद्बस्तिरोगवातार्शःकृमिपीनसशुक्रहृत् ॥ ६५ ॥

अथ दारुसिता ( दालचीनी ) तस्या नामानि गुणांश्चाह—

त्वक्स्वाद्वी तु तनुत्वक्स्यात्तथा दारुसिता मता ॥ ६६ ॥
उक्ता दारुसिता स्वाद्वी तिक्ता चानिलपित्तहृत् । सुरभिः शुक्रलावण्या मुखशोषतृषापहा ६७

अथ पत्रकं, तस्य नामानि गुणांश्चाह—

पत्र तमालपत्रञ्च तथा स्यात्पत्रनामकम् । पत्रकं मधुरं किञ्चित्तीक्ष्णोष्णं पिच्छिलं लघु ॥
निहन्ति कफवातार्शोहृल्लासारुचिपीनसान् ॥ ६८ ॥

अथ नागकेशरः, तस्य नामानि गुणांश्चाह—

नागपुष्पः स्मृतो नागः केशरो नागकेशरः । चाम्पेयो नागकिञ्जल्कः कथितः कांचनाह्वयः ६९
* अयं पुष्पे तु क्लीबे ॥ ६९ ॥
नागपुष्पं कषायोष्णं रूक्षं लघ्वामपाचनम् ॥ ७० ॥
ज्वरकण्डूतृषास्वेदच्छर्दिहृल्लासनाशनम् । दौर्गन्ध्यकुष्ठवीसर्पकफपित्तविषापहम् ॥ ७१ ॥

अथ त्रिजातकं चातुर्जातकं च, तयोर्लक्षणं गुणाँश्चाह—

त्वगेलापत्रकैस्तुल्यैस्त्रिसुगन्धि त्रिजातकम्। नागकेशरसंयुक्तं चातुर्जातकमुच्यते ॥ ७२ ॥
तद् द्वयं रोचनं रूक्षं तीक्ष्णोष्णं मुखगन्धहृत्। लघुपित्ताग्निकृद्वर्ण्यं कफवातविषापहम् ॥७३॥

अथ कुङ्कुमम् (केशर) तस्य नामानि लक्षणभेदान् गुणांश्चाह—

कुङ्कुमं घुसृणं रक्तं काश्मीरं पीतकं वरम्। संकोचंपिशुनं धीरं बाह्लीकं शोणिताभिधम् ॥७४॥
काश्मीरदेशजे क्षेत्रे कुङ्कुमं यद्भवेद्धि तत्। सूक्ष्मकेशरमारक्तं पद्मगन्धि तदुत्तमम् ॥ ७५ ॥
बाह्लीकदेशसञ्जातं कुङ्कुमं पाण्डुरं स्मृतम्। केतकीगन्धयुक्तं तन्मध्यमं सूक्ष्मकेशरम् ॥ ७६ ॥
कुङ्कुमं पारसीकं तन्मधुगन्धि तदीरितम्। ईषत्पाण्डुरवर्णं तदधमं स्थूलकेशरम् ॥ ७७ ॥
कुङ्कुमं कटुकं स्निग्धं शिरोरुग्व्रणजन्तुजित्। तिक्तं वमिहरं वर्ण्यं व्यङ्गदोषत्रयापहम् ॥७८॥

अथ गोरोचना, तस्या नामानि गुणाँश्चाह—

गोरोचना तु मङ्गल्या वन्द्या गौरी च रोचना। गोरोचना हिमा तिक्ता वश्या मङ्गलकान्तिदा।
विषालक्ष्मीग्रहोन्मादगर्भस्रावक्षतास्रहृत् ॥ ७९ ॥

अथ नखं नखी च (गन्धद्रव्यम्) तयोर्नामानि गुणाँश्चाह—

नखं व्याघ्रनखं व्याघ्रायुधं तच्चक्रकारकम् ॥ ८० ॥
नखं स्वल्पं नखी प्रोक्ता हनुहट्टविलासिनी। नखद्वयं ग्रहश्लेष्मवातास्रज्वरकुष्ठहृत् ॥ ८१ ॥
लघूष्णं शुक्रलं वर्ण्यं स्वादु व्रणविषापहम्। अलक्ष्मीमुखदौर्गन्ध्यहृत्पाकरसयोः कटु ॥८२॥

अथ बालम् (सुगन्धवाला) तस्य नामानि गुणाँश्चाह—

बालं ह्रीवेरबर्हिष्ठोदीच्यं केशाम्बुनाम च। बालकं शीतलं रूक्षं लघु दीपनपाचनम् ॥
हृल्लासारुचिवीसर्पहृद्रोगामातिसारजित् ॥ ८३ ॥

अथ वीरणम्, तस्य नामानि गुणांश्चाह—

स्याद्वीरणं वीरतरुर्वीरञ्च बहुमूलकम्। वीरणं पाचनं शीतं वान्तिहृल्लघु तिक्तकम् ॥ ८४ ॥
स्तम्भनं ज्वरनुद्भ्रान्तिमदार्जित्कफपित्तहृत्। तृष्णाऽस्रविषवीसर्पकृच्छ्रदाहव्रणापहम् ॥ ८५ ॥

अथोशीरम्, तस्य नामानि गुणाँश्चाह—

वीरणस्य तु मूलं स्यादुशीरं नलदञ्च तत्। अमृणालञ्च सेव्यञ्च समगन्धिकमित्यपि ॥८६॥
उशीरं पाचनं शीतं स्तम्भनं लघु तिक्तकम् ॥ ८७ ॥
मधुरं ज्वरहृद्वान्तिमदनुत्कफपित्तहृत्। तृष्णाऽस्रविषवीसर्पदाहकृच्छ्रव्रणापहम् ॥ ८८ ॥

अथ जटामांसी, तस्या नामानि गुणाँश्चाह—

जटामांसी भूतजटा जटिला च तपस्विनी। मांसी तिक्ता कषाया च मेध्या कान्तिबलप्रदा ॥
स्वाद्वी हिमा त्रिदोषास्रदाहवीसर्पकुष्ठनुत् ॥ ८९ ॥

अथ शैलेयम् (भूरिछरीला) तस्य नामानि गुणांश्चाह—

शैलेयन्तु शिलापुष्पं वृद्धं कालानुसार्यकम् ॥ ९० ॥
शैलेयं शीतलं हृद्यं कफपित्तहरं लघु। कण्डूकुष्ठाश्मरीदाहविषहृद् गुदरक्तहृत् ॥ ९१ ॥

अथ मुस्तकं-नागरमुस्तकञ्च ( मोथा-नागरमोथा ) तयोर्नामानि गुणांश्चाह—

मुस्तकं न स्त्रियां मुस्तं त्रिषु वारिदनामकम् । कुरुविन्दश्च संख्यातोऽपरः क्रोडकसेरुकः ॥ ९२॥
भद्रमुस्तञ्च गुन्द्रा च तथा नागरमुस्तकः । मुस्तं कटु हिमं ग्राहि तिक्तं दीपनपाचनम् ॥९३॥
कषायं कफपित्तास्त्रतृड्ज्वरारुचिजन्तुहृत् । अनूपदेशे यज्जातं मुस्तकं तत्प्रशस्यते ॥
तत्रापि मुनिभिः प्रोक्तं वरं नागरमुस्तकम् ॥ ९४ ॥

अथ कर्चूरः, तस्य नामानि गुणाँश्चाह—

कर्चूरो वेधमुख्यश्च द्राविडः कल्पकः शटी । कर्चूरो दीपनो रुच्यः कटुकस्तिक्त एव च ॥ ९५ ॥
सुगन्धिः कटुपाकः स्यात्कुष्ठार्शोव्रणकासनुत् । उष्णो लघुर्हरेच्छ्वासं गुल्मवातकफाक्रिमीन् ९६

अथ मुरा ( मुरहरी, एकाङ्गी ) तस्या नामानि गुणांश्चाह—

मुरा गन्धकुटी दैत्या सुरभिः शालपर्णिका ॥ ९७ ॥
मुरा तिक्ता हिमा स्वाद्वी लघ्वी पित्तानिलापहा । ज्वरासृग्भूतरक्षोघ्नी कुष्ठकासविनाशिनी ९८

अथ गन्धपलाशी ( कपूरकचरी ) सुगन्धिद्रव्यं काश्मीरे प्रसिद्धम्, तस्या नामानि गुणाँश्चाह—

शठी पलाशी षड्ग्रन्था सुव्रता गन्धमूलिका । गान्धारिका गन्धवधूर्वधूः पृथुपलाशिका ॥९९॥
भवेद्गन्धपलाशी तु कषाया ग्राहिणी लघुः । तिक्ता तीक्ष्णा च कटुकाऽनुष्णाऽऽस्यमलनाशिनी ॥
शोथकासव्रणश्वासशूलहिध्मग्रहापहा ॥ १०० ॥

अथ प्रियङ्गुर्गन्धप्रियङ्गुश्च, तयोर्नामानि गुणांश्चाह—

प्रियङ्गुः फलिनी कान्ता लता च महिलाऽऽह्वया ॥ १०१ ॥
गुन्द्रा गन्धफला श्यामा विष्वक्सेनाङ्गना प्रिया । प्रियङ्गुः शीतला तिक्ता तुवराऽनिलपित्तहृत्॥
रक्तातियोगदौर्गन्ध्यस्वेददाहज्वरापहा । गुल्मतृड्विषमोहघ्नी तद्वद् गन्धप्रियङ्गुका ॥१०२॥

अथ तत्फलगुणानप्याह—

तत्फलं मधुरं रूक्षं कषायं शीतलं गुरु । विबन्धाध्मानबलकृत्संग्राहि कफपित्तजित् ॥ १०४ ॥

अथ रेणुका-मरिचसदृशी ( सम्हालू ) तस्या नामानि गुणांश्चाह—

रेणुका राजपुत्री च नान्दनी कपिला द्विजा । भस्मगन्धा पाण्डुपुत्री स्मृता कौन्ती हरेणुका१०५॥
रेणुका कटुका पाके तिक्ताऽनुष्णा कटुर्लघुः । पित्तला दीपनी मेध्या पाचिनी गर्भपातिनी ॥
बलासवातकृच्चैव तृट्कण्डूविषदाहनुत् ॥ १०६ ॥

अथ ग्रन्थिपर्णम ( गठिवन ) तस्य नामानि गुणांश्चाह—

ग्रन्थिपर्णं ग्रन्थिकञ्च काकपुच्छञ्च गुच्छकम् । नीलपुष्पं सुगन्धञ्च कथितं तैलपर्णकम् ॥१०७॥
ग्रन्थिपर्णं तिक्ततीक्ष्णं कटूष्णं दीपनं लघु । कफवातविषश्वासकण्डूदौर्गन्ध्यनाशनम् ॥ १०८ ॥

अथ स्थौणेयकम् ( ग्रन्थिपर्णस्यैव भेदः, ईषत्सुगन्धं "थुनेर" इति लोके ) तस्य नामानि गुणांश्चाह—

स्थौणेयकं बर्हिबर्हं शुकबर्हञ्च कुक्कुरम् । शीर्णरोमशुकञ्चापि शुकपुष्पं शुकच्छदम् ॥ १०९ ॥
स्थौणेयकं कटु स्वादु तिक्तं स्निग्धं त्रिदोषनुत् ॥ ११०
मेधाशुक्रकरं रुच्यं रक्षोघ्नं ज्वरजन्तुजित् । हन्ति कुष्ठास्रतृड्दाहदौर्गन्ध्यतिलकालकान्॥१११॥

अथ ग्रन्थिपार्णस्यैव भेदः "भटेउर" इति नैपालदेशे भवति, तस्य नामानि गुणांश्चाह—

निशाचरो धनहरः कितवो गणहासः । चोरकः शङ्कितश्चण्डो दुष्पत्रः क्षेमको रिपुः ॥
रोचको मधुरस्तिक्तः कटुः पाके कटुर्लघुः ॥ ११२ ॥
तीक्ष्णो हृद्यो हिमो हन्ति कुष्ठकण्डूकफानिलान् । रक्षोऽश्रीस्वेदमेदोऽस्त्रज्वरगन्धविषव्रणान् ११३

अथ तालीपत्रम्, तस्य नामानि गुणांश्चाह—

तालीसमुक्तं प [त्रा]ढ्यं धात्रीपत्रञ्च तत्स्मृतम् । तालीसं लघु तीक्ष्णोष्णं श्वासकासकफानिलान्॥
निहन्त्यरुचिगुल्मामवह्निमान्द्यक्षयामयान् ॥ ११४ ॥

अथ कक्कोलं सुगन्धिद्रव्यम् ("सीतलचीनी" इति लोके) तस्य नामानि गुणांश्चाह—

कक्कोलं कोलकं प्रोक्तं तथा कोषफलं स्मृतम् ॥ ११५ ॥
कक्कोलं लघु तीक्ष्णोष्णं तिक्तं हृद्यं रुचिप्रदम् । आस्यदौर्गन्ध्यहृद्रोगकफवातामयान्ध्यहृत् ११६

अथ गन्धकोकिला गन्धमालती च, तयोर्गुणानाह—

स्निग्धोष्णा कफहृत्तिक्ता सुगन्धा गंधकोकिला । गन्धकोकिलया तुल्या विज्ञेया गन्धमालती॥

अथ लामज्जकम् (उशीरवत् पीतच्छवितृणविशेषः) तस्य नामगुणानाह—

लामजकं सुनालं स्यादमृणालं लवं लघु । इष्टकापथकं सेव्यं नलदञ्चावदातकम् ॥ ११८ ॥
लामजकं हिमं तिक्तं लघु दोषत्रयास्रजित् । त्वगामयस्वेदकृच्छ्रदाहपित्तास्ररोगनुत् ॥ ११९ ॥

अथैलवालुकम् (कक्कोलसदृशं कुष्ठगन्धि) तस्य नामानि गुणांश्चाह—

एलवालुकमैलेयं सुगन्धि हरिवालुकम् । ऐलवालुकमेलालु कपित्थं पत्रमीरितम् ॥ १२० ॥
एलालु कटुकं पाके कषायं शीतलं लघु । हन्ति कण्डूव्रणच्छर्दितृट्कासारुचिहृद्रुजः ॥
बलासविषपित्तास्रकुष्ठमूत्रगदक्रिमीन् ॥ १२१ ॥

अथ कैवर्तीमुस्तकम् (केवटी मोथा) तस्य नामलक्षणगुणानाह—

कुटन्नटं दासपुरं वालेयं परिपेलवम् । प्लवगोपुरगोनर्दकैवर्तीमुस्तकानि च ॥ १२२ ॥
मुस्तावत्पेलवपुटं शुकाभं स्याद्वितुन्नकम् ॥ १२३ ॥
वितुन्नकं हिमं तिक्तं कषायं कटु कान्तिदम् । कफपित्तास्रवीसर्पकुष्ठकण्डूविषप्रणुत् ॥ १२४ ॥

* "केवटीमोथा"—"गुड़तजो" इति च लोके, इदं तु वितुन्नकनाम्नो वृक्षस्य त्वग् मुस्ताऽऽकृतिः ॥ १२२-१२४ ॥

अथ स्पृक्का (असवरग, शाकविशेषः "लङ्कोइकपुरी"तिलोके च) तस्या नामगुणानाह—

स्पृक्काऽसृग् ब्राह्मणी देवी मरुन्माला लता लघुः।समुद्रान्ता वधूः कोटिवर्षा लङ्कोपिकेत्यपि १२५
स्पृक्का स्वाद्वी हिमा वृष्या तिक्ता निखिलदोषनुत्।कुष्ठकण्डूविषस्वेददाहाश्रज्वररक्तहृत् १२६

अथ पर्पटी (पनडी) तस्या नामानि गुणाँश्चाह—

पर्पटी रञ्जनी कृष्णा जतुका जननी जनी । जतुकृष्णाऽग्निसंस्पर्शा जतुकृच्चक्रवर्तिनी ॥ १२७ ॥
पर्पटी तुवरा तिक्ता शिशिरा वर्णकृल्लघुः । विषव्रणहरा कण्डूकफपित्तास्रकुष्ठनुत् ॥ १२८ ॥

*"पर्पटी" इति प्रसिद्धं "पद्मावती" इति चोत्तरदेशे, सुगन्धि द्रव्यम् ॥ १२७-१२८ ॥

अथ नलिका, तस्या नामानि गुणांश्चाह—

नलिका विद्रुमलता कपोतचरणा नटी । धमन्यञ्जनकेशा च निर्मध्या सुषिरा नली ॥ १२९ ॥
नलिका शीतला लघ्वी चक्षुष्या कफपित्तहृत् । कृच्छ्राश्मवाततृष्णाऽस्रकुष्ठकण्डूज्वरापहा १३०
*उत्तरापथे प्रसिद्धा सुगन्धा प्रवालाकृतिः "यवारी" इति च क्वचित्प्रसिद्धा॥१२९-१३०॥

अथ प्रपौण्डरीकम्, ("पुण्डरी" इति लोके) तस्य नामानि गुणांश्चाह—

प्रपौण्डरीकं पौण्डर्यं चक्षुष्यं पौण्डरीयकम् । पौण्डर्यं मधुरं तिक्तं कषायं शुक्रलं हिमम् ॥
चक्षुष्यं मधुरं पाके वर्ण्यं पित्तकफप्रणुत् ॥ १३१ ॥

इति श्रीमिश्रलटकनतनयश्रीमिश्रभावविरचिते भावप्रकाशे वर्गप्रकरणे तृतीयः कर्पूरादिवर्गः समाप्तः॥३॥

## अथ गुडूच्यादिवर्गः चतुर्थः ॥ ४ ॥

अथ गुडूची, तस्या उत्पत्तिं नामानि गुणांश्चाह—

अथ लंकेश्वरो मानी रावणो राक्षसाधिपः । रामपत्नीं बलात्सीतां जहार मदनातुरः ॥ १ ॥
ततस्तं बलवान् रामो रिपुं जायाऽपहारिणम् । हतो वानरसैन्येन जघान रणमूर्धनि ॥ २ ॥
हते तस्मिन्सुराराती रावणे बलगर्विते । देवराजः सहस्राक्षः परितुष्टश्च राघवे ॥ ३ ॥
तत्र ये वानराः केचिद्राक्षसैर्निहता रणे । तानिन्द्रो जीवयामास संसिच्यामृतवृष्टिभिः ॥ ४ ॥
ततो येषु प्रदेशेषु कपिगात्रात्परिच्युताः । पीयूषबिन्दवः पेतुस्तेभ्यो जाता गुडूचिका ॥ ५ ॥
गुडूची मधुपर्णी स्यादमृताऽमृतवल्लरी । छिन्ना छिन्नरुहा छिन्नोद्भवा वत्सादनीति च ॥ ६ ॥
जीवन्ती तन्त्रिका सोमा सोमवल्ली च कुण्डली । चक्रलक्षणिका धीरा विशल्या च रसायनी॥७॥
चन्द्रहासा वयस्था च मण्डली देवनिर्मिता । गुडूची कटुका तिक्ता स्वादुपाका रसायनी ॥८॥
संग्राहिणी कषायोष्णा लघ्वी बल्याऽग्निदीपिनी । दोषत्रयामतृड्दाहमेहकासांश्च पाण्डुताम्॥९॥
कामलाकुष्ठवातास्रज्वरक्रिमिवमीन्हरेत् । प्रमेहश्वासकासार्शःकृच्छ्रहृद्रोगवातनुत् ॥ १० ॥

अथ नागवल्ली (पान) तस्य नामानि गुणाँश्चाह—

ताम्बूलवल्ली ताम्बूली नागिनी नागवल्लरी । ताम्बूलं विशदं रुच्यं तीक्ष्णोष्णं तुवरं सरम् ॥११॥
वश्यं तिक्तं कटुक्षारं रक्तपित्तकरं लघु । बल्यं श्लेष्मास्यदौर्गन्ध्यमलवातश्रमापहम् ॥ १२ ॥

अथ बिल्वः (बेल) तस्य नामानि गुणांश्चाह—

बिल्वः शाण्डिल्यशैलूषौ मालूरश्रीफलावपि । श्रीफलस्तुवरस्तिक्तो ग्राही रूक्षोऽग्निपित्तकृत् ।
वातश्लेष्महरो बल्यो लघुरुष्णश्च पाचनः ॥ १३ ॥

अथ गाम्भारी (खम्भारी) तस्या नामानि गुणाँश्चाह—

गाम्भारी भद्रपर्णी च श्रीपर्णी मधुपर्णिका । काश्मीरी काश्मरी हीरा काश्मर्यः पीतरोहिणी १४
कृष्णवृन्ता मधुरसा महाकुसुमिकाऽपि च । काश्मरी तुवरा तिक्ता वीर्योष्णा मधुरा गुरुः॥१५॥
दीपनी पाचनी मेध्या भेदिनी भ्रमशोषजित् । दोषतृष्णाऽऽमशूलार्शोऽविषदाहज्वरापहा ॥१६॥

अथ गाम्भारीफलगुणानाह—

तत्फलं बृंहणं वृष्यं गुरु केश्यं रसायनम् । वातपित्ततृषारक्तक्षयमूत्रविबन्धनुत् ॥ १७ ॥
स्वादु पाके हिमं स्निग्धं तुवराम्लं विशुद्धिकृत् । हन्याद्दाहतृषावातरक्तपित्तक्षतक्षयान् ॥ १८ ॥

अथ पाटला ( पाढल ) घण्टापाटलिश्च ( घण्टापाढल ) तयोर्नामानि गुणांश्चाह—

पाटलिः पाटलाऽमोघा मधुदूती फलेरुहा । कृष्णवृन्ता कुबेराक्षी कालस्थाल्यलिवल्लभा ॥ १९ ॥
ताम्रपुष्पी च कथिताऽपरा स्यात्पाटला सिता । मुष्कको मोक्षको घण्टापाटलिः काष्ठपाटला २०

* कालस्थालीत्यत्र काचस्थालीत्येके ॥ १९-२० ॥

पाटला तुवरा तिक्ताऽनुष्णा दोषत्रयापहा । अरुचिश्वासशोथास्रच्छर्दिहिक्कातृषापहरी ॥ २१ ॥

अथ तत्पुष्पफलयोर्गुणानाह—

पुष्पं कषायं मधुरं हिमं हृद्यं कफास्रनुत् । पित्तातिसारहृत्कण्ठ्यं फलं हिक्काऽस्रपित्तहृत् ॥ २२ ॥

अथाग्निमन्थः ( अगेथू, अरनी इति च लोके ) तस्य नामानि गुणांश्चाह—

अग्निमन्थो जयः स स्याच्छ्रीपर्णी गणिकारिका । जया जयन्ती तर्कारी नादेयी वैजयन्तिका २३
अग्निमन्थः श्वयथुनुद्वीर्योष्णः कफवातहृत् । पाण्डुनुत्कटुकस्तिक्तस्तुवरो मधुरोऽग्निदः ॥ २४ ॥

अथ श्योनाकः ( सोनापाठा-अरलू ) तस्य नामानि गुणांश्चाह—

श्योनाकः शोषणश्च स्यान्नटकट्वङ्गटुण्टुकाः । मण्डूकपर्णपत्रोणशुकनासकुटन्नटाः ॥ २५ ॥
दीर्घवृन्तोऽरलुश्चापि पृथुशिम्बः कटम्भरः । श्योनाको दीपनः पाके कटुकस्तुवरो हिमः ॥
ग्राही तिक्तोऽनिलश्लेष्मपित्तकासप्रणाशनः ॥ २६ ॥

अथ श्योनाकस्य बालप्रौढफलयोर्गुणानाह—

टुण्टुकस्य फलं बालं रूक्षं वातकफापहम् ॥ २७ ॥
हृद्यं कषायं मधुरं रोचनं लघु दीपनम् । गुल्मार्शःक्रिमिहृत् प्रौढं गुरु वातप्रकोपणम् ॥ २८ ॥

अथ बृहत्पञ्चमूलम्, तस्य लक्षणं गुणांश्चाह—

श्रीफलः सर्वतोभद्रा पाटला गणिकारिका । श्योनाकः पञ्चभिश्चैतैः पञ्चमूलं महन्मतम् ॥ २९ ॥
पञ्चमूलं महत्तिक्तं कषायं कफवातनुत् । मधुरं श्वासकासघ्नमुष्णं लघ्वग्निदीपनम् ॥ ३० ॥

अथ शालिपर्णी ( सरिवन ) तस्या नामानि गुणांश्चाह—

शालिपर्णी स्थिरा सौम्या त्रिपर्णी पीवरी गुहा । विदारिगन्धा दीर्घाङ्गी दीर्घपत्राऽंशुमत्यपि ३१
शालिपर्णी गुरुश्छर्दिज्वरश्वासातिसारजित् ॥ ३२ ॥
शोषदोषत्रयहरी बृंहण्युक्ता रसायनी । तिक्ता विषहरी स्वादुः क्षतकासक्रिमिप्रणुत् ॥ ३३ ॥

अथ पृश्निपर्णी ( पिठवन ) तस्या नामानि गुणांश्चाह—

पृश्निपर्णी पृथक्पर्णी चित्रपर्ण्यङ्घ्रिपर्ण्यपि । क्रोष्टुविन्ना सिंहपुच्छी कलशी धावनिर्गुहा ॥ ३४ ॥
पृश्निपर्णी त्रिदोषघ्नी वृष्योष्णा मधुरा सरा । हन्ति दाहज्वरश्वासरक्तातीसारतृड्वमीः ॥ ३५ ॥

अथ वार्त्ताकी ( बड़ी कटेरी ) तस्या नामानि गुणांश्चाह—

वार्त्ताकी क्षुद्रभण्टाकी महती बृहती कुली । हिङ्गुली राष्ट्रिका सिंही महोटी दुष्प्रधर्षिणी ॥ ३६ ॥

बृहती ग्राहिणी हृद्या पाचनी कफवातकृत् ॥ ३६ ॥
कटुस्तिक्तास्यवैरस्यमलारोचकनाशिनी । उष्णा कुष्ठज्वरश्वासशूलकासाग्निमान्द्यजित् ॥ ३७ ॥

अथ कण्टकारी ( भटकटैया, कटेरी ) तस्या नामान्याह—

कण्टकारी तु दुःस्पर्शा क्षुद्रा व्याघ्री निदिग्धिका । कण्टालिका कण्टकिनी धावनी बृहती तथा ३८

* उभे च बृहत्यौ । यत आह सुश्रुतः—
क्षुद्रा या क्षुद्रकण्टाकी बृहतीति निगद्यते ॥ ३८ ॥

अथ श्वेतपुष्पायाः कण्टकार्या नामान्याह—

श्वेता क्षुद्रा चन्द्रहासा लक्ष्मणा क्षेत्रदूतिका । गर्भदा चन्द्रमा चन्द्री चन्द्रपुष्पा प्रियङ्करी ॥३९॥

अथ कण्टकारीगुणानाह—

कण्टकारी सरा तिक्ता कटुका दीपनी लघुः ॥ ४० ॥
रूक्षोष्णा पाचनी कासश्वासज्वरकफानिलान् । निहन्ति पीनसं पार्श्वपीडाक्रिमिहृदामयान् ४१

अथ कण्टकारीद्वयफलगुणानाह—

तयोः फलं कटु रसे पाके च कटुकं भवेत् । शुक्रस्य रेचनं भेदि तिक्तं पित्ताग्निकृल्लघु ॥
हन्यात्कफमरुत्कण्डूकासमेदः क्रिमिज्वरान् ॥ ४२ ॥

अथ श्वेतपुष्पकण्टकार्या गुणानाह—

तद्वत्प्रोक्ता सिता क्षुद्रा विशेषाद्गर्भकारिणी ॥ ४३ ॥

अथ गोक्षुरः, तस्य नामानि गुणांश्चाह—

गोक्षुरः क्षुरकोऽपि स्यात्त्रिकण्टः स्वादुकण्टकः । गोकण्टको गोक्षुरको वनशृङ्गाट इत्यपि ॥४४॥
पलंकषा श्वदंष्ट्रा च तथा स्यादिक्षुगन्धिका । गोक्षुरः शीतलः स्वादुर्बलकृद्वस्तिशोधनः ॥४५॥
मधुरो दीपनो वृष्यः पुष्टिदश्चाश्मरीहरः । प्रमेहश्वासकासार्शःकृच्छ्रहृद्रोगवातनुत् ॥ ४६ ॥

अथ लघुपञ्चमूलम्, तस्य लक्षणं गुणांश्चाह—

शालिपर्णी पृश्निपर्णी वार्त्ताकी कण्टकारिका । गोक्षुरः पञ्चभिश्चैतैः कनिष्ठं पञ्चमूलकम् ॥४७॥
पञ्चमूलं लघु स्वादु बल्यं पित्तानिलापहम् । नात्युष्णं बृंहणं ग्राहि ज्वरश्वासाश्मरीप्रणुत् ४८

अथ दशमूलम्, तस्य लक्षणगुणांश्चाह—

उभाभ्यां पञ्चमूलाभ्यां दशमूलमुदाहृतम् । दशमूलं त्रिदोषघ्नं श्वासकासशिरोरुजः ॥
तन्द्राशोथज्वरानाहपार्श्वपीडाऽरुचीर्हरेत् ॥ ४९ ॥

अथ जीवन्ती ( शाकविशेषः शर्करावन्मधुरपुष्पा व्रततिर्भवति ) तस्या नामानि गुणांश्चाह—

जीवन्ती जीवनी जीवा जीवनीया मधुस्रवा । मङ्गल्यनामधेया च शाकश्रेष्ठा पयस्विनी ॥ ५० ॥
जीवन्ती शीतला स्वादुः स्निग्धा दोषत्रयापहा । रसायनी बलकरी चक्षुष्या ग्राहिणी लघुः ५१

अथ मुद्गपर्णी, तस्या नामानि गुणांश्चाह—

मुद्गपर्णी काकपर्णी सूर्यपर्ण्यल्पिका सहा ॥ ५२ ॥
काकमुद्गा च सा प्रोक्ता तथा मार्जारगन्धिका । मुद्गपर्णी हिमा रूक्षा तिक्ता स्वादुश्च शुक्रला ५३
चक्षुष्या क्षतशोथघ्नी ग्राहिणी ज्वरदाहनुत् । दोषत्रयहरी लघ्वी ग्रहण्यर्शोऽतिसारजित् ॥५४॥

अथ माषपर्णी, तस्या नामानि गुणांश्चाह—

माषपर्णी सूर्यपर्णी काम्बोजी हयपुच्छिका । पाण्डुलोमशपर्णी च कृष्णवृन्ता महासहा ॥ ५५ ॥
माषपर्णी हिमा तिक्ता रूक्षा शुक्रबलासकृत् । मधुरा ग्राहिणी शोथवातपित्तज्वरास्रजित् ॥ ५६ ॥

अथ जीवनीयगणः, तस्य लक्षणं गुणांश्चाह—

अष्टवर्गः सयष्टीको जीवन्ती मुद्गपर्णिका । माषपर्णीगणोऽयं तु जीवनीय इति स्मृतः ॥ ५७ ॥
जीवनो मधुरश्चापि नाम्ना स परिकीर्तितः । जीवनीयगणः प्रोक्तः शुक्रकृद्बृंहणो हिमः ॥ ५८ ॥
गुरुर्गर्भप्रदः स्तन्यकफकृत्पित्तरक्तहृत् । तृष्णां शोषं ज्वरं दाहं रक्तपित्तं व्यपोहति ॥ ५९ ॥

अथ शुक्लरक्तैरण्डौ, तयोर्नामानि गुणांश्चाह—

शुक्ल एरण्ड आमण्डश्चित्रो गन्धर्वहस्तकः । पञ्चाङ्गुलो वर्द्धमानो दीर्घदण्डो व्यडम्बकः ॥ ६० ॥
वातारिस्तरुणश्चापि रुवूकश्च निगद्यते । रक्तोऽपरो रुवूकः स्यादुरुवूको रुवुस्तथा ॥ ६१ ॥
व्याघ्रपुच्छश्च वातारिश्चञ्चुरुत्तानपत्रकः । एरण्डयुग्मं मधुरमुष्णं गुरु विनाशयेत् ॥ ६२ ॥
शूलशोथकटीबस्तिशिरःपीडोदरज्वरान् । ब्रध्नश्वासकफानाहकासकुष्ठामवातान् ॥ ६३ ॥

अथैरण्डपत्राग्रपत्रफलमज्जगुणानाह—

एरण्डपत्रं वातघ्नं कफक्रिमिविनाशनम् । मूत्रकृच्छ्रहरं चापि पित्तरक्तप्रकोपणम् ॥
वातार्यग्रदलं गुल्मं बस्तिशूलहरं परम् ॥ ६४ ॥
कफवातक्रिमीन्हन्ति वृद्धिं सप्तविधामपि । एरण्डफलमत्युष्णं गुल्मशूलानिलापहम् ॥ ६५ ॥
यकृत्प्लीहोदरार्शोघ्नं कटुकं दीपनं परम् । तद्वन्मज्जा च विड्भेदी वातश्लेष्मोदरापहः ॥ ६६ ॥

अथ शुक्लरक्तार्कौ ( सफेद आक—लाल आक ) तयोर्नामानि गुणांश्चाह—

श्वेतार्को गणरूपः स्यान्मन्दारो वसुकोऽपि च । श्वेतपुष्पः सदापुष्पः स चालर्कः प्रतापसः ॥ ६७ ॥
रक्तोऽपरोऽर्कनामा स्यादर्कपर्णो विकीरणः । रक्तपुष्पः शुक्लफलस्तथाऽऽस्फोटः प्रकीर्तितः ॥ ६८ ॥
अर्कद्वयं सरं वातकुष्ठकण्डूविषव्रणान् । निहन्ति प्लीहगुल्मार्शःश्लेष्मोदरशकृत्क्रिमीन् ॥ ६९ ॥

अथ शुक्लरक्तार्कयोः पुष्पगुणानाह—

अलर्ककुसुमं वृष्यं लघु दीपनपाचनम् । अरोचकप्रसेकार्शःकासश्वासनिवारणम् ॥ ७० ॥
रक्तार्कपुष्पं मधुरं सतिक्तं कुष्ठक्रिमिघ्नं कफनाशनञ्च ।
अर्शो विषं हन्ति च रक्तपित्तं संग्राहि गुल्मे श्वयथौ हितं तत् ॥ ७१ ॥

अथार्कदुग्धगुणानाह—

क्षीरमर्कस्य तिक्तोष्णं स्निग्धं सलवणं लघु । कुष्ठगुल्मोदरहरं श्रेष्ठमेतद्विरेचनम् ॥ ७२ ॥

अथ सेहुण्डः ( सेहुण्ड, थूहर ) तस्य नामानि गुणांश्चाह—

सेहुण्डःसिंहतुण्डःस्याद्वज्री वज्रद्रुमोऽपि च । सुधा समन्तदुग्धा च स्नुक् स्त्रियां स्यात्स्नुही गुडा ॥ ७३ ॥
सेहुण्डो रेचनस्तीक्ष्णो दीपनः कटुको गुरुः । शूलामाष्ठीलिकाऽऽध्मानकफगुल्मोदरानिलान् ॥ ७४ ॥
उन्मादमोहकुष्ठार्शःशोथमेदोऽश्मपाण्डुताः । व्रणशोथज्वरप्लीहविषदूषीविषं हरेत् ॥ ७५ ॥

अथ स्नुहीदुग्धगुणानाह—

उष्णवीर्यं स्नुहीक्षीरं स्निग्धञ्च कटुकं लघु । गुल्मिनां कुष्ठिनाञ्चापि तथैवोदररोगिणाम् ॥ ७६ ॥

हितमेतद्विरेकार्थं ये चान्ये दीर्घरोगिणः ॥ ७७ ॥

अथ सेहुण्डभेदः शातला ( "शातला" अनेनैव नाम्ना प्रसिद्धा ) तस्या नामानि गुणांश्चाह—

शातला सप्तला सारा विमला विदुला च सा । तथा निगदिता भूरिफेना चर्मकषेत्यपि ॥७८॥
शातला कटुका पाके वातला शीतला लघुः । तिक्ता शोथकफानाहपित्तोदावर्तरक्तजित् ॥७९॥

अथ कलिहारी, तस्या नामानि गुणाँश्चाह—

कलिहारी तु हलिनी लांगली शक्रपुष्प्यपि । विशल्याऽग्निशिखाऽनन्ता वह्निवक्त्रा च गर्भनुत् ॥
कलिहारी सरा कुष्ठशोफार्शोव्रणशूलजित् ॥ ८० ॥
सक्षारा श्लेष्मजित्तिक्ता कटुका तुवराऽपि च । तीक्ष्णोष्णा कृमिहृल्लघ्वी पित्तला गर्भपातिनी ८१

अथ श्वेतरक्तकरवीरौ, तयोर्नामानि गुणांश्चाह—

करवीरः श्वेतपुष्पः शतकुम्भोऽश्वमारकः । द्वितीयो रक्तपुष्पश्च चण्डातो लगुडस्तथा ॥ ८२ ॥
करवीरद्वयं तिक्तं कषायं कटुकञ्च तत् । व्रणलाघवकृन्नेत्रकोपकुष्ठव्रणापहम् ॥ ८३ ॥
वीर्योष्णं कृमिकण्डूघ्नं भक्षितं विषवन्मतम् ॥ ८४ ॥

अथ धत्तूरः, तस्य नामानि गुणांश्चाह—

धत्तूरधूर्तधुस्तूरा उन्मत्तः कनकाह्वयः । देवता कितवस्तूरी महामोही शिवप्रियः ॥ ८५ ॥
मातुलो मदनश्चास्य फले मातुलपुत्रकः । धत्तूरो मदवर्णाग्निवातकृज्ज्वरकुष्ठनुत् ॥ ८६ ॥
कषायो मधुरस्तिक्तो यूकालिक्षाविनाशकः । उष्णो गुरुर्व्रणश्लेष्मकण्डूकृमिविषापहः ॥ ८७ ॥

अथाटरूषः ( अडूसा ) तस्य नामानि गुणांश्चाह—

वासको वासिका वासा भिषङ्माता च सिंहिका । सिंहास्यो वाजिदन्ता स्यादाटरूषोऽटरूषकः ८८
आटरूषो वृषस्ताम्रः सिंहपर्णश्च स स्मृतः । वासको वातकृत्स्वर्यः कफपित्तास्रनाशनः ॥ ८९ ॥
तिक्तस्तुवरको हृद्यो लघुशीतस्तृडर्त्तिहृत् । श्वासकासज्वरच्छर्दिमेहकुष्ठक्षयापहः ॥ ९० ॥

अथ पर्पटः ( पित्तपापडा ) तस्य नामानि गुणांश्चाह—

पर्पटो वरतिक्तश्च स्मृतः पर्पटकश्च सः । कथितः पांशुपर्यायस्तथा कवचनामकः ॥ ९१ ॥
पर्पटो हन्ति पित्तास्रभ्रमतृष्णाकफज्वरान् । संग्राही शीतलस्तिक्तो दाहनुद्वातलो लघुः ॥ ९२ ॥

अथ निम्बः, तस्य नामानि गुणांश्चाह—

निम्बः स्यात्पिचुमर्दश्च पिचुमन्दश्च तिक्तकः । अरिष्टः पारिभद्रश्च हिंगुनिर्यास इत्यपि ॥ ९३ ॥
निम्बः शीतो लघुर्ग्राही कटुपाकोऽग्निवातनुत् । अहृद्यः श्रमतृट्कासज्वरारुचिकृमिप्रणुत् ॥
व्रणपित्तकफच्छर्दिकुष्ठहृल्लासमेहनुत् ॥ ९४ ॥

अथ निम्बस्य पत्रफलयोर्गुणानाह—

निम्बपत्रं स्मृतं नेत्र्यं कृमिपित्तविषप्रणुत् । वातलं कटुपाकञ्च सर्वारोचककुष्ठनुत् ॥ ९५ ॥
निम्बफलं रसे तिक्तं पाके तु कटु भेदनम् । स्निग्धं लघूष्णं कुष्ठघ्नं गुल्मार्शःकृमिमेहनुत् ॥९६॥

अथ महानिम्बः ( वकायन ) तस्य नामानि गुणांश्चाह—

महानिम्बः स्मृतो द्रेका रम्यको विषमुष्टिकः । केशमुष्टिर्निम्बकश्च कार्मुको जीव इत्यपि ९७
महानिम्बो हिमो रूक्षस्तिक्तो ग्राही कषायकः ॥ ९८ ॥

कफपित्तश्रमच्छर्दिकुष्ठहृल्लासरक्तजित् । प्रमेहश्वासगुल्मार्शोमूषिकाविषनाशनः ॥ ९९ ॥

अथ पारिभद्रः ( फरहद ) तस्य नामानि तत्पत्रस्य च गुणांश्चाह—

पारिभद्रो निम्बतरुर्मन्दारः पारिजातकः । पारिभद्रोऽनिलश्लेष्मशोथमेदः कृमिप्रणुत् ॥
तत्पत्रं पित्तरोगघ्नं कर्णव्याधिविनाशनम् ॥ १०० ॥

अथ काञ्चनारः काञ्चनाररक्त ( कचनार ) तयोर्नामानि तत्पुष्पस्य च गुणांश्चाह—

काञ्चनारः काञ्चनको गण्डारिः शोणपुष्पकः ॥ १०१ ॥
कोविदारश्च मरिकः कुद्दालो युगपत्रकः । कुण्डली ताम्रपुष्पश्चाश्मन्तकः स्वल्पकेशरी ॥१०२॥
काञ्चनारो हिमो ग्राही तुवरः श्लेष्मपित्तनुत् । कृमिकुष्ठगुदभ्रंशगण्डमालाव्रणापहः ॥१०३॥
कोविदारोऽपि तद्वत्स्यात्तयोः पुष्पं लघु स्मृतम् । रूक्षं संग्राहि पित्तास्रप्रदरक्षयकासनुत् ॥१०४

अथ शोभाञ्जनः ( सहिजना ) ( श्यामः श्वेतो रक्तश्च ) तन्नामानि तद्गुणांश्चाह—

शोभाञ्जनः शिग्रुतीक्ष्णगन्धकाक्षीवमोचकाः । तद्बीजं श्वेतमरिचं मधुशिग्रुः स लोहितः ॥
शिग्रुः कटुः कटुः पाके तीक्ष्णोष्णो मधुरो लघुः ॥ १०५ ॥
दीपनो रोचनो रूक्षः क्षारस्तिक्तो विदाहकृत् । संग्राही शुक्रलो हृद्यः पित्तरक्तप्रकोपणः ॥१०६॥
चक्षुष्यः कफवातघ्नो विद्रधिश्वयथुक्रिमीन् । मेदोऽपचीविषप्लीहगुल्मगण्डव्रणान्हरेत् ॥१०७॥
श्वेतः प्रोक्तगुणो ज्ञेयो विशेषाद्दाहकृद्भवेत् । प्लीहानं विद्रधिं हन्ति व्रणघ्नः पित्तरक्तकृत् ॥
मधुशिग्रुः प्रोक्तगुणो विशेषाद्दीपनः सरः ॥ १०८ ॥

अथ शिग्रुवल्कलपत्रस्वरसगुणानाह—

शिग्रुवल्कलपत्राणां स्वरसः परमार्त्तिहृत ॥ १०९ ॥

अथ शिग्रुबीजगुणानाह—

चक्षुष्यं शिग्रुजं बीजं तीक्ष्णोष्णं विषनाशनम् । अवृष्यं कफवातघ्नं तन्नस्येन शिरोऽर्त्तिनुत् ११०

अथ श्वेतपुष्पा नीलपुष्पा चापराजिता ( कोयल ) तयोर्नामानि गुणांश्चाह—

आस्फोता गिरिकर्णी स्याद्विष्णुक्रान्ताऽपराजिता । अपराजिते कटू मेध्ये शीते कण्ठ्ये सुदृष्टिदे १११
कुष्ठमूत्रत्रिदोषामशोथव्रणविषापहे । कषाये कटुके पाके तिक्ते च स्मृतिबुद्धिदे ॥ ११२ ॥

अथ सिन्दुवारः मेउड़ी-सेन्दुवार इति च (सम्हालू=नीलसम्हालू ) तयोर्नामानि गुणांश्चाह—

सिन्दुवारः श्वेतपुष्पः सिन्दुकः सिन्दुवारकः । नीलपुष्पी तु निर्गुण्डी शेफाली सुवहा च सा ११३
सिन्दुकः स्मृतिदस्तिक्तः कषायः कटुको लघुः । केश्यो नेत्रहिता हन्ति शूलशोथाममारुतान् ॥
कृमिकुष्ठारुचिश्लेष्मज्वरान्नालाऽपितद्विधा ॥ ११४ ॥

अथ सिन्दुवारपत्रगुणानाह—

सिन्दुवारदलं जन्तुवातश्लेष्महरं लघु ॥ ११५ ॥

अथ कुटजः ( कुडा-कोरैया ) तस्य नामगुणानाह—

कुटजः कूटजः कौटो वत्सको गिरिमल्लिका ॥ ११६ ॥
कालिङ्गः शक्रशाखी च मल्लिकापुष्प इत्यपि । इन्द्रो यवफलः प्रोक्तो वृक्षकः पाण्डुरद्रुमः ११७
कुटजः कटुको रूक्षो दीपनस्तुवरो हिमः । अर्शोऽतिसारपित्तास्रकफतृष्णाऽऽमकुष्ठनुत् ॥ ११८ ॥

अथ कण्टककरञ्जघृतकरञ्जौ (करञ्ज–करञ्जभेद) तयोर्नामानि गुणाँश्चाह—

करञ्जो नक्तमालश्च करजश्चिरबिल्वकः । घृतपूर्णकरञ्जोऽन्यः प्रकीर्यः पूतिकोऽपि च ॥ ११९ ॥
स चोक्तः पूतिकरजः सोमवल्कश्च स स्मृतः । करञ्जः कटुकस्तीक्ष्णो वीर्योष्णो योनिदोषहृत् ॥
कुष्ठोदावर्तगुल्मार्शोव्रणक्रिमिकफापहः ॥ १२० ॥

अथ करञ्जपत्रफलगुणानाह—

तत्पत्रं कफवातार्शःक्रिमिशोथहरं परम् । भेदनं कटुकं पाके वीर्योष्णं पित्तलं लघु ॥ १२१ ॥
तत्फलं कफवातघ्नं मेहार्शः क्रिमिकुष्ठजित् । घृतपूर्णकरञ्जोऽपि करञ्जसदृशो गुणैः ॥ १२२ ॥

अथ करंजी ( अरारी ) तस्या नामगुणानाह—

उदकीर्यस्तृतीयोऽन्यः षड्ग्रन्था हस्तिवारुणी । मर्कटी वायसी चापि करञ्जी करभञ्जिका ॥१२३॥
करञ्जी स्तम्भनी तिक्ता तुवरा कटुपाकिनी । वीर्योष्णा वमिपित्तार्शः क्रिमिकुष्ठप्रमेहजित् ॥१२४॥

अथ गुञ्जा श्वेता रक्ता च तयोर्नामगुणानाह—

श्वेता गुञ्जोच्चटा प्रोक्ता कृष्णला चापि सा स्मृता । रक्ता सा काकचिञ्ची स्यात्काकणन्ती च रक्तिका
काकादनी काकपीलुः सा स्मृता काकवल्लरी । गुञ्जाद्वयन्तु केश्यं स्याद्वातपित्तज्वरापहम् १२६
मुखशोषभ्रमश्वासतृष्णामदविनाशनम् । नेत्रामयहरं वृष्यं बल्यं कण्डूं व्रणं हरेत् ॥ १२७ ॥
क्रिमीन्द्रलुप्तकुष्ठानि रक्ता च धवलाऽपि च ॥ १२८ ॥

अथ कपिकच्छूः ( कौंच ) तस्या नामगुणानाह—

कपिकच्छूरात्मगुप्ता वृष्या प्रोक्ता च मर्कटी । अजडा कण्डुरा व्यङ्गा दुःस्पर्शा प्रावृषायणी १२९
लाङ्गली शूकशिम्बी च सैव प्रोक्ता महर्षिभिः । कपिकच्छूर्भृशं वृष्या मधुरा बृंहणी गुरुः ॥
तिक्ता वातहरी बल्या कफपित्तास्रनाशिनी ॥ १३० ॥

अथ तद्बीजगुणानाह—

तद्बीजं वातशमनं स्मृतं वाजीकरं परम् ॥ १३१ ॥

अथ मांसरोहिणी, तस्या नामगुणानाह—

मांसरोहिण्यतिरुहा वृत्ता चर्मकषा वशा । प्रहारवल्ली विकशा वीरवत्यपि कथ्यते ॥
स्यान्मांसरोहिणी वृष्या सरा दोषत्रयापहा ॥ १३२ ॥

अथ चिह्नकः "चिरह" इति लोके, तस्य नामगुणानाह—

चिह्नको वातनिर्हारः श्लेष्मघ्नो धातुपुष्टिकृत् । आग्नेयो विषवद्यस्य फलं मत्स्यनिसूदनम्॥१३३॥

अथ टङ्कारी, तस्या गुणानाह—

टङ्कारी वातजित्तिक्ता श्लेष्मघ्नी दीपनी लघुः । शोथोदरव्यथाहन्त्री हिता पीठविसर्पिणाम्॥१३४॥

अथ वेतसः( वेंत ) तस्य नामगुणानाह—

वेतसो नम्रकः प्रोक्तो वानीरो वञ्जुलस्तथा । अभ्रपुष्पश्च विदुलो रथः शीतश्च कीर्तितः॥ १३५ ॥
वेतसः शीतलो दाहशोथार्शोयोनिरुक्प्रणुत् । हन्ति वीसर्पकृच्छ्रास्रपित्ताश्मरिकफानिलान् १३६

अथ जलवेतसः, तस्य नामगुणानाह—

निकुञ्जकः परिव्याधो नादेयो जलवेतसः । जलजो वेतसः शीतः कुष्ठहृद्वातकोपनः ॥ १३७ ॥

अथेज्जलः ( समुद्रफल शोष इति लोके ) तस्य नामगुणानाह—

इज्जलो हिज्जलश्चापि निचुलश्चाम्बुजस्तथा । जलवेतसवद्वेद्यो हिज्जलोऽयं विषापहः ॥१३८॥

अथाङ्कोटः ( अंकोल–ढेरा ) तस्य नामगुणानाह—

अङ्कोटो दीर्घकीलः स्यादङ्कोलश्च निकोचकः । अङ्कोटकः कटुस्तीक्ष्णः स्निग्धोष्णस्तुवरो लघुः १३९

रेचनः कृमिशूलामशोफग्रहविषापहः । विसर्पकफपित्तास्रमूषकाहिविषापहः ॥ १४० ॥

अथाङ्कोटफलस्य गुणानाह—

तत्फलं शीतलं स्वादु श्लेष्मघ्नं बृंहणं गुरु । बल्यं विरेचनं वातपित्तदाहक्षयास्रजित् ॥१४१॥

अथ बलाचतुष्टयम् ( खिरैटी ), तस्य नामगुणानाह—

बला वाट्यालिका वाट्या सैव वाट्यालकाऽपि च । महाबला पीतपुष्पा सहदेवी च सा स्मृता १४२

ततोऽन्याऽतिबला ऋष्यप्रोक्ता कङ्कतिका च सा । गांगेरुकी नागबला झषा ह्रस्वगवेधुका १४३

बलाचतुष्टयं शीतं मधुरं बलकान्तिकृत् । स्निग्धं ग्राहिसमीरास्रपित्तास्रक्षतनाशनम् ॥१४४॥

* बरियारा, सहदेवी, ककहिया, गुलशकरी, इति बलाचतुष्टयम् ॥ १४४ ॥

बलामूलत्वचश्चूर्णं पीतं सक्षीरशर्करम् । मूत्रातिसारं हरति दृष्टमेतन्न संशयः ॥ १४५ ॥

हरेन्महाबला कृच्छ्रं भवेद्वातानुलोमिनी । हन्यादतिबला मेहं पयसा सितया समम् ॥१४६॥

अथ लक्ष्मणा, तस्याः लक्षणगुणानाह—

पुत्रकाकाररक्ताल्पबिन्दुभिर्लाञ्छितच्छदा ॥ १४७ ॥

लक्ष्मणा पुत्रजननी बस्तगन्धाकृतिर्भवेत् । कथिता पुत्रदाऽवश्यं लक्ष्मणा मुनिपुङ्गवैः ॥१४८॥

अथ स्वर्णवल्ली ( सोनवेल ), तस्या नामगुणानाह—

स्वर्णवल्ली रक्तफला काकायुः काकवल्लरी । स्वर्णवल्ली शिरःपीडां त्रिदोषान्हन्ति दुग्धदा ॥१४९॥

अथ कार्पासी ( कपास ) तस्या नामगुणानाह—

कार्पासी तुण्डकेरी च समुद्रान्ता च कथ्यते । कार्पासकी लघुः कोष्णा मधुरा वातनाशिनी १५०

अथ तत्पत्रबीजयोर्गुणानाह—

तत्पलाशं समीरघ्नं रक्तकृन्मूत्रवर्द्धनम् । तत्कर्णपिडकानादपूयास्रावविनाशनम् ॥ १५१ ॥

तद्बीजं स्तन्यदं वृष्यं स्निग्धं कफकरं गुरु ॥ १५२ ॥

अथ वंशः ( बांस ) तस्य नामगुणानाह—

वंशस्त्वक्सारकर्मारत्वचिसारतृणध्वजाः । शतपर्वा यवफलो वेणुमस्करतेजनाः ॥ १५३ ॥

वंशः सरो हिमः स्वादुः कषायो बस्तिशोधनः । छेदनः कफपित्तघ्नः कुष्ठास्रव्रणशोथजित् १५४

अथ वंशस्य करीरयवयोर्गुणानाह—

तत्करीरः कटुः पाके रसे रूक्षो गुरुः सरः । कषायः कफकृत्स्वादुर्विदाही वातपित्तलः ॥ १५५ ॥

तद्यवास्तु सरा रूक्षाः कषायाः । कटुपाकिनः । वातपित्तकरा उष्णा बद्धमूत्राः कफापहाः ॥१५६॥

अथ नलः ( नरसल ) तस्य नामगुणानाह—

नलः पोटगलः शून्यमध्यश्च धमनस्तथा । नलस्तु मधुरस्तिक्तः कषायः कफरक्तजित् ॥

उष्णो हृद्बस्तियोन्यर्त्तिदाहपित्तविसर्पहृत् ॥ १५७ ॥

अथ भद्रमुञ्जः ( रामशर-सरपत इति वा ) मुञ्जश्च ( मूंज ) तयोर्नामगुणानाह—

भद्रमुञ्जः शरो बाणस्तेजनश्चेक्षुवेष्टनः ॥ १५८ ॥

मुञ्जो मुञ्जातको बाणः स्थूलदर्भः सुमेखलः । मुञ्जद्वयन्तु मधुरं तुवरं शिशिरं तथा ॥ १५९ ॥

दाहतृष्णा विसर्पास्रमूत्रकृच्छ्राक्षिरोगजित् । दोषत्रयहरं वृष्यं मेखलासूपयुज्यते ॥ १६० ॥

अथ काशः तस्य नामगुणानाह—

काशः काशेक्षुरुद्दिष्टः स स्यादिक्षुरसस्तथा । इक्ष्वालिकेक्षुगन्धा च तथा पोटगलः स्मृतः १६१

काशः स्यान्मधुरस्तिक्तः स्वादुपाको हिमः सरः । मूत्रकृच्छ्राश्मरीदाहास्रक्षयपित्तजरोगजित् १६२

अथ गुन्द्रः ( पटेर-गोंदपटेर इति च ) तस्य नामगुणानाह—

गुन्द्रः पटेरको रच्छः शृङ्गवेराभमूलकः । गुन्द्रः काषायो मधुरः शिशिरः पित्तरक्तजित् ॥

स्तन्यशुक्ररजोमूत्रशोधनो मूत्रकृच्छ्रहृत् ॥ १६३ ॥

अथैरका ( मोथी तृणविशेषः ) तस्या नामगुणानाह—

एरका गुन्द्रमूला च शिविर्गुन्द्रा शरीति च । एरका शिशिरा वृष्या चक्षुष्या वातकोपिनी ॥

मूत्रकृच्छ्राश्मरीदाहपित्तशोणितनाशिनी ॥ १६४ ॥

अथ कुशः ( कुशा ) क्षुरपत्रश्च ( डाभ ), तयोर्नामानि गुणांश्चाह—

कुशो दर्भस्तथा बर्हिः सूच्यग्रो यज्ञभूषणः । ततोऽन्यो दीर्घपत्रः स्यात्क्षुरपत्रस्तथैव च ॥१६५॥

दर्भद्वयं त्रिदोषघ्नं मधुरं तुवरं हिमम् । मूत्रकृच्छ्राश्मरीतृष्णावस्तिरुक्प्रदरास्रजित् ॥१६६॥

अथ कत्तृणम् ( रोहिस, सोधिआ इति च ) तस्य नामानि गुणांश्चाह—

कत्तृणं रौहिषं देवजग्धं सौगन्धिकं तथा । भूतिकं ध्यामपौरञ्च श्यामकं धूपगन्धिकम् ॥१६७॥

रौहिषं तुवरं तिक्तं कटुपाकं व्यपोहति । हृत्कण्ठव्याधिपित्तास्रशूलकासकफज्वरान् ॥ १६८ ॥

अथ भूतृणम् ( शरवाण ), तस्य नामगुणानाह—

गुह्यबीजं तु भूतीकं सुगन्धं जम्बुकप्रियम् । भूतृणं तु भवेच्छत्रा मालातृणकमित्यपि ॥ १६९ ॥

भूतृणं कटुकं तिक्तं तीक्ष्णोष्णं रेचनं लघु । विदाहि दीपनं रूक्षमनेत्र्यं मुखशोधनम् ॥ १७० ॥

अवृष्यं बहुविट्कञ्च पित्तरक्तप्रदूषणम् ॥ १७१ ॥

अथ नीलदूर्वा ( हरी दूब ) तस्या नामानि गुणाँश्चाह—

नीलदूर्वा रुहाऽनन्ता भार्गवी शतपर्विका । शष्पं सहस्रवीर्या च शतवल्ली च कीर्त्तिता ॥१७२॥

नीलदूर्वा हिमा तिक्ता मधुरा तुवरा हरेत् । कफपित्तास्रवीसर्पतृष्णादाहत्वगामयान् ॥ १७३ ॥

अथ श्वेतदूर्वा, तस्या नामानि गुणांश्चाह—

दूर्वा शुक्ला तु गोलोमी शतवीर्या च कथ्यते । श्वेता दूर्वा कषाया स्यात्स्वाद्वी व्रण्या च जीवनी॥

तिक्ता हिमा विसर्पास्रतृट्पित्तकफदाहहृत् ॥ १७४ ॥

अथ गण्डदूर्वा ( गांडरदूब ) तस्या नामगुणानाह—

गण्डदूर्वा तु गण्डाली मत्स्याक्षी शकुलाक्षकः । गण्डदूर्वा हिमा लोहद्राविणी ग्राहिणी लघुः १७५

तिक्ता कषाया मधुरा वातकृत्कटुपाकिनी । दाहतृष्णाबलासास्रकुष्ठपित्तज्वरापहा ॥ १७६ ॥

अथ वाराहीकन्दः ( क्षीरविदारी-गेठी इति लोके ) तस्य लक्षणनामगुणानाह—

वाराहीकन्दसंज्ञस्तु पश्चिमे गृष्टिसंज्ञकः ॥ १७७ ॥
वाराहीकन्द एवान्यैश्चर्मकारालुको मतः । अनूपसम्भवे देशे वाराह इव लोमवान् ॥ १७८ ॥
विदारी स्वादुकन्दा च सा तु क्रोष्ट्री सिता स्मृता । इक्षुगन्धा क्षीरवल्ली क्षीरशुक्ला पयस्विनी॥१७९
वाराहवदना गृष्टिर्वरदेत्यपि कथ्यते । विदारी मधुरा स्निग्धा बृंहणी स्तन्यशुक्रदा ॥१८०॥
शीता स्वर्या मूत्रला च जीवनी बलवर्णदा । गुरुः पित्तास्रपवनदाहान्हन्ति रसायनी ॥१८१॥

अथ मुशलीकन्दः, तस्य लक्षणगुणानाह—

तालमूली तु विद्वद्भिर्मुशली परिकीर्तिता । मुशली मधुरा वृष्या वीर्योष्णा बृंहणी गुरुः ॥
तिक्ता रसायनी हन्ति गुदजान्यनिलं तथा ॥ १८२ ॥

अथ शतावरी महाशतावरी च, तयोर्नामानि गुणांश्चाह—

शतावरी बहुसुता भीरुरिन्दीवरी वरी । नारायणी शतपदी शतवीर्या च पीवरी ॥ १८३ ॥
महाशतावरी चान्या शतमूल्यूर्ध्वकण्टिका । सहस्रवीर्या हेतुश्च ऋष्यप्रोक्ता महोदरी ॥१८४॥
शतावरी गुरुः शीता तिक्ता स्वाद्वी रसायनी ।
मेधाऽग्निपुष्टिदा स्निग्धा नेत्र्या गुल्मातिसारजित् ॥ १८५ ॥
शुक्रस्तन्यकरी बल्या वातपित्तास्रशोथजित्। महाशतावरी मेध्या हृद्या वृष्या रसायनी ॥१८६॥
शीतवीर्या निहन्त्यर्शोग्रहणीनयनामयान् । तदङ्कुरस्त्रिदोषघ्नो लघुरर्शःक्षयापहा ॥ १८७ ॥

अथाश्वगन्धा तस्या नामगुणानाह—

गन्धान्ता वाजिनामादिरश्वगन्धा हयाह्वया । वराहकर्णी वरदा बलदा कुष्ठगन्धिनी ॥१८८॥
अश्वगन्धाऽनिलश्लेष्मश्वित्रशोथक्षयापहा। बल्या रसायनी तिक्ता कषायोष्णाऽतिशुक्रला १८९

अथ पाठा ( पाढ ) तस्या नामानि गुणांश्चाह—

पाठाऽम्बष्ठाऽम्बष्ठकी च प्राचीना पापचेलिका। एकाष्ठीलारसा प्रोक्ता पाठिका वरतिक्तिका॥१९०॥
पाठोष्णा कटुका तीक्ष्णा वातश्लेष्महरी लघुः । हन्ति शूलज्वरच्छर्दिकुष्ठातीसारहृद्रुजः ॥
दाहकण्डूविषश्वासकृमिगुल्मगरव्रणान् ॥ १९१ ॥

अथ श्वेता त्रिवृत् ( निसोत- श्वेतपनिलर ) तस्या नामगुणानाह—

श्वेता त्रिवृत्त्रिभण्डी स्यात् त्रिवृता त्रिपुटाऽपि च। सर्वानुभूतिः सरला निशोत्रा रेचनीति च१९२
श्वेता त्रिवृद्रेचनी स्यात्स्वादुरुष्णा समीरहृत्। रूक्षा पित्तज्वरश्लेष्मपित्तशोथोदरापहा॥१९३॥

अथ श्यामा त्रिवृत् ( काली निशोत ), तस्या नामानि गुणांश्चाह—

त्रिवृच्छ्यामाऽर्द्धचन्द्रा च पालिन्दी च सुषेणिका। मसूरविदला काली कैषिका कालमेषिका१९४
श्यामा त्रिवृत्ततो हीनगुणा तीव्रविरेचिनी। मूर्च्छादाहमदभ्रान्तिकण्ठोत्कर्षणकारिणी ॥१९५॥

अथ लघुदन्ती वृहद्दन्ती च ( एरण्डवत्पत्रविटपा ), तयोर्नामानि गुणांश्चाह—

लघुदन्ती विशल्या च स्यादुदुम्बरपर्ण्यपि। तथैरण्डफला शीघ्रा श्येनघण्टा घुणप्रिया ॥१९६॥
वाराहाङ्गी च कथिता निकुम्भश्च मकूलकः। द्रवन्ती सम्बरी चित्रा प्रत्यक्पर्ण्याखुपर्ण्यपि॥१९७
उपचित्रा श्रुतश्रोणी न्यग्रोधी च तथा वृषा। दन्तीद्वयं सरं पाके रसे च कटु दीपनम् ॥१९८॥

गुदाङ्कुराश्मशूलार्शःकण्डूकुष्ठविदाहनुत्। तीक्ष्णोष्णं हन्ति पित्तास्रकफशोथोदरक्रिमीन् ॥१९९॥

अथ लघुदन्तीफलम् , तस्य गुणानाह—

क्षुद्रदन्तीफलं तु स्यान्मधुरं रसपाकयोः। शीतलं सृष्टविण्मूत्रं गरशोथकफापहम् ॥ २०० ॥

अथ जयपालः ( जमालगोटा ) तस्य नामानि गुणांश्चाह—

जयपालो दन्तिबीजं विख्यातं तिन्तिडीफलम्। जयपालो गुरुः स्निग्धो रेची पित्तकफापहः २०१

अथेन्द्रवारुणी महेन्द्रवारुणी च ( इन्द्रायण-बड़ी इन्द्रायण ) तयोर्नामगुणानाह—

ऐन्द्रीन्द्रवारुणी चित्रा गवाक्षी च गवादिनी।वारुणी च पराऽप्युक्ता सा विशाला महाफला ॥२०२॥

श्वेतपुष्पा मृगाक्षी च मृगैर्वारुर्मृगादनी। गवादिनीद्वयं तिक्तं पाके कटु सरं लघु ॥ २०३ ॥

वीर्योष्णं कामलापित्तकफप्लीहोदरापहम् ॥ २०४ ॥

श्वासकासापहं कुष्ठगुल्मग्रन्थिव्रणप्रणुत्। प्रमेहमूढगर्भामगण्डामयविषापहम् ॥ २०५ ॥

अथ नीली ( नील ) तस्या नामानि गुणांश्चाह—

नीली तु नीलिनी तूणी कालादोला च नीलिका। रञ्जनी श्रीफली तुच्छा ग्रामीणा मधुपर्णिका

क्लीतका कालकेशी च नीलपुष्पा च सा स्मृता। नीलिनी रेचनी तिक्ता केश्या मोहभ्रमापहा ॥

उष्णा हन्त्युदरप्लीहवातरक्तकफानिलान्। आमवातमुदावर्त्तं मदं च विषमुद्धतम् ॥ २०८ ॥

अथ शरपुङ्खः ( सरफोंका ) तस्य नामलक्षणगुणानाह—

शरपुङ्खः प्लीहशत्रुर्नीलीवृक्षाकृतिश्च सः। शरपुङ्खो यकृत्प्लीहगुल्मव्रणविषापहः ॥

तिक्तः कषायः कासास्रश्वासज्वरहरो लघुः ॥ २०९ ॥

अथ यवासो दुरालभा च ( जवासा-धमासा ) तयोर्नामानि गुणांश्चाह—

यासो यवासो दुःस्पर्शो धन्वयासः कुनाशकः। दुरालभा दुरालम्भा समुद्रान्ता च रोदिनी २१०

गान्धारी कच्छुराऽनन्ता कषाया हरिविग्रहा। यासः स्वादुः सरस्तिक्तस्तुवरः शीतलो लघुः ॥

कफमेदोमदभ्रान्तिपित्तासृक्कुष्ठकासजित्। तृष्णाविसर्पवातास्रवमिज्वरहरः स्मृतः ॥२१२॥

यवासस्य गुणैस्तुल्या बुधैरुक्ता दुरालभा ॥ २१३ ॥

अथ मुण्डी महामुण्डी च तयोर्नामगुणानाह—

मुण्डी भिक्षुरपि प्रोक्ता श्रावणी च तपोधना। श्रवणाह्वा मुण्डतिका तथा श्रवणशीर्षका २१४

महाश्रावणिकाऽन्या तु सा स्मृता भूकदम्बिका। कदम्बपुष्पिका च स्यादव्यथाऽतितपस्विनी॥

मुण्डतिका कटुः पाके वीर्योष्णा मधुरा लघुः।मेध्या गण्डापचीकृच्छ्रक्रिमियोन्यर्त्तिपाण्डुनुत् २१६

श्लीपदारुच्यपस्मारप्लीहमेदोगुदार्तिहृत्। महामुण्डी च तत्तुल्या गुणैरुक्ता महर्षिभिः ॥२१७॥

अथापामार्गः ( चिरचिटा ) तस्य नामानि गुणांश्चाह—

अपामार्गस्तु शिखरी ह्यधःशल्यो मयूरकः। मर्कटी दुर्ग्रहा चापि किणिही खरमञ्जरी ॥२१८॥

अपामार्गः सरस्तीक्ष्णो दीपनस्तिक्तकः कटुः। पाचनो रोचनश्छर्दिकफमेदोऽनिलापहः ॥

निहन्ति हृद्रुजाध्मानार्शःकण्डूशूलोदरापचीः ॥ २१९ ॥

अथ रक्तापामार्गः ( लाल ओंगा ) तस्य नामगुणानाह—

रक्तोऽन्यो वशिरो वृत्तफलो धामार्गवोऽपि च। प्रत्यक्पर्णी केशपर्णी कथिता कपिपिप्पली २२०

अपामार्गोऽरुणो वातविष्टम्भी कफकृद्धिमः । रूक्षः पूर्वगुणैर्न्यूनः कथितो गुणवेदिभिः ॥२२१॥

अथापामार्गफलगुणानाह—

अपामार्गफलं स्वादु रसे पाके च दुर्जरम् । विष्टम्भि वातलं रूक्षं रक्तपित्तप्रसादनम् ॥२२२॥

अथ कोकिलाक्षः ( तालमखाना ) तस्य नामानि गुणांश्चाह—

कोकिलाक्षस्तु काकेक्षुरिक्षुरः क्षुरकः क्षुरः । भिक्षुः काण्डेक्षुरप्युक्त इक्षुगन्धेक्षुवालिका ॥२२३॥

क्षुरकः शीतलो वृष्यः स्वाद्वम्लः पिच्छलस्तथा । तिक्तो वातामशोथाश्मतृष्णादृष्ट्यनिलास्रजित् ॥

अथास्थिसंहारः ( हड्संहारी ) तस्य नामानि गुणांश्चाह—

ग्रन्थिमानस्थिसंहारी वज्राङ्गी वाऽस्थिशृङ्खला । अस्थिसंहारकः प्रोक्तो वातश्लेष्महरोऽस्थियुक्

उष्णः सरः कृमिघ्नश्च दुर्नामघ्नोऽक्षिरोगजित् । रूक्षः स्वादुर्लघुर्वृष्यः पाचनः पित्तलः स्मृतः २२६

अथ तद्वटिकाया निर्माणविधिं गुणं चाह—

काण्डं त्वग्विरहितमस्थिशृङ्खलाया- माषार्द्धं द्विदलमकञ्चुकं तदर्द्धम् ।

सम्पिष्टं सुतनु ततस्तिलस्य तैले- संपक्वं वटकमतीव वातहारि ॥ २२७ ॥

अथ कुमारी ( घीकुआर ) तस्या नामगुणानाह—

कुमारी गृहकन्या च कन्या घृतकुमारिका । कुमारी भेदिनी शीता तिक्ता नेत्र्या रसायनी२२८

मधुरा बृंहणी बल्या वृष्या वातविषप्रणुत् । गुल्मप्लीहयकृद्वृद्धिकफज्वरहरो हरेत् ॥

ग्रन्थ्यग्निदग्धविस्फोटपित्तरक्तत्वगामयान् ॥ २२९ ॥

अथ श्वेतपुनर्नवा, तस्या नामानि गुणांश्चाह—

पुनर्नवाश्वेतमूलाशोथघ्नी दीर्घपत्रिका । कटुः कषायानुरसा पाण्डुघ्नीदीपनी परा ॥

शोफानिलगरश्लेष्महरी ब्रध्नोदरप्रणुत् ॥ २३० ॥

अथ रक्तपुष्पा पुनर्नवा, तस्या नामगुणानाह—

पुनर्नवाऽपरा रक्ता रक्तपुष्पा शिलाटिका । शोथघ्नी क्षुद्रवर्षाभूर्वर्षकेतुः कठिल्लकः ॥२३१ ॥

पुनर्नवाऽरुणा तिक्ता कटुपाका हिमा लघुः । वातला ग्राहिणी श्लेष्मपित्तरक्तविनाशिनी॥२३२॥

अथ गन्धप्रसारणी ( पसरन ) तस्या नामानि गुणांश्चाह—

प्रसारणी राजबला भद्रपर्णी प्रतानिनी । सरणी सारणी भद्रा बला चापि कटम्भरा ॥ २३३ ॥

प्रसारणी गुरुर्वृष्या बलसन्धानकृत्सरा । वीर्योष्णा वातहृत्तिक्ता वातरक्तकफापहा ॥ २३४ ॥

अथ कृष्णशारिवा ( करिआवांसा ) तस्या नामान्याह—

कृष्णा तु शारिवा श्यामा गोपी गोपवधूश्च सा ॥ २३५ ॥

* इयं जम्बूवत्पत्रा सुगन्धा 'कलघण्टिके' ति प्रसिद्धा । गोपी-गोपस्य स्त्री पुंयोगान्ङीप् २३१

अथ श्वेतशारिवा, तस्या नामान्याह—

धवलाशारिवा गोपा गोपकन्या कृशोदरी।स्फोता श्यामा गोपवल्ली लताऽस्फोता च चन्दना ॥

* इयमपि जम्बूवत् पत्रा दुग्धगर्भा प्रततिर्भवति । गोपा=गां पातीति गोपा, गोपकन्या ।

श्यामापदेन कृष्णा श्वेताऽपि शारिवा कथ्यते, वास्तवेन शारिवामात्रे शारिवापदस्य

प्रयुक्तत्वात् । तद्यथा—

"सारिवायां निशि श्यामाश्यामौ च हरितासितौ" इति ॥ २३६ ॥

अथ सारिवाद्वयस्य गुणानाह—

सारिवा युगलं स्वादु स्निग्धं शुक्रकरं गुरु । अग्निमान्द्यारुचिश्वासकासामविषनाशनम् ॥
दोषत्रयास्रप्रदरज्वरातीसारनाशनम् ॥ २३७ ॥

अथ भृङ्गराजः ( भाँगरा ) तस्य नामानि गुणांश्चाह—

भृङ्गराजो भृङ्गरजो मार्कवो भृङ्ग एव च । अङ्गारकः केशराजो भृङ्गारः केशरञ्जनः ॥ २३८ ॥
भृङ्गारः कटुकस्तीक्ष्णो रूक्षोष्णः कफवातनुत् ॥ २३९ ॥
केश्यस्त्वच्यः कृमिश्वासकासशोथामपाण्डुनुत् । दन्त्यो रसायनो बल्यः कुष्ठनेत्रशिरोऽर्त्तिनुत् २४०

अथ शणपुष्पी ( पटसन ) तस्या नामानि गुणांश्चाह—

शणपुष्पी स्मृता घण्टा शणपुष्पसमाकृतिः । शणपुष्पी कटुस्तिक्ता वामिनी कफपित्तजित् २४१

अथ त्रायमाणा, तस्या नामानि गुणांश्चाह—

बलभद्रा त्रायमाणा त्रायन्ती गिरिजाऽनुजा । त्रायन्ती तुवरा तिक्ता सरा पित्तकफापहा ।
ज्वरहृद्रोगगुल्मार्शोभ्रमशूलविषप्रणुत् ॥ २४२ ॥

अथ मूर्वा ( चुरनहार ) तस्या नामानि गुणांश्चाह—

मूर्वा मधुरसा देवी मोरटा तेजनी स्रुवा । मधूलिका मधुश्रेणी गोकर्णी पीलुपर्ण्यपि ॥ २४३ ॥
मूर्वा सरा गुरुः स्वादुस्तिक्ता पित्तास्रमेहनुत् । त्रिदोषतृष्णाहृद्रोगकण्डूकुष्ठज्वरापहा ॥२४४॥

अथ काकमाची ( मकोय ) तस्या नामानि गुणांश्चाह—

काकमाची ध्वांक्षमाची काकाह्वा चैव वायसी । काकमाची त्रिदोषघ्नी स्निग्धोष्णा स्वरशुक्रदा२४५
तिक्ता रसायनी शोथकुष्ठार्शोज्वरमेहजित् । कटुर्नेत्रहिता हिक्काच्छर्दिहृद्रोगनाशिनी ॥ २४६ ॥

अथ काकनासा ( कौआठोडी ) तस्या नामगुणानाह—

काकनासा तु काकाङ्गी काकतुण्डफला च सा ॥ २४७ ॥
काकनासा कषायोष्णा कटुका रसपाकयोः । कफघ्नी वामनी तिक्ता शोथार्शःश्वित्रकुष्ठहृत् २४८

अथ काकजङ्घा "मसी"ति लोके, तस्या नामानि गुणांश्चाह—

काकजङ्घा नदीकान्ता काकतिक्ता सुलोमशा । पारावतपदी दासी काका चापि प्रकीर्त्तिता२४९
काकजङ्घा हिमा तिक्ता कषायाकफपित्तजित् । निहन्ति ज्वरपित्तास्रज्वरकण्डूविषक्रिमीन् २५०

अथ नागपुष्पी, तस्या नामानि गुणांश्चाह—

नागपुष्पी श्वेतपुष्पा नागिनी रामदूतिका । नागिनी रोचनी तिक्ता तीक्ष्णोष्णा कफपित्तनुत् ॥
विनिहन्ति विषं शूलं योनिदोषवमिक्रिमीन् ॥ २५१ ॥

अथ मेषशृङ्गी ( मेढासिङ्गी ), तस्या नामानि तत्फलस्य च गुणांश्चाह—

मेषशृङ्गी विषाणी स्यान्मेषवल्ल्यजशृङ्गिका । मेषशृङ्गी रसे तिक्ता वातला श्वासकासहृत्२५२
रूक्षा पाके कटुः पित्तव्रणश्लेष्माक्षिशूलनुत् ॥ २५३ ॥
मेषशृङ्गीफलं तिक्तं कुष्ठमेहकफप्रणुत् । दीपनं स्रंसनं कासकृमिव्रणविषापहम् ॥ २५४ ॥

अथ हंसपदी ( हंसराज ) तस्या नामानि गुणांश्चाह—

हंसपादी हंसपदी कीटमाता त्रिपादिका । हंसपादी गुरुः शीता हन्ति रक्तविषव्रणान् ॥
विसर्पदाहातीसारलूताभूताग्निरोहिणीः ॥ २५७ ॥

अथ सोमलता, तस्या नामगुणानाह—

सोमवल्ली सोमलता सोमक्षीरी द्विजप्रिया । सोमवल्ली त्रिदोषघ्नी कटुस्तिक्ता रसायनी२५६

अथाकाशवल्ली ( अमरवेल ) तस्या नामानि गुणांश्चाह—

आकाशवल्ली तु बुधैः कथिताऽमरवल्लरी ॥ २५८ ॥
अवल्ली ग्राहिणी तिक्ता पिच्छिलाऽक्ष्यामयापहा । तुवराऽग्निकृती हृद्या पित्तश्लेष्मामनाशिनी॥

अथ पातालगरुडी, तस्या नामगुणानाह—

छिलिहिण्टो महामूलः पातालगरुडाह्वयः । छिलिहिण्टः परं वृष्यः कफघ्नः पवनापहः ॥२५९॥

अथ वन्दा, तस्या नामानि गुणांश्चाह—

वन्दा वृक्षादनी वृक्षभक्ष्या वृक्षरुहाऽपि च । वन्दाकः स्याद्धिमस्तिक्तः कषायो मधुरो रसे ॥
मङ्गल्यः कफवातास्त्ररक्षोव्रणविषापहः ॥ २६० ॥

अथ वटपत्री, तस्या नामगुणानाह—

वटपत्री तु कथिता मोहिन्यैरावतीबुधैः । वटपत्री कषायोष्णा योनिमूत्रगदापहा ॥ २६१ ॥

अथ हिङ्गुपत्री, तस्या नामानि गुणांश्चाह—

हिङ्गुपत्री तु कवरी पृथ्वीका पृथुका पृथुः ॥ २६२ ॥
हिङ्गुपत्री भवेद्रुच्या तीक्ष्णोष्णा पाचनी कटुः । हृद्वस्तिरुग्विबन्धार्शःश्लेष्मगुल्मानिलापहा२६३

अथ वंशपत्री, तस्या नामानि गुणांश्चाह—

वंशपत्री वेणुपत्री पिण्डा हिङ्गुशिवाटिका । हिङ्गुपत्रीगुणा विज्ञैर्वंशपत्री च कीर्त्तिता ॥ २६४ ॥

अथ मत्स्याक्षी 'मछेछी' इति लोके, तस्या नामानि गुणांश्चाह—

मत्स्याक्षी बाह्लिका मत्स्यगन्धा मत्स्यादनीति च ।
मत्स्याक्षी ग्राहिणीशीता कुष्ठपित्तकफास्त्रजित् । लघुस्तिक्ता कषाया च स्वाद्वीकटुविपाकिनी२६५

अथ सर्पाक्षी "सरहटी-गण्डिनी"ति च, तस्या नामानि गुणांश्चाह—

सर्पाक्षी स्यात्तु गण्डाली तथा नाडीकपालकः । ॥ २६६ ॥
सर्पाक्षी कटुका तिक्ता सोष्णा कृमिनिकृन्तनी । वृश्चिकाखुरसर्पाणां विषघ्नी व्रणरोपिणी २६७

अथ शङ्खपुष्पी, तस्या नामानि गुणांश्चाह—

शङ्खपुष्पी तु शङ्खाह्वा मङ्गल्यकुसुमाऽपि च । शङ्खपुष्पी सरा मेध्या वृष्या मानसरोगहृत् २६८
रसायनीकषायोष्णा स्मृतिकान्तिबलाग्निदा । दोषापस्मारभूताश्रीकुष्ठक्रिमिविषप्रणुत्॥२६९॥

अथार्कपुष्पी, तस्या नामगुणानाह—

अर्कपुष्पी क्रूरकर्मा पयस्या जलकामुका । अर्कपुष्पी कृमिश्लेष्ममेहपित्तविकारजित् ॥ २७० ॥

अथ लज्जालुः, तस्या नामानि गुणांश्चाह—

लज्जालुः स्याच्छमीपत्रा समङ्गा जलकारिका । रक्तपादी नमस्कारी नाम्ना खदिरकेत्यपि॥२७१॥

लज्जालुः शीतला तिक्ता कषाया कफपित्तजित्। रक्तपित्तमतीसारं योनिरोगान् विनाशयेत् २७७

अथालम्बुषा ( लज्जालुभेदः ), तस्या नामगुणानाह—

अलम्बुषा खरत्वक् च तथा मेदोगला स्मृता। अलम्बुषा लघुःस्वादुःक्रिमिपित्तकफापहा ॥२७३॥

अथ दुग्धिका ( दुद्धी ), तस्या नामानि गुणांश्चाह—

दुग्धिका स्वादुपर्णी स्यात्क्षीरा विक्षीरिणी तथा। दुग्धिकोष्णागुरू रूक्षा वातला गर्भकारिणी स्वादुक्षीरा कटुस्तिक्ता सृष्टमूत्रमलापहा। स्वदुविष्टम्भिनी वृष्या कफकुष्ठक्रिमिप्रणुत् ॥२७५॥

अथ भूम्यामलकी ( भुँइआमला ) तस्या नामगुणानाह—

भूम्यामलकिका प्रोक्ता शिवा तामलकीति च। बहुपत्रा बहुफला बहुवीर्या जटाऽपि च ॥ २७६ ॥
भूधात्री वातकृत्तिक्ता कषाया मधुरा हिमा। पिपासाकासपित्तास्रकफकण्डूक्षतापहा ॥ २७७ ॥

अथ ब्राह्मी ब्रह्ममाण्डूकी च, ( बरम्भी-मण्डूकपर्णिनी च ), तयोर्नामानि गुणांश्चाह—

ब्राह्मी कपोतवङ्का च सोमवल्ली सरस्वती। मण्डूकपर्णी माण्डूकी त्वाष्ट्री दिव्या महौषधी२७८
ब्राह्मी हिमा सरा तिक्ता लघुर्मेध्या च शीतला। कषाया मधुरा स्वादुपाकाऽऽयुष्या रसायनी स्वर्या स्मृतिप्रदा कुष्ठपाण्डुमेहास्रकासजित्। विषशोथज्वरहरी तद्वन्मण्डूकपर्णिनी ॥ २८० ॥

अथ द्रोणा ( गूमा ) तस्या नामगुणानाह—

द्रोणा च द्रोणपुष्पी च फलेपुष्पा च कीर्त्तिता। द्रोणपुष्पी गुरुः स्वादू रूक्षोष्णा वातपित्तकृत् सतीक्ष्णलवणा स्वादुपाका कट्वी च भेदिनी। कफामकामलाशोथतमकश्वासजन्तुजित् ॥२८२॥

अथ सुवर्चला हुरहुर-द्वितीय हुरहुर तयोर्नामगुणानाह—

सुवर्चला सूर्यभक्ता वरदा बदराऽपि च। सूर्यावर्त्ता रविप्रीताऽपरा ब्रह्मसुवर्चला ॥ २८३ ॥
सुवर्चला हिमा रूक्षा स्वादुपाका सरा गुरुः। अपित्तला कटुः क्षारा विष्टम्भकफवातजित् ॥२८४॥
अन्या तिक्ता कषायोष्णा सरा रूक्षा लघुः कटुः। निहन्ति कफपित्तास्रश्वासकासारुचिज्वरान्।
विस्फोटकुष्ठमेहास्रयोनिरुक्क्रिमिपाण्डुताः ॥ २८५ ॥

अथ वन्ध्याकर्कोटकी ( वनककोडा ) तस्या नामानि गुणांश्चाह—

वन्ध्याकर्कोटकी देवी कन्या योगीश्वरीति च। नागारिर्नक्रदमनी विषकण्टकिनी तथा ॥२८६॥
वन्ध्याकर्कोटकी लघ्वी कफनुद् व्रणशोधिनी। सर्पदर्पहरी तीक्ष्णा विसर्पविषहारिणी ॥२८७॥

अथ मार्कण्डिका ( भूइँखखसा ), वल्ली भूमिप्रसरणशीला, तस्या नामगुणानाह—

मार्कण्डिका भूमिवल्ली मार्कण्डी मृदुरेचनी ॥ २८८ ॥
मार्कण्डिका कुष्ठहरी ऊर्ध्वाधःकायशोधिनी। विषदुर्गन्धकासघ्नी गुल्मोदरविनाशिनी ॥२८९॥

अथ देवदाली पीतदेवदाली च ( घवरबेल-सोनैआ ) खखसावत्फलप्रततिः, तयोर्नामानि गुणांश्चाह—

देवदाली तु वेणी स्यात्कर्कटी च गरागरी। देवताडो वृत्तकोशस्तथा जीमूत इत्यपि ॥२९०॥
पीता परा खरस्पर्शा विषघ्नी गरनाशिनी। देवदाली रसे तिक्ता कफार्शः शोफपाण्डुताः।
नाशयेद्वामनी तीक्ष्णा क्षयहिक्काक्रिमिज्वरान् ॥ २९१ ॥

अथ तत्फलगुणानाह—

देवदालीफलं तिक्तं कृमिश्लेष्मविनाशनम्। वमनं गुल्मशूलघ्नमर्शोघ्नं वातजित्परम् ॥२९२॥

अथ जलपिप्पली ( पनिसगा ) इति लोके, तस्या नामानि गुणांश्चाह—

जलपिप्पल्यभिहिता शारदी शकुलादनी। मत्स्यादनी मत्स्यगन्धा लाङ्गल्यपि कीर्त्तिता २९३

जलपिप्पलिका हृद्या चक्षुष्या शुक्रला लघुः ॥ २९४ ॥

संग्राहिणी हिमा रूक्षा रक्तदाहव्रणापहा। कटुपाकरसा रुच्या कषाया वह्निवर्द्धिनी ॥२९५॥

अथ गोजिह्वा ( गोभी ), तस्या नामानि गुणांश्चाह

गोजिह्वा गोजिका गोभी दार्विका खरपर्णिनी। गोजिह्वा वातला शीता ग्राहिणी कफपित्तनुत् २९६

हृद्या प्रमेहकासास्रव्रणज्वरहरी लघुः। कोमला तुवरा तिक्ता स्वादुपाकरसा स्मृता ॥ २९७ ॥

अथ नागदमनी ( नागदौन ) तस्या नामगुणानाह—

विज्ञेया नागदमनी बलामोटा विषापहा। नागपुष्पी नागपत्रा महायोगेश्वरीति च ॥ २९८ ॥

बलामोटा कटुस्तिक्ता लघुः पित्तकफापहा मूत्रकृच्छ्रव्रणान् रक्षो नाशयेज्जालगर्दभम् ॥२९९॥

सर्वग्रहप्रशमनी निःशेषविषनाशिनी। जयं सर्वत्र कुरुते धनदा सुमतिप्रदा ॥ ३०० ॥

अथ वीरतरुः ( वरवेल ) तस्य नामानि गुणांश्चाह—

वेल्लन्तरो जगति वीरतरुः प्रसिद्धः श्वेतासिताऽरुणविको हरितनीलपुष्पः।

स्याज्जातितुल्यकुसुमः शमिसूक्ष्मपत्रः स्यात्कण्टकी विजकदम्बक एव वृक्षः ॥ ३०१ ॥

वेल्लन्तरो रसे पाके तिक्तस्तृष्णाकफापहः। मूत्राघाताश्मजिद् ग्राही योनिमूत्रानिलार्त्तिजित् ३०२

अथ छिक्कनी ( नकछिकनी ) तस्या नामगुणानाह—

छिक्कनी क्षवकृत्तीक्ष्णा छिक्किका घ्राणदुःखदा। छिक्कनी कटुका रुच्या तीक्ष्णोष्णा वह्निपित्तकृत्।

वातरक्तहरी कुष्ठक्रिमिवातकफापहा ॥ ३०३ ॥

अथ कुकुन्दरः ( कुकुरवँदा ) तस्य नामानि गुणांश्चाह—

कुकुन्दरस्ताम्रचूडः सूक्ष्मपत्रो मृदुच्छदः ॥ ३०४ ॥

कुकुन्दरः कटुस्तिक्तो ज्वररक्तकफापहः। तन्मूलमार्द्रं निक्षिप्तं वदने मुखशोषहृत् ॥ ३०५ ॥

अथ सुदर्शना, तस्या नामगुणानाह—

सुदर्शना सोमवल्ली चक्राह्वा मधुपर्णिका। सुदर्शना स्वादुरुष्णा कफशोफास्रवातजित् ॥३०६॥

अथाखुकर्णी ( मूसाकर्णी ) तस्या नामानि गुणांश्चाह—

आखुकर्णी त्वाखुपर्णी पर्णिका भूदरीभवा। आखुकर्णी कटुस्तिक्ता कषाया शीतला लघुः।

विपाके कटुका मूत्रकफामयकृमिप्रणुत् ॥ ३०७ ॥

अथ मयूरशिखा ( मोरशिखा ) तस्या नामगुणानाह—

मयूराह्वशिखा प्रोक्ता सहस्राहिर्मधुच्छदा। नीलकण्ठशिखा लघ्वी पित्तश्लेष्मातिसारजित् ३०८

इति श्रीमिश्रलटकनतनयश्रीमिश्रभावविरचिते भावप्रकाशे पूर्वखण्डे वर्गप्रकरणे चतुर्थो गुडूच्यादिवर्गः समाप्तः ॥ ४ ॥



## अथ पुष्पवर्गः पञ्चमः ॥ ५ ॥

तत्रादौ कमलम् , तस्य नामानि गुणाँश्चाह—

वा पुंसि पद्मं नलिनमरविन्दं महोत्पलम् । सहस्रपत्रं कमलं शतपत्रं कुशेशयम् ॥ १ ॥
पङ्केरुहं तामरसं सारसं सरसीरुहम् । बिसप्रसूनराजीवपुष्कराम्भोरुहाणि च ॥ २ ॥
कमलं शीतलं वर्ण्यं मधुरं कफपित्तजित् । तृष्णादाहास्रविस्फोटविषवीसर्पनाशनम् ॥३॥

अथ नामोल्लेखपूर्वकं कमलभेदांस्तद् गुणांश्चाह—

विशेषतः सितं पद्मं पुण्डरीकमिति स्मृतम् । रक्तं कोकनदं ज्ञेयं नीलमिन्दीवरं स्मृतम् ॥४॥
धवलं कमलं शीतं मधुरं कफपित्तजित् । तस्मादल्पगुणं किञ्चिदन्यद्रक्तोत्पलादिकम् ॥ ५ ॥

अथ पद्मिनी, तस्या लक्षणनामगुणानाह—

मूलनालदलोत्फुल्लफलैः समुदिता पुनः । पद्मिनी प्रोच्यते प्राज्ञैर्बिसिन्यादि च सा स्मृता ॥६॥
*आदिशब्दान्नलिनी कमलिनीत्यादि ॥ ६ ॥
पद्मिनी शीतला गुर्वी मधुरा लवणा च सा । पित्तासृक्कफनुद्रूक्षा वातविष्टम्भकारिणी ॥ ७ ॥

अथ नवपत्रादि तस्य नामानि गुणाँश्चाह—

संवर्त्तिका नवदलं बीजकोशस्तु कर्णिका । किञ्जल्कः केशरः प्रोक्तो मकरन्दो रसः स्मृतः ॥८॥
पद्मनालं मृणालं स्यात्तथा बिसमिति स्मृतम् ॥ ८ ॥

अथ संवर्त्तिका ( नये पत्ते ) तस्या गुणानाह—

संवर्त्तिका हिमा तिक्ता कषाया दाहतृट्प्रणुत् । मूत्रकृच्छ्रगुदव्याधिरक्तपित्तविनाशिनी ॥ ९ ॥

अथ कर्णिका, तस्या गुणानाह—

पद्मस्य कर्णिका तिक्ता कषाया मधुरा हिमा । मुखवैशद्यकृल्लघ्वी तृष्णाऽस्रकफपित्तनुत् ॥ १० ॥

अथ किञ्जल्क ( केशर ), तस्य गुणानाह—

किञ्जल्कः शीतलो वृष्यः कषायो ग्राहकोऽपि सः । कफपित्ततृषादाहरक्तार्शोविषशोथजित् ॥ ११ ॥

अथ मृणालं शालूकञ्च, तयोर्गुणानाह—

मृणालं शीतलं वृष्यं पित्तदाहास्रजिद् गुरु ॥ १२ ॥
दुर्जरं स्वादु पाकञ्च स्तन्यानिलकफप्रदम् । संग्राहि मधुरं रूक्षं शालूकमपि तद्गुणम् ॥ १३ ॥

अथ स्थलकमलम् , तस्य नामगुणानाह—

पद्मचारिण्यतिचराऽव्यथा पद्मा च शारदा । पद्माऽनुष्णा कटुस्तिक्ता कषाया कफवातजित् ॥
मूत्रकृच्छ्राश्मशूलघ्नी श्वासकासविषापहा ॥ १४ ॥

अथ कुमुदम् "कमोदनी" इति लोके, तस्य नामानि गुणाँश्चाह—

श्वेतं कुवलयं प्रोक्तं कुमुदं कैरवं तथा । कुमुदं पिच्छिलं स्निग्धं मधुरं ह्लादि शीतलम् ॥१५॥

अथ कुमुदिनी, तस्या नामगुणानाह—

कुमुद्वती कैरविका तथा कुमुदिनीति च ॥ १६ ॥
तु मूलादिसर्वाङ्गरक्ता समुदिता बुधैः । पद्मिन्या ये गुणाः प्रोक्ता कुमुदिन्याश्च ते स्मृताः १७

अथ कह्लारम्, तन्नामगुणानाह—

सौगन्धिकंतुकह्लारंहल्लकंरक्तसन्ध्यकम् । कल्हारं शीतलं ग्राहिविष्टम्भि गुरु रूक्षणम् ॥१८॥

अथ वारिपर्णी शैवालश्च ( जलकुम्भी-सिवार ) तयोर्नामानि गुणांश्चाह—

वारिपर्णी कुम्भिका स्याद्वारिमूली खमूलिका । शैवालं जलनीली स्याच्छैवलं जलजश्चतत्॥१९॥

वारिपर्णी हिमा तिक्ता लघ्वी स्वाद्वीसराकटुः । दोषत्रयहरी रूक्षा शोणितज्वरशोषकृत् ॥

शैवालं तुवरं तिक्तं मधुरं शीतलं लघु । स्निग्धं दाहतृषापित्तरक्तज्वरहरं परम् ॥ २० ॥

अथ शतपत्री ( सेवती गुलाब ) तस्या नामानि गुणांश्चाह—

शतपत्री तरुण्युक्ता कर्णिका चारुकेशरा । महाकुमारी गन्धाढ्या लाक्षापुष्पाऽतिमञ्जुला॥२१॥

शतपत्री हिमा हृद्या ग्राहिणी शुक्रला लघुः । दोषत्रयास्रजिद्वर्ण्या कटुवी तिक्ताच पाचनी॥२२॥

अथ वासन्ती ( नेवारी ) तस्या नामानि गुणांश्चाह—

नेपाली कथिता तज्ज्ञैःसप्तला नवमालिका । वासन्ती शीतला लघ्वी तिक्ता दोषत्रयास्रजित्२३

अथ वार्षिकी ( बेला ) तस्या नामानि गुणांश्चाह—

श्रीपदी षट्पदानन्दा वार्षिकी मुक्तबन्धना ॥ २४ ॥

वार्षिकी शीतला लघ्वी तिक्ता दोषत्रयापहा । कर्णाक्षिमुखरोगघ्नीतत्तैलं तद्गुणं स्मृतम्॥२५॥

अथ मालती स्वर्णजाती च ( जाई-पीलीजाई ) तयोर्नामानि गुणांश्चाह—

जातीर्जाती च सुमना मालती राजपुत्रिका । चेतिका हृद्यगन्धा च सा पीता स्वर्णजातिका २६

जातीयुगं तिक्तमुष्णं तुवरं लघु दोषजित् । शिरोऽक्षिमुखदन्तार्तिविषकुष्ठानिलास्रजित्॥२७॥

अथ यूथिका पीतयूथिका च ( जुही-सुवर्ण जूही ), तयोर्नामानि गुणांश्चाह—

यूथिका गणिकाऽम्बष्ठा सा पीता हेमपुष्पिका । यूथीयुगं हिमं तिक्तं कटु पाकरसं लघु ॥२८॥

मधुरं तुवरं हृद्यं पित्तघ्नं कफवातलम् । व्रणास्रमुखदन्ताक्षिशिरोरोगविषापहम् ॥ २९ ॥

अथ चम्पकः ( चम्पा ) तस्य नामगुणानाह—

चाम्पेयश्चम्पकः प्रोक्तो हेमपुष्पश्च स स्मृतः । एतस्य कलिका गन्धफलीति कथिता बुधैः॥३०॥

चम्पकः कटुकस्तिक्तः कषायो मधुरो हिमः । विषक्रिमिहरः कृच्छ्रकफवातास्रपित्तजित् ॥३१॥

अथ बकुलः 'मौलसिरी' इति लोके, तस्य नामानि गुणांश्चाह—

बकुलो मधुगन्धश्च सिंहकेसरकस्तथा । बकुलस्तुवरोऽनुष्णः कटुपाकरसो गुरुः ॥

कफपित्तविषश्वित्रक्रिमिदन्तगदापहः ॥ ३२ ॥

अथबृहद्बकुलः ( बड़ी मौलसिरी ) तस्य नामगुणानाह—

शिवमल्ली पाशुपत एकाष्ठीला बको वसुः ॥ ३३ ॥

बकोऽनुष्णः कटुस्तिक्तः कफपित्तविषापहः । योनिशूलतृषादाहकुष्ठशोथास्रनाशनः ॥ ३४ ॥

अथ कदम्बः, तस्य नामानि गुणांश्चाह —

कदम्बः प्रियको नीपो वृत्तपुष्पो हलिप्रियः । कदम्बो मधुरः शीतः कषायो लवणो गुरुः ॥

सरो विष्टम्भकृद्रूक्षः कफस्तन्यानिलप्रदः ॥ ३५ ॥

अथ कुब्जकः ( कूजा ), तस्य नामानि गुणांश्चाह—

कुब्जको भद्रतरुणी बृहत्पुष्पोऽतिकेसरः । महासहा कण्टकाढ्या नीलाऽलिकुलसंकुला ॥३६॥
कुब्जकः सुरभिः स्वादुः कषायानुरसः सरः । त्रिदोषशमनो वृष्यः शीतहर्त्ता च स स्मृतः ॥३७॥

अथ मल्लिका, तस्या नामानि गुणांश्चाह—

मल्लिका मदयन्ती च शीतभीरुश्च भूपदी ॥ ३८ ॥
मल्लिकोष्णा लघुर्वृष्या तिक्ता च कटुका हरेत् । वातपित्तास्यदृग्व्याधिकुष्ठारुचिविषव्रणान् ॥३९॥

अथ माधवी ( वासन्ती ) तस्या नामानि गुणांश्चाह—

माधवी स्यात्तु वासन्ती पुण्ड्रको मण्डकोऽपि च । अतिमुक्तो विमुक्तश्च कामुको भ्रमरोत्सवः ॥
माधवी मधुरा शीता लघ्वी दोषत्रयापहा ॥ ४० ॥

अथ केतकः सुवर्णकेतकी च ( केवडा पीला केवड़ा ) तयोर्नामानि गुणांश्चाह—

केतकः सूचिकापुष्पो जम्बुकः क्रकचच्छदः । सुवर्णकेतकी त्वन्या लघुपुष्पा सुगन्धिनी ॥४१॥
केतकः कटुकः स्वादुर्लघुस्तिक्तः कफापहः । उष्णा तिक्तरसा ज्ञेया चक्षुष्या हेमकेतकी ॥४२॥

अथ किङ्किरातः ( गौडादौ प्रसिद्धः ) तस्य नामानि गुणांश्चाह—

किङ्किरातो हेमगौरः पीतकः पीतभद्रकः ॥ ४३ ॥
किङ्किरातो हिमस्तिक्तः कषायश्च हरेदसौ । कफपित्तपिपासाऽस्रदाहशोषवमिक्रिमीन् ॥४४॥

अथ कर्णिकारः 'पांगरा' इति महाराष्ट्रे प्रसिद्धः, तस्य नामानि गुणांश्चाह—

कर्णिकारः परिव्याधः पादपोत्पल इत्यपि । कर्णिकारः कटुस्तिक्तस्तुवरः शोधनो लघुः ।
रञ्जनः सुखदः शोथश्लेष्मास्रव्रणकुष्ठजित् ॥ ४५ ॥

अथाशोकः ( असोगि ) तस्य नामानि गुणांश्चाह—

अशोको हेमपुष्पश्च वञ्जुलस्ताम्रपल्लवः । कङ्केलिः पिण्डपुष्पश्च गन्धपुष्पो नटस्तथा ॥ ४६ ॥
अशोकः शीतलस्तिक्तो ग्राही वर्ण्यः कषायकः । दोषापचीतृषादाहकृमिशोषविषास्रजित् ४७

अथाम्लाटनः 'बाणपुष्प' इति गौडादौ प्रसिद्धः, तस्य नामानि गुणांश्चाह—

अम्लातोऽम्लाटनः प्रोक्तस्तथाऽम्लातक इत्यपि ॥ ४८ ॥
कुरण्टको वर्णपुष्पः स एवोक्तो महासहः । अम्लाटनः कषायोष्णः स्निग्धः स्वादुश्च तिक्तकः ॥४९॥

अथ सैरेयकः ( कटसरैया ) तस्य नामानि भेदान् गुणांश्चाह—

सैरेयकः श्वेतपुष्पः सैरेयः कटसारिका । सहाचरः सहचरः स च भिन्द्यपि कथ्यते ॥ ५० ॥
कुरण्टकोऽत्र पीते स्याद्रक्ते कुरबकः स्मृतः । नीले बाणा द्वयोरुक्तो दासी आर्त्तगलश्च सः ॥५१॥
सैरेयः कुष्ठवातास्रकफकण्डूविषापहः । तिक्तोष्णो मधुरोऽनम्लः सुस्निग्धः केशरञ्जनः ॥ ५२ ॥

अथ कुन्दम्, तस्य नामानि गुणांश्चाह—

कुन्दं तु कथितं माध्यं सदापुष्पञ्च तत्स्मृतम् । कुन्दं शीतं लघु श्लेष्मशिरोरुग्विषपित्तहृत् ५३

अथ मुचुकुन्दः ( नाम्नैव प्रसिद्धः ) तस्य नामानि गुणांश्चाह—

मुचुकुन्दः क्षत्रवृक्षश्चित्रकः प्रतिविष्णुकः । मुचुकुन्दः शिरःपीडापित्तास्रविषनाशनः ॥ ५४ ॥

अथ तिलकः ( तिलाभपुष्पस्तिलकनाम्नैव प्रसिद्धः ) तस्य नामानि गुणांश्चाह—

तिलकः क्षुरकः श्रीमान्पुरुषविशेषपुष्पकः । तिलकः कटुकः पाके रसे चोष्णो रसायनः ॥
कफकुष्ठक्रिमीन्वस्तिमुखदन्तगदान्हरेत् ॥ ५५ ॥

अथ बन्धुजीवः ( गोजुनिया ) तस्य नामानि गुणांश्चाह—

बन्धूको बन्धुजीवश्च रक्तो मध्याह्निकोऽपि च । बन्धूकः कफकृद्ग्राही वातपित्तहरो लघुः ॥५६॥

अथ जपापुष्पम् ( गुड़हर, अड़ौल ) तस्य नामानि गुणांश्चाह—

ओड्रपुष्पं जपा चाथ त्रिसन्ध्या साऽरुणा सिता । जपा संग्राहिणी केश्या त्रिसन्ध्या कफवातजित् ॥५७॥

अथ सिन्दूरी ( सेन्दुरिया ) तस्या नामानि गुणांश्चाह—

सिन्दूरी रक्तबीजा च रक्तपुष्पा सुकोमला । सिन्दूरी विषपित्तास्रतृष्णावान्तिहरी हिमा ॥५८॥

अथ मुनिवृक्षः ( अगस्तिया ) तस्य नामानि गुणांश्चाह—

अथागस्त्यो वङ्गसेनो मुनिपुष्पो मुनिद्रुमः ॥ ५९ ॥
अगस्तिः पित्तकफजिच्चातुर्थिकहरो हिमः । रूक्षो वातकरस्तिक्तः प्रतिश्यायनिवारणः ॥६०॥

अथ तुलसी शुक्ला कृष्णा च तयोर्नामगुणानाह—

तुलसी सुरसा ग्राम्या सुलभा बहुमञ्जरी । अपेतराक्षसी गौरी भूतघ्नी देवदुन्दुभिः ॥ ६१ ॥
तुलसी कटुका तिक्ता हृद्योष्णा दाहपित्तकृत् । दीपनी कुष्ठकृच्छ्रास्रपार्श्वरुक्कफवातजित् ।
शुक्ला कृष्णा च तुलसी गुणैस्तुल्या प्रकीर्तिता ॥ ६२ ॥

अथ मरुवकः ( मरुवा ) तस्य नामानि गुणांश्चाह—

मारुतोऽसौ मरुबको मरुन्मरुरपि स्मृतः । फणी फणिज्जकश्चापि प्रस्थपुष्पः समीरणः ॥६३॥
मरुदग्निप्रदो हृद्यस्तीक्ष्णोष्णः पित्तलो लघुः ॥ ६४ ॥
वृश्चिकादिविषश्लेष्मवातकुष्ठक्रिमिप्रणुत । कटुपाकरसो रुच्यस्तिक्तो रूक्षः सुगन्धिकः ॥६५॥

अथ दमनकः ( दवना ) तस्य नामानि गुणांश्चाह—

उक्तो दमनको दान्तो मुनिपुत्रस्तपोधनः । गन्धोत्कटो ब्रह्मजटो विनीतः कलपत्रकः ॥६६॥
दमनस्तुवरस्तिक्तो हृद्यो वृष्यः सुगन्धिकः । ग्रहणाद् विषकुष्ठास्रक्लेदकण्डूत्रिदोषजित् ॥ ६७ ॥

अथ बर्बरी ( वनतुलसी ) तस्या भेदसहितं नामानि गुणांश्चाह—

बर्बरी तुवरी तुङ्गी खरपुष्पाऽजगन्धिका । पर्णासस्तत्र कृष्णे तु कठिल्लककुठेरकौ ॥ ६८ ॥
तत्र शुक्लेऽर्जकः प्रोक्तो वटपत्रस्ततोऽपरः । बर्बरीत्रितयं रूक्षं शीतं कटु विदाहि च ॥ ६९ ॥
तीक्ष्णं रुचिकरं हृद्यं दीपनं लघुपाकि च । पित्तलं कफवातास्रकण्डूक्रिमिविषापहम् ॥ ७० ॥

इति श्रीमिश्रलटकनतनयश्रीमिश्रभावविरचिते भावप्रकाशे वर्गप्रकरणे पञ्चमः
पुष्पादिवर्गः समाप्तः ॥ ५ ॥

## अथ वटादिवर्गः षष्ठः ६ ।

तत्रादौ वटः, तस्य नामानि गुणांश्चाह—

वटो रक्तफलः शृङ्गी न्यग्रोधः स्कन्धजो ध्रुवः । क्षीरी वैश्रवणो वासो बहुपादो वनस्पतिः ॥१॥

वटः शीतो गुरुर्ग्राही कफपित्तव्रणापहः । वर्ण्यो विसर्पदाहघ्नः कषायो योनिदोषहृत् ॥ २ ॥

अथ पिप्पलः ( पीपल ) तस्य नामानि गुणांश्चाह—

बोधिद्रुः पिप्पलोऽश्वत्थश्चलपत्रो गजाशनः । पिप्पलो दुर्जरः शीतः पित्तश्लेष्मव्रणास्रजित् ।
गुरुस्तुवरको रूक्षो वर्ण्यो योनिविशोधनः ॥ ३ ॥

अथ पिप्पलभेदः 'गजदण्डसहोरा' इति लोके, तस्य नामानि गुणांश्चाह—

पारीषोऽन्यः पलाशश्च कपिचूतः कमण्डलुः । गर्दभाण्डः कन्दरालः कपीतनसुपार्श्वकौ ॥ ४ ॥
पारीषो दुर्जरः स्निग्धः कृमिशुक्रकफप्रदः । फलेऽम्लो मधुरो मूले कषायस्वादुमज्जकः ॥ ५ ॥

अथ नन्दीवृक्षः ( बेलिया पीपरा ) तस्य नामगुणानाह—

नन्दीवृक्षोऽश्वत्थभेदः प्ररोही गजपादपः । स्थालीवृक्षः क्षयतरुः क्षीरी च स्याद् वनस्पतिः॥६॥
नन्दीवृक्षो लघुः स्वादुस्तिक्तस्तुवर उष्णकः । कटुपाकरसो ग्राही विषपित्तकफास्रजित् ॥७॥

अथोदुम्बरः ( गूलर ) तस्य नामानि गुणांश्चाह—

उदुम्बरो जन्तुफलो यज्ञाङ्गो हेमदुग्धकः ॥ ८ ॥
उदुम्बरो हिमो रूक्षो गुरुः पित्तकफास्रजित् । मधुरस्तुवरो वर्ण्यो व्रणशोधनरोपणः ॥ ९ ॥

अथ काकोदुम्बरिका ( कठूमर ) तस्या नामानि गुणांश्चाह—

काकोदुम्बरिका फल्गुर्मलयूर्जघनेफला । मलयूः स्तम्भकृत्तिक्ता शीतला तुवरा जयेत् ॥
कफपित्तव्रणश्वित्रकुष्ठपाण्ड्वर्शकामलाः ॥ १० ॥

अथ प्लक्षः ( पाखर ) तस्य नामानि गुणांश्चाह—

प्लक्षो जटी पर्कटी च पर्कटी च स्त्रियामपि ॥ ११ ॥
प्लक्षः कषायः शिशिरो व्रणयोनिगदापहः । दाहपित्तकफास्रघ्नः शोथहा रक्तपित्तहृत् ॥१२॥

अथ शिरीषः ( सिरस ) तस्य नामानि गुणांश्चाह—

शिरीषो भण्डिलो भण्डी भण्डीरश्च कपीतनः । शुकपुष्पः शुकतरुर्मृदुपुष्पः शुकप्रियः ॥ १३ ॥
शिरीषो मधुरोऽनुष्णस्तिक्तश्च तुवरो लघुः । दोषशोथविसर्पघ्नः कासव्रणविषापहः ॥ १४ ॥

अथ क्षीरिवृक्षपञ्चकं त्वक्पञ्चकञ्च, तयोर्लक्षणं तत्पत्रस्य च गुणांश्चाह—

न्यग्रोधोदुम्बराश्वत्थपारीषप्लक्षपादपाः । पञ्चैते क्षीरिणो वृक्षास्तेषां त्वक्पञ्चवल्कलम्॥१५॥
* केचित्तु पारीषस्थाने शिरीषं, वेतसं परेसं परे वा वदन्तीति विशेषः ॥ १५ ॥
क्षीरिवृक्षा हिमा वर्ण्या योनिरोगव्रणापहाः । रूक्षाः कषाया मेदोघ्ना विसर्पामयनाशनाः॥१६॥
शोथपित्तकफास्रघ्नाः स्तन्या भग्नास्थियोजकाः । त्वक्पञ्चकं हिमं ग्राहि व्रणशोथविसर्पजित्॥१७
तेषां पत्रं हिमं ग्राहि कफवातास्रनुल्लघु । विष्टम्भाध्मानजित्तिक्तं कषायं लघु लेखनम् ॥१८॥

अथ शालः ( साखू ) तस्य नामानि गुणांश्चाह—

शालस्तु सर्जकार्श्याश्वकर्णकाः शस्यशम्बरः । अश्वकर्णः कषायः स्याद् व्रणस्वेदकफक्रिमीन्॥
ब्रध्नविद्रधिबाधिर्ययोनिकर्णगदान् हरेत् ॥ १९ ॥

अथ शालभेदः ( सर्जकः ) तस्य नामानि गुणांश्चाह—

सर्जकोऽन्योऽजकर्णः स्याच्छालो मरिचपत्रकः ॥ २० ॥

अजकर्णः कटुस्तिक्तः कषायोष्णो व्यपोहति । कफपाण्डुश्रुतिगदान् मेहकुष्ठविषव्रणान् ॥२१॥

अथ शल्लकी ( सलई ) तस्या नामानि गुणांश्चाह—

शल्लकी गजभक्ष्या च सुवहा सुरभी रसा । महेरुणा कुन्दुरुकी वल्लकी च बहुस्रवा ॥ २२ ॥

शल्लकी तुवरा शीता पित्तश्लेष्मातिसारजित् । रक्तपित्तव्रणहरी पुष्टिकृत्समुदीरिता ॥ २३ ॥

अथ शिंशपा ( शीसम ) तस्या नामानि गुणांश्चाह—

शिंशपा पिच्छिला श्यामा कृष्णसारा च सा गुरुः । कपिला सैव मुनिभिर्मस्मगर्भेति कीर्तिता २४

शिंशपा कटुका तिक्ता कषाया शोषहारिणी । उष्णवीर्या हरेन्मेदःकुष्ठश्वित्रवमिक्रिमीन् ।

वस्तिरुग्व्रणदाहास्रबलासान् गर्भपातिनी ॥ २५ ॥

अथ ककुभः ( कोह ) तस्य नामानी गुणांश्चाह—

ककुभोऽर्जुननामाख्यो नदीसर्जश्च कीर्तितः । इन्द्रद्रुर्वीरवृक्षश्च वीरश्च धवलः स्मृतः ॥ २६ ॥

ककुभः शीतलो हृद्यः क्षतक्षयविषास्रजित् । मेदोमेहव्रणान् हन्ति तुवरः कफपित्तहृत् ॥ २७ ॥

अथासनः ( विजयसार ) तस्य नामानि गुणांश्चाह—

बीजकः पीतसारश्च पीतशालक इत्यपि । बन्धूकपुष्पः प्रियकः सर्जकश्चासनः स्मृतः ॥ २८ ॥

बीजकः कुष्ठवीसर्पश्वित्रमेहगुदक्रिमीन् । हन्ति श्लेष्मास्रपित्तञ्च त्वच्यः केश्यो रसायनः ॥२९॥

अथ खदिरः, तस्य नामानि गुणांश्चाह—

खदिरो रक्तसारश्च गायत्री दन्तधावनः । कण्टकी बालपत्रश्च बहुशल्यश्च यज्ञियः ॥ ३० ॥

खदिरः शीतलो दन्त्यः कण्डूकासारुचिप्रणुत् ॥ ३१ ॥

तिक्तः कषायो मेदोघ्नः कृमिमेहज्वरव्रणान् । श्वित्रशोथामपित्तास्रपाण्डुकुष्ठकफान् हरेत् ॥३२॥

अथ श्वेतखदिरः ( पपरिया कत्था ) तस्य नामानि गुणांश्चाह—

खदिरः श्वेतसारोऽन्यः कदरः सोमवल्कलः । कदरो विशदो वर्ण्यो मुखरोगकफास्रजित् ॥३३॥

अथेरिमेदः ( दुर्गन्ध खैर ) तस्य नामानि गुणांश्चाह—

इरिमेदो विट्खदिरः कालस्कन्धोऽरिमेदकः । इरिमेदः कषायोष्णो मुखदन्तगदास्रजित ॥

हन्ति कण्डूविषश्लेष्मकृमिकुष्ठविषव्रणान् ॥ ३४ ॥

अथरोहितकः ( रोहेडा ) तस्य नामानि गुणाश्चाह—

रोहीतको रोहितको रोही दाडिमपुष्पकः । रोहितकः प्लीहवाती ह्यो रक्तप्रसादनः ॥३५॥

अथ बब्बूलः ( बबूर ) तस्य नामानि गुणांश्चाह—

बब्बूलः किङ्किरातः स्यात्किङ्किराटः सपीतकः ॥ ३६ ॥

स एव कथितस्तज्ज्ञैरामाषट्पदमोदिनी । बब्बूलः कफनुद् ग्राही कुष्ठक्रिमिविषापहः ॥३७॥

अथारिष्टकः ( रीठा ) तस्य नामानि गुणांश्चाह—

अरिष्टकस्तु मङ्गल्यः कृष्णवर्णोऽर्थसाधनः । रक्तबीजः पीतफेनः फेनिलो गर्भपातनः ॥

अरिष्टकस्त्रिदोषघ्नो ग्रहजिद् गर्भपातनः ॥ ३८ ॥

अथ पुत्रजीवः ( पितौजिया ) तस्य नामानि गुणांश्चाह—

पुत्रजीवो गर्भकरो यष्टीपुष्पोऽर्थसाधकः ॥ ३९ ॥

पुत्रजीवो गुरुर्वृष्यो गर्भदः श्लेष्मवातहृत्। सृष्टमूत्रमलो रूक्षो हिमः स्वादुः पटुः कटुः ॥४०॥

अथेङ्गुदः ( हिङ्गोट ) तस्य नामानि गुणांश्चाह—

इङ्गुदोऽङ्गारवृक्षश्च तिक्तकस्तापसद्रुमः। इङ्गुदः कुष्ठभूतादिग्रहव्रणविषक्रिमीन्॥
हन्त्युष्णः श्वित्रशूलघ्नस्तिक्तकः कटुपाकवान्॥ ४१॥

अथ जिङ्गिनी, तस्या नामानि गुणांश्चाह—

जिङ्गिनी झिङ्गिनी झिङ्गी सुनिर्यासा प्रमोदिनी॥ ४२॥
जिङ्गिनी मधुरा सोष्णा कषाया योनिशोधिनी। कटुका व्रणहृद्रोगवातातीसारहृत् पटुः ॥४३॥

अथ तमालः, तस्य गुणानाह—

तमालः शालवद्वेद्यो दाहविस्फोटहृत् पुनः॥ ४४॥

अथ तूणी, तस्य नामगुणानाह—

तूणी तुन्नक आपीनस्तुणिकः कच्छकस्तथा। कुठेरकः कान्तलको नन्दिवृक्षश्च नन्दकः॥ ४५॥
तूणो रक्तः कटुः पाके कषायो मधुरो लघुः। तिक्तो ग्राही हिमो वृष्यो व्रणकुष्ठास्रपित्तजित् ॥४६॥

अथ भूर्जपत्रः ( भोजपत्र ) तस्य नामानि गुणांश्चाह—

भूर्जपत्रः स्मृतो भूर्जश्चर्मी बहुलवल्कलः। भूर्जो भूतग्रहश्लेष्मकर्णरुक्पित्तरक्तजित्॥
कषायो राक्षसघ्नश्च मेदोविषहरः परः॥ ४७॥

अथ पलाशः ( ढाक ) तस्य नामानि गुणांश्चाह—

पलाशः किंशुकः पर्णो यज्ञियो रक्तपुष्पकः। क्षारश्रेष्ठो वातपोथो ब्रह्मवृक्षः समिद्वरः॥ ४८॥
पलाशो दीपनो वृष्यः सरोष्णो व्रणगुल्मजित्। भग्नसन्धानकृद् दोषग्रहण्यर्शः क्रिमीन् हरेत् ॥४९॥
कषायः कटुकस्तिक्तः स्निग्धो गुदजरोगजित्॥

अथ तत्पुष्पफलयोर्गुणानाह—

तत्पुष्पं स्वादु पाके तु कटु तिक्तं कषायकम्॥ ५०॥
वातलं कफपित्तास्रकृच्छ्रजिद् ग्राहि शीतलम्। तृड्दाहशमकं वातरक्तकुष्ठहरं परम्॥ ५१॥
फलं लघूष्णं मेहार्शःक्रिमिवातकफापहम्। विपाके कटुकं रूक्षं कुष्ठगुल्मोदरप्रणुत्॥ ५२॥

अथ शाल्मलिः ( सेमर ) तस्य नामानि गुणांश्चाह—

शाल्मलिस्तु भवेन्मोचा पिच्छिला पूरणीति च। रक्तपुष्पा स्थिरायुश्च कण्टकाढ्या च तूलिनी॥५३॥
शाल्मलीशीतला स्वाद्वी रसे पाके रसायनी। श्लेष्मला पित्तवातास्रहारिणी रक्तपित्तजित् ॥५४॥

अथ मोचरसः, तस्य नामानि गुणांश्चाह—

निर्यासः शाल्मलेः पिच्छा शाल्मलीवेष्टकोऽपि च। मोचास्रावो मोचरसो मोचनिर्यास इत्यपि ५५
मोचास्रावो हिमो ग्राही स्निग्धो वृष्यः कषायकः। प्रवाहिकाऽतिसारामकफपित्तास्रदाहनुत् ॥५६॥

अथ कूटशाल्मलिः, तस्य नामानि गुणांश्चाह—

कृष्णसतःशाल्मलिः प्रोक्तो रोचनः कूटशाल्मलिः। कूटशाल्मलिकस्तिक्तःकटुकः कफवातनुत् ५७
भेद्युष्णः प्लीहजठरयकृद्गुल्मविषापहः। भूतानाहविबन्धास्रमेदःशूलकफापहः॥ ५८॥

अथ धवः ( धौ ) तस्य नामानि गुणांश्चाह—

धवो धटो नन्दितरुः स्थिरो गौरो धुरन्धरः। धवः शीतः प्रमेहार्शःपाण्डुपित्तकफापहः।
मधुरस्तुवरस्तस्य फलञ्च मधुरं मनाक् ॥ ५९ ॥

अथ धन्वङ्गः ( धामिन ) तस्य नामानि गुणांश्चाह—

धन्वङ्गस्तु धनुर्वृक्षो गोत्रवृक्षः सुतेजनः ॥ ६०
धन्वङ्गः कफपित्तास्र-कासहृत्तुवरो लघुः। बृंहणो बलकृद्रूक्षः सन्धिकृद् व्रणरोपणः ॥ ६१ ॥

अथ करीरः, तस्य नामानि गुणांश्चाह—

करीरः क्रकरीपत्रो ग्रन्थिलो मरुभूरुहः। करीरः कटुकस्तिक्तः स्वेद्युष्णो भेदनः स्मृतः।
दुर्नामकफवातामगरशोथव्रणप्रणुत् ॥ ६२ ॥

अथ शाखोटः ( सहोरा ) तस्य नामानि गुणांश्चाह—

शाखोटः पीतफलको भूतावासः खरच्छदः। शाखोटो रक्तपित्तार्शोवातश्लेष्मातिसारजित् ॥ ६३ ॥

अथ वरुणः ( बरना ) तस्य नामानि गुणांश्चाह—

वरुणो वरणः सेतुस्तिक्तशाकः कुमारकः। वरुणः पित्तलो भेदी श्लेष्मकृच्छ्राश्ममारुतान् ॥ ६४ ॥
निहन्ति गुल्मवातास्रकृमींश्चोष्णोऽग्निदीपनः। कषायो मधुरस्तिक्तः कटुको रूक्षको लघुः ॥ ६५ ॥

अथ कटभी, तस्या नामानि तत्फलस्य च गुणांश्चाह—

कटभी स्वादुपुष्पश्च मधुरेणुः कटम्भरा। कटभी तु प्रमेहार्शोनाडीव्रणविषक्रिमीन् ॥ ६६ ॥
हन्त्युष्णा कफकुष्ठघ्नी कटू रूक्षा च कीर्तिता। तत्फलं तुवरं ज्ञेयं विशेषात्कफशुक्रहृत् ॥ ६७ ॥

अथ मोक्षः ( मोखावृक्ष ) पलाशवत्पर्वतवृक्षः तस्य नामानि गुणांश्चाह—

मोक्षस्तु मोक्षकोऽपि स्याद् गोलीढो गोलिहस्तथा। क्षारश्रेष्ठः क्षारवृक्षो द्विविधः श्वेतकृष्णकः ॥
मोक्षकः कटुकस्तिक्तो ग्राह्युष्णः कफवातहृत्। विषमेदोगुल्मकण्डूबस्तिरुक्कृमिशुक्रनुत् ॥ ६९ ॥

अथ जलशिरीषिका ( जलसिरिस—टिटिन—ढाढोन इति च ) तस्या नामानि गुणांश्चाह—

शिरीषिका टिण्टिनिका दुर्वेलाऽम्बुशिरीषिका। त्रिदोषविषकुष्ठार्शोहरी वारिशिरीषिका ॥ ७० ॥

अथ शमी ( छोंकरा ) तस्या नामानि गुणांश्चाह—

शमी सक्तुफला तुङ्गा केशहन्त्री शिवाफला। मङ्गल्या च तथा लक्ष्मीः सुरारिः साऽलिपत्रिका स्मृता
शमी तिक्ता कटुः शीता कषाया रेचनी लघुः। कफकासभ्रमश्वासकुष्ठार्शःकृमिजित् स्मृता ॥ ७२ ॥

अथ सप्तपर्णः ( छतिवन—सतौना ) तस्य नामानि गुणांश्चाह—

सप्तपर्णो विशालत्वक् शारदो विषमच्छदः ॥ ७३ ॥
सप्तपर्णो व्रणश्लेष्मवातकुष्ठास्रजन्तुजित्। दीपनः श्वासगुल्मघ्नः स्निग्धोष्णस्तुवरः सरः ॥ ७४ ॥

अथ तिनिशः ( तिरिच्छ ) तस्य नामानि गुणांश्चाह—

तिनिशः स्यन्दनो नेमी रथद्रुर्वञ्जुलस्तथा। तिनिशः श्लेष्मपित्तास्रमेदःकुष्ठप्रमेहजित् ॥
तुवरः श्वित्रदाहघ्नो व्रणपाण्डुकृमिप्रणुत् ॥ ७५ ॥

अथ भूमीसहः ( सागोन ) तस्य नामानि गुणांश्चाह—

भूमीसहो द्वारदारुर्वरदारु खरच्छदः। भूमीसहस्तु शिशिरो रक्तपित्तप्रसादनः ॥ ७६ ॥

इति श्रीमिश्रलटकनतनयश्रीमिश्रभावविरचिते भावप्रकाशे वर्गप्रकरणे षष्ठो वटादिवर्गः समाप्तः ॥ ६ ॥

---

## अथ सप्तम आम्रादिफलवर्गः ७।

तत्रादावाम्रः ( आम ) तस्य नामान्याह—

आम्रश्चूतो रसालश्च सहकारोऽतिसौरभः। कामाङ्गो मधुदूतश्च माकन्दः पिकवल्लभः ॥ १ ॥

अथाम्रपुष्पगुणानाह—

आम्रपुष्पमतीसारकफपित्तप्रमेहनुत्। असृग्दुष्टिहरं शीतं रुचिकृद्ग्राहि वातलम् ॥ २ ॥

अथामाम्रफलम् ( अमिया ) तस्य गुणानाह—

आमं बालं कषायाम्लं रुच्यं मारुतपित्तकृत्। तरुणं तु तदत्यम्लं रूक्षं दोषत्रयास्रकृत् ॥ ३ ॥

अथ शुष्कामाम्रफलम् ( अमचूर ) तस्य लक्षणगुणानाह—

आम्रमामं त्वचाहीनमातपेऽतिविशोषितम्। अम्लं स्वादु कषायं स्याद्भेदनं कफवातजित् ॥ ४ ॥

अथ पक्वाम्रफलम् ( पका आम ) तस्य गुणानाह—

पक्वं तु मधुरं वृष्यं स्निग्धं बलसुखप्रदम्। गुरु वातहरं हृद्यं वर्ण्यं शीतमपित्तलम् ॥
कषायानुरसं वह्निश्लेष्मशुक्रविवर्द्धनम् ॥ ५ ॥

अथ वृक्षपक्वाम्रफलगुणानाह—

तदेव वृक्षसम्पक्वं गुरु वातहरं परम्। मधुराम्लरसं किञ्चिद्भवेत्पित्तप्रकोपणम् ॥ ६ ॥

अथ कृत्रिमपक्वाम्रफलगुणानाह—

आम्रं कृत्रिमपक्वञ्च तद्भवेत्पित्तनाशनम्। रसस्याम्लस्य हीनत्वान्माधुर्याच्च विशेषतः ॥ ७ ॥
चूषितं तत्परं रुच्यं बलवीर्यकरं लघु। शीतलं शीघ्रपाकि स्याद्वातपित्तहरं सरम् ॥ ८ ॥

अथ गालिताम्ररसगुणानाह—

तद्रसो गालितो बल्यो गुरुर्वातहरः सरः। अहृद्यस्तर्पणोऽतीव बृंहणः कफवर्द्धनः ॥ ९ ॥

अथाम्रखण्डगुणानाह—

तस्य खण्डं गुरु परं रोचनं चिरपाकि च। मधुरं बृंहणं बल्यं शीतलं वातनाशनम् ॥ १० ॥

अथ दुग्धयुक्ताम्रगुणानाह—

वातपित्तहरं रुच्यं बृंहणं बलवर्द्धनम्। वृष्यं वर्णकरं स्वादु दुग्धाम्रं गुरु शीतलम् ॥ ११ ॥

अथाम्रातियोगः ( आम बहुत खाना ) तस्य दोषानाह—

मन्दानलत्वं विषमज्वरं च रक्तामयं बद्धगुदोदरं च।
आम्रातियोगो नयनामयं वा करोति तस्मादति तानि नाद्यात् ॥ १२ ॥

एतदम्लाम्रविषयं मधुराम्लपरं न तु। मधुरस्य परं नेत्रहितं त्वाद्या गुणा यतः ॥ १३ ॥

अथाम्रातियोगजदोषनिवृत्त्युपायमाह—

शुण्ठ्यम्भसोऽनुपानं स्यादाम्राणामतिभक्षणे। जीरकं वा प्रयोक्तव्यं सह सौवर्चलेन च ॥ १४ ॥

अथाम्रावर्तः ( अमावट ) तस्य लक्षणं गुणांश्चाह—

पक्वस्य सहकारस्य पटे विस्तारितो रसः। घर्मशुष्को मुहुर्दत्त आम्रावर्त इति स्मृतः ॥ १५ ॥
आम्रावर्तस्तृषाच्छर्दिवातपित्तहरः सरः। रुच्यः सूर्यांशुभिः पाकाल्लघुश्च स हि कीर्तितः ॥ १६ ॥

अथ भर्जनादिभेदेन तस्य गुणभेदानाह—

स चाङ्गारेण संभृष्टस्तैलभृष्टश्च तद्गुणः। आर्द्रभृष्टो बलकरो रोचनश्च प्रकीर्तितः ॥ ५४ ॥
शुष्कभृष्टोऽतिरूक्षश्च वातकुष्ठप्रकोपणः। स्विन्नः पित्तकफं हन्यात् सूपः क्षोभकरो मतः ॥५५॥
आर्द्रोऽतिकोमलो रुच्यः पित्तशुक्रहरो हिमः। कषायो वातलो ग्राही कफपित्तहरो लघुः॥५६॥

अथ कलायः ( मटर ) तस्य नामगुणानाह—

कलायो वर्तुलः प्रोक्तः सतीनश्च हरेणुकः। कलायो मधुरः स्वादुः पाके रूक्षश्च शीतलः ॥५७॥

अथ त्रिपुटः ( खेसारी ) तस्य नामगुणानाह—

त्रिपुटः खण्डिकोऽपि स्यात्कथ्यन्ते तद्गुणा अथ। त्रिपुटो मधुरस्तिक्तस्तुवरो रूक्षणो भृशम् ॥५८॥
कफपित्तहरो रुच्यो ग्राहकः शीतलस्तथा। किन्तु खञ्जत्वपङ्गुत्वकारी वातातिकोपनः ॥५९॥

अथ कुलत्थः ( कुलथी ) तस्य नामानि गुणांश्चाह—

कुलत्थिका कुलत्थश्च कथ्यन्ते तद्गुणा अथ ॥ ६० ॥
कुलत्थः कटुकः पाके कषायः पित्तरक्तकृत्। लघुर्विदाही वीर्योष्णः श्वासकासकफानिलान् ॥६१॥
हन्ति हिक्काऽश्मरीशुक्रदाहानाहान् सपीनसान्। स्वेदसंग्राहको मेदोज्वरक्रिमिहरः सरः ॥६२॥

अथ तिलः तस्य तद्भेदानां च गुणानाह—

तिलः कृष्णः सितो रक्तः सवन्योऽल्पतिलः स्मृतः। तिलो रसे कटुस्तिक्तो मधुरस्तुवरो गुरुः ॥६३॥
विपाकेकटुकःस्वादुः स्निग्धोष्णःकफपित्तनुत्। बल्यःकेश्यो हिमस्पर्शस्त्वच्यःस्तन्योव्रणेहितः।
दन्त्योऽल्पमूत्रकृद् ग्राही वातघ्नोऽग्निमतिप्रदः। कृष्णः श्रेष्ठतमस्तेषु शुक्लो मध्यमः सितः॥
अन्ये हीनतराः प्रोक्तास्तज्ज्ञै रक्तादयस्तिलाः ॥ ६५ ॥

अथातसी ( तीसी ) तस्या नामगुणानाह—

अतसी नीलपुष्पी च पार्वती स्यादुमा क्षुमा ॥ ६६ ॥
अतसी मधुरातिक्तास्निग्धापाकेकटुर्गुरुः। उष्णा दृक्शुक्रवातघ्नी कफपित्तविनाशिनी ॥६७॥

अथ तुवरी 'तोरी–तोडिस' इति लोके' तस्या गुणानाह—

तुवरी ग्राहिणीप्रोक्तालघ्वी कफविषास्रजित्। तीक्ष्णोष्णा वह्निदा कण्डूकुष्ठकोष्ठक्रिमिप्रणुत् ६८

अथ सर्षपो रक्तः–पीतश्च ( लाल सरसों और पीली सरसों ) तयोर्नामगुणानाह—

सर्षपः कटुकः स्नेहस्तुन्तुभश्च कदम्बकः। गौरस्तु सर्षपः प्राज्ञैः सिद्धार्थ इति कथ्यते ॥६९॥
सर्षपस्तु रसे पाके कटुः स्निग्धः सतिक्तकः। तीक्ष्णोष्णः कफवातघ्नोरक्तपित्ताग्निवर्धनः॥७०॥
रक्षोहरो जयेत्कण्डूं कुष्ठकोष्ठक्रिमिग्रहान्। यथा रक्तस्तथा गौरः किन्तु गौरो वरो मतः ॥७१॥

अथ राजिका कृष्णराजिका च ( राई, कृष्ण राई ) तयोर्नामानि गुणाँश्चाह—

राजी तु राजिका तीक्ष्णगन्धा क्षुज्जनिकाऽऽसुरी। क्षवः क्षुताभिजनकः क्रिमिकृत् कृष्णसर्षपः॥७२
राजिका कफपित्तघ्नी तीक्ष्णोष्णा रक्तपित्तकृत्। किञ्चिद् रूक्षाऽग्निदा कण्डूकुष्ठकोष्ठक्रिमीन्हरेत् ॥
अतितीक्ष्णा विशेषेण तद्वत्कृष्णाऽपि राजिका ॥ ७३ ॥

अथ क्षुद्रधान्यम् , तस्य नामगुणानाह—

क्षुद्रधान्यंकुधान्यंचतृणधान्यमितिस्मृतम्। क्षुद्रधान्यमनुष्णंस्यात्कषायं लघु लेखनम् ॥७४॥

मधुरं कटुकं पाके रूक्षं च क्लेदशोषकम् । वातकृद् बद्धविट्कं च पित्तरक्तकफापहम् ॥ ७५ ॥

अथ कङ्गुः ( कङ्गुनी ) तस्य नामभेदगुणानाह—

स्त्रियां कङ्गुप्रियङ्गू द्वे कृष्णा रक्ता सिता तथा। पीता चतुर्विधा कङ्गुस्तासां पीता वरा स्मृता ७६

कङ्गुस्तु भग्नसन्धानवातकृद् बृंहणी गुरुः । रूक्षा श्लेष्महराऽतीव वाजिनां गुणकृद् भृशम् ॥७७॥

अथ चीनाकः ( चैना ) तस्य नामगुणानाह—

चीनाकः काककङ्गुश्च स्मृतस्तल्लक्षणः श्लक्ष्णकः स्मृतः

चीनाकः कङ्गुभेदोऽस्ति स ज्ञेयः कङ्गुवद् गुणैः ॥ ७८ ॥

अथ श्यामाकः ( सांव ) तस्य गुणानाह—

श्यामाकः श्यामकः श्यामस्त्रिबीजः स्याद्‌विप्रियः । सुकुमारो राजधान्यं तृणबीजोत्तमश्च सः ॥

श्यामाकः शोषणो रूक्षो वातलः कफपित्तहृत् ॥ ७९ ॥

अथ कोद्रवः वनकोद्रवश्च ( कोदो—वनकोदो ) तयोर्नामानि गुणांश्चाह—

कोद्रवः कोरदूषः स्यादुद्दालो वनकोद्रवः । कोद्रवो वातलो ग्राही हिमः पित्तकफापहः ॥

उद्दालस्तु भवेदुष्णो ग्राही वातकरो भृशम् ॥ ८० ॥

अथ चारुकः ( सरबीजः ) तस्य नामगुणानाह—

चारुकः सरबीजः स्यात्कथ्यन्ते तद्‌गुणा अथ । चारुको मधुरो रूक्षो रक्तपित्तकफापहः ॥

शीतलो लघुर्वृष्यश्च कषायो वातकोपनः ॥ ८१ ॥

अथ वंशयवाः ( बांस के बीज ) तेषां गुणानाह—

यवा वंशभवा रूक्षाः कषायाः कटुपाकिनः । बद्धमूत्राः कफघ्नाश्च वातपित्तकराः सराः ॥८२॥

अथ कुसुम्भबीजम् ( कसूम के बीज, ) तस्य नामगुणानाह—

कुसुम्भबीजं वरटा सैव प्रोक्ता वरट्टिका ॥ ८३ ॥

वरटा मधुरा स्निग्धा रक्तपित्तकफापहा । कषाया शीतला गुर्वी स्यादवृष्याऽनिलापहा ॥ ८४ ॥

अथ गवेधुका ( गरहेडुआ ) तस्या नामगुणानाह—

गवेधुका तु विद्वद्भिर्गवेधुः कथिता स्त्रियाम् । गवेधुः कटुका स्वाद्वी कार्श्यकृत्कफनाशिनी ॥ ८५ ॥

अथ नीवारः ( तीनी ) तस्य नामगुणानाह—

प्रसाधिका तु नीवारस्तृणान्नमिति च स्मृतम् । नीवारः शीतलो ग्राही पित्तघ्नः कफवातकृत् ८६

अथ यावनालः ( पनेरा, जुआर ) तस्य गुणानाह—

यावनालो हिमः स्वादुर्लोहितः श्लेष्मपित्तजित् । अवृष्यस्तुवरो रूक्षः क्लेदकृत्कथितो लघुः ८७

अथ परिभाषामाह—

धान्यं सर्वं नवं स्वादु गुरु श्लेष्मकरं स्मृतम् । तत्तु वर्षोषितं पथ्यं यतो लघुतरं हि तत् ॥८८॥

वर्षोषितं सर्वधान्यं गौरवं परिमुञ्चति । न तु त्यजति वीर्यं स्वं क्रमान्मुञ्चत्यतः परम् ॥८९॥

एतेषु यवगोधूमतिलमाषा नवा हिताः । पुराणा विरसा रूक्षा न तथा गुणकारिणः ॥ ९० ॥

* पुराणा वर्षद्वयादुपरि स्थिताः । यवादयो नवाः स्वस्थान् प्रतिहिताः । पथ्याशिनां तु पुराणा हिताः ॥

"पुराणयवगोधूमक्षौद्रजाङ्गलशूल्यभुग् ।"

इति वसन्ते वाग्भटेनोक्तत्वात् ॥ ९० ॥

इति श्रीमिश्रलटकनतनयश्रीमिश्रभावविरचिते भावप्रकाशे वर्गप्रकरणे नवमो धान्यवर्गः समाप्तः ॥ ९ ॥

## अथ शाकवर्गः दशमः ॥ १० ॥

तत्र शाकनिरूपणमाह—

पत्रं पुष्पं फलं नालं कन्दं संस्वेदजं तथा । शाकं षड्विधमुद्दिष्टं गुरु विद्याद्यथोत्तरम् ॥ १ ॥

अथ शाकानां गुणानाह—

प्रायः शाकानि सर्वाणि विष्टम्भीनि गुरूणि च । रूक्षाणि बहुवर्चांसि सृष्टविण्मारुतानि च ॥ २ ॥

शाकं भिनत्ति वपुरस्थि निहन्ति नेत्रं, वर्णं विनाशयति रक्तमथापि शुक्रम् ।
प्रज्ञाक्षयं च कुरुते पलितं च नूनं, हन्ति स्मृतिं गतिमिति प्रवदन्ति तज्ज्ञाः ॥ ३ ॥
शाकेषु सर्वेषु वसन्ति रोगास्ते हेतवो देहविनाशनाय ।
तस्माद् बुधः शाकविवर्जनं तु कुर्यात्तथाऽम्लेषु स एव दोषः ॥ ४ ॥

* एतानि शाकनिन्दकानि वचनानि सामान्यानि ॥ २-४ ॥

अथ शाकेषु विशिष्टानि । तत्र पत्रशाकानि । तत्रापि वास्तूकद्वयम्(दोनो बथुआ)तस्य नामानि गुणांश्चाह—

वास्तूकं वास्तुकं च स्यात्क्षारपत्रं च शाकराट् । तदेव तु बृहत्पत्रं रक्तं स्याद्गौडवास्तुकम् ॥५॥
प्रायशो यवमध्ये स्याद्यवशाकमतः स्मृतम् । वास्तूकद्वितयं स्वादु क्षारं पाके कटूदितम् ॥६॥
दीपनं पाचनं रुच्यं लघु शुक्रबलप्रदम् । सरं प्लीहास्रपित्तार्शःकृमिदोषत्रयापहम् ॥ ७ ॥

अथ पोतकी ( पोई ) तस्या नामगुणानाह—

पोतक्युपोदिका सा तु मालवाऽमृतवल्लरी । पोतकी शीतला स्निग्धा श्लेष्मलावातपित्तनुत् ८
अकण्ठ्या पिच्छिला निद्राशुक्रदा रक्तपित्तजित् । बलदा रुचिकृत्पथ्या बृंहणी तृप्तिकारिणी ॥९॥

अथ श्वेतरक्तमारिषौ ( सफेद व लाल मरसा ) तयोर्नामानि गुणांश्चाह—

मारिषो वाष्पको मार्षः श्वेतो रक्तश्च स स्मृतः। मारिषो मधुरः शीतो विष्टम्भी पित्तनुद्गुरुः १०
वातश्लेष्मकरो रक्तपित्तनुद् विषमाग्निजित् । रक्तमार्षो गुरुर्नाति सक्षारो मधुरः सरः ॥
श्लेष्मलः कटुकः पाके स्वल्पदोष उदीरितः ॥ ११ ॥

अथ तण्डुलीयः ( चौलाई ) तस्य नामगुणानाह—

तण्डुलीयो मेघनादः काण्डेरस्तण्डुलेरकः । भाण्डीरस्तण्डुलीबीजो विषघ्नश्चाल्पमारिषः ॥१२॥
तण्डुलीयो लघुः शीतो रूक्षः पित्तकफास्रजित् । सृष्टमूत्रमलो रुच्यो दीपनो विषहारकः ॥१३॥

अथ पानीयतण्डुलीयम् ( जलचौलाई ), [ चौलाईभेदो जलतण्डुलीयं शास्त्रे कच्चटमिति प्रसिद्धम् ]
तस्य नामगुणानाह—

पानीयतण्डुलीयं तु कच्चटं समुदाहृतम् । कच्चटं तिक्तकं रक्तपित्तानिलहरं लघु ॥ १४ ॥

अथ पलक्या ( पालक ) तस्या नामानि गुणांश्चाह—

पलक्या वास्तुकाकारा छुरिका चीरितच्छदा ॥ १५ ॥

पलक्या वातला शीता श्लेष्मला भेदिनी गुरुः । विष्टम्भिनी मदश्वासपित्तरक्तकफापहा ॥१६॥

अथ कालशाकम् ( नाडीका शाक ) तस्य नामगुणानाह—

नाडिकं कालशाकं च श्राद्धशाकं च कालकम् । कालशाकं सरं रुच्यं वातकृत्कफशोथहृत् ॥
बल्यं रुचिकरं मेध्यं रक्तपित्तहरं हिमम् ॥ १७ ॥

अथ पट्टशाकः ( पटुआ शाक ) तस्य नामानि गुणाँश्चाह—

पट्टशाकस्तु नाडीको नाडीशाकश्च स स्मृतः नाडीको रक्तपित्तघ्नो विष्टम्भी वातकोपनः ॥१८॥

अथ कलम्बी ( कलमी शाक ) तस्या नामगुणानाह—

कलम्बी शतपर्वी च कथ्यन्ते तद्गुणा अथ । कलम्बी स्तन्यदा प्रोक्ता मधुरा शुक्रकारिणी ॥१९॥

अथ लोणी बृहल्लोणी च ( नोनिया, बड़ा नोनिया, कुलफा, ) तयोर्नामगुणानाह—

लोणा लोणी च कथिता बृहल्लोणी तु घोटिका । लोणी रूक्षा स्मृता गुर्वी वातश्लेष्महरी पटुः२०
अर्शोघ्नी दीपनी चाम्ला मन्दाग्निविषनाशिनी । घोटिकाऽम्लासरा चोष्णा वातकृत्कफपित्तहृत् २१
वाग्दोषव्रणगुल्मघ्नी श्वासकासप्रमेहनुत् । शोथे लोचनरोगे च हिता तज्ज्ञैरुदाहृता ॥ २२ ॥

अथ चाङ्गेरी ( अम्बिलोना ) तस्या नामानि गुणाँश्चाह—

चाङ्गेरी चुक्रिका दन्तशठाऽम्बष्ठाऽम्ललोणिका । अश्मन्तकस्तु शफरी कुशली चाम्लपत्रकः २३
चाङ्गेरी दीपनी रुच्या रूक्षोष्णा कफवातनुत् । पित्तलाऽम्ला ग्रहण्यर्शःकुष्ठातीसारनाशिनी २४

अथ चुक्रिका ( चूक ) तस्या नामगुणानाह—

चुक्रिका स्यात्तु पत्राम्ला रोचनी शतवेधिनी ॥ २५ ॥
चुक्रा त्वम्लतरा स्वाद्वी वातघ्नी कफपित्तकृत् । रुच्या लघुतरा पाके वृन्ताकेनातिरोचनी ॥२६॥

अथ चञ्चुकी ( चेंचुना ) तस्या नामगुणानाह—

चिञ्चा चञ्चुश्चञ्चुकी च दीर्घपत्रा सतिक्तका । चञ्चुः शीता सरा रुच्या स्वाद्वी दोषत्रयापहा ॥
धातुपुष्टिकरी बल्या मेध्या पिच्छिलका स्मृता ॥ २७ ॥

अथ हिलमोचिका ( बामनहाटी-हुरहुर ) तस्या नामगुणानाह—

ब्राह्मी शङ्खधराऽऽचारी मत्स्याक्षी हिलमोचिका । शोथं कुष्ठं कफं पित्तं हरते हिलमोचिका२८

अथ शितिवारः ( शिरियारी, चौपती ) तस्य नामलक्षणगुणानाह—

शितिवारः शितिवरः स्वस्तिकः सुनिषण्णकः । श्रीवारकः सूचिपत्रः पर्णकः कुक्कुटः शिखी २९
चाङ्गेरीसदृशः पत्रैश्चतुर्दल इतीरितः । शाको जलान्विते देशे चतुष्पत्रीति चोच्यते ॥ ३० ॥
सुनिषण्णो हिमो ग्राही मेदोदोषत्रयापहः ॥ ३१ ॥
अविदाही लघुः स्वादुः कषायो रूक्षदीपनः । वृष्यो रुच्यो ज्वरश्वासमेहकुष्ठभ्रमप्रणुत् ॥३२॥

अथ मूलकपत्रम् ( मुरई का पत्ता ) तस्य गुणानाह—

पाचनं लघु रुच्योष्णं पत्रं मूलकजं नवम् । स्नेहसिद्धं त्रिदोषघ्नमसिद्धं कफपित्तकृत् ॥ ३३ ॥

अथ द्रोणपुष्पी ( गूमा ) तस्या गुणानाह—

द्रोणपुष्पीदलं स्वादु रूक्षं गुरु च पित्तकृत् । भेदनं कामलाशोथमेहज्वरहरं कटु ॥ ३४ ॥

अथ यवानीशाकम् ( अजवाइन का शाक ) तस्य गुणानाह—

यवानीशाकमाग्नेयं रुच्यं वातकफप्रणुत् । उष्णं कटु च तिक्तं च पित्तलं लघु शूलहृत् ॥३५॥

अथ दद्रुघ्नपत्रम् ( पमार चकवड शाक ) तस्य गुणानाह—

दद्रुघ्नपत्रं दोषघ्नमम्लं वातकफापहम् । कण्डूकासक्रिमिश्वासदद्रुकुष्ठप्रणुल्लघु ॥ ३६ ॥

अथ सेहुण्डः ( थूहर ) तत्पत्रस्य गुणानाह—

सेहुण्डस्य दलं तीक्ष्णं दीपनं रेचनं हरेत् । आध्मानाष्ठीलिकागुल्मशूलशोथोदराणि च ॥३७॥

अथ पर्पटः ( पित्तपापड़ा ) तस्य गुणानाह—

पर्पटो हन्ति पित्तास्रज्वरतृष्णाकफभ्रमान् । संग्राही शीतलस्तिक्तो दाहनुद्वातलो लघुः ॥३८॥

अथ गोजिह्वा ( गोभी के पत्ते ) तस्या गुणानाह—

गोजिह्वा कुष्ठमेहास्रकृच्छ्रज्वरहरी लघुः ॥ ३९ ॥

अथ पटोलपत्रम् ( पटोलपात ) तस्य गुणानाह—

पटोलपत्रं पित्तघ्नं दीपनं पाचनं लघु । स्निग्धं वृष्यं तथोष्णं च ज्वरकासक्रिमिप्रणुत् ॥४०॥

अथ गुडूचीपत्रम् ( गिलोयशाक ) तस्य गुणानाह—

गुडूचीपत्रमाग्नेयं सर्वज्वरहरं लघु । कषायं कटुस्तिक्तं च स्वादुपाकं रसायनम् ॥ ४१ ॥

बल्यमुष्णं च संग्राहि हन्याद्दोषत्रयं तृषाम् । दाहप्रमेहवातासृक्कामलाकुष्ठपाण्डुताः ॥ ४२ ॥

अथ कासमर्दः ( कसौंदी शाक ) तस्य नामानि तत्पत्रस्य गुणांश्चाह—

कासमर्दोऽरिमर्दश्च कासारिः कर्कशस्तथा । कासमर्ददलं रुच्यं वृष्यं कासविषास्रनुत् ॥ ४३ ॥

मधुरं कफवातघ्नं पाचनं कण्ठशोधनम् । विशेषतः कासहरं पित्तघ्नं ग्राहकं लघु ॥ ४४ ॥

अथ चणकशाकम् ( चनेका शाक ) तस्य गुणानाह—

रुच्यं चणकशाकं स्याद् दुर्जरं कफवातकृत् । अम्लं विष्टम्भजनकं पित्तनुद्दन्तशोथहृत् ॥४५॥

अथ कलायशाकम् ( मटर का शाक ) तस्य गुणानाह—

कलायशाकं भेदि स्याल्लघु तिक्तं त्रिदोषजित् ॥ ४६ ॥

अथ सार्षपं शाकम् ( सरसों का शाक ) तस्य गुणानाह—

कटुकं सार्षपं शाकं बहुमूत्रमलं गुरु । अम्लपाकं विदाहि स्यादुष्णं रूक्षं त्रिदोषकृत् ॥

सक्षारलवणं तीक्ष्णं स्वादु शाकेषु निन्दितम् ॥ ४७ ॥

अथ पुष्पशाकानि, तत्रागस्तिपुष्पस्य गुणानाह—

अगस्तिकुसुमं शीतं चातुर्थिकनिवारणम् । नक्तान्ध्यनाशनं तिक्तं कषायं कटुपाकि च ॥

पीनसश्लेष्मपित्तघ्नं वातघ्नं मुनिभिर्मतम् ॥ ४८ ॥

अथ कदलीपुष्पम् ( केले का फूल ) तस्य गुणानाह—

कदल्याः कुसुमं स्निग्धं मधुरं तुवरं गुरु । वातपित्तहरं शीतं रक्तपित्तक्षयप्रणुत् ॥ ४९ ॥

अथ शोभाञ्जनस्य पुष्पं मधु च ( सहंजना का फूल और शहद ) तयोर्गुणानाह—

शिग्रोः पुष्पं तु कटुकं तीक्ष्णोष्णं स्नायुशोथनुत् । क्रिमिहृत्कफवातघ्नं विद्रधिप्लीहगुल्मजित् ॥

मधु शिग्रोस्त्वक्षिहितं रक्तपित्तप्रसादनम् ॥ ५० ॥

अथ शाल्मलीपुष्पम् ( सेमल के फूल ) तस्य गुणानाह—

शाल्मलीपुष्पशाकं तु घृतसैन्धवसाधितम्। प्रदरं नाशयत्येव दुःसाध्यं च न संशयः ॥५१॥
रसे पाके च मधुरं कषायं शीतलं गुरु। कफपित्तास्रजिद् ग्राहि वातलं च प्रकीर्तितम् ॥ ५२ ॥

अथ फलशाकानि। तत्र कूष्माण्डं ( पेठा ) तस्य नामानि तद्बाल-मध्यम-वृद्धफलानां च गुणानाह—

कूष्माण्डं स्यात्पुष्पफलं पीतपुष्पं बृहत्फलम् ॥ ५३ ॥
कूष्माण्डं बृंहणं वृष्यं गुरु पित्तास्रवातनुत्। बालं पित्तापहं शीतं मध्यमं कफकारकम् ॥५४॥
वृद्धं नातिहिमं स्वादु सक्षारं दीपनं लघु। बस्तिशुद्धिकरं चेतोरोगहृत्सर्वदोषजित् ॥ ५५ ॥

अथ कूष्माण्डी ( कुम्हड़ा ) तस्या नामगुणानाह—

कूष्माण्डी तु भृशं लघ्वी कर्कारुरपि कीर्तिता। कर्कारुर्ग्राहिणी शीता रक्तपित्तहरा गुरुः।
पक्वा तिक्ताऽग्निजननी सक्षारा कफवातनुत् ॥ ५६ ॥

अथ अलाबूर्दीर्घा-वर्तुला च ( लवलौआ ) तस्या नामानि भेदांस्तत्फलगुणांश्चाह—

अलाबूः कथिता तुम्बी द्विधा दीर्घा च वर्तुला ॥ ५७ ॥
मिष्टतुम्बीफलं हृद्यं पित्तश्लेष्मापहं गुरु। वृष्यं रुचिकरं प्रोक्तं धातुपुष्टिविवर्धनम् ॥ ५८ ॥

अथ कटुतुम्बी ( कड़वी लौकी ) तस्या नामगुणानाह—

इक्ष्वाकुः कटुतुम्बी स्यात्सा तुम्बी च महाफला। कटुतुम्बी हिमा हृद्या पित्तकासविषापहा ॥
तिक्ता कटुर्विपाके च वातपित्तज्वरान्तकृत् ॥ ५९ ॥

अथ कर्कटी ( ककड़ी ) तस्या नामानि तत्पक्वापक्वफलगुणांश्चाह—

एर्वारुः कर्कटी प्रोक्ता कथ्यन्ते तद्गुणा अथ ॥ ६० ॥
कर्कटी शीतला रूक्षा ग्राहिणी मधुरा गुरुः। रुच्या पित्तहरा सामा पक्वा तृष्णाऽग्निपित्तकृत् ॥६१॥

अथ चिचिण्डः ( चिचिण्डा ) तस्य नामानि गुणांश्चाह—

चिचिण्डः श्वेतराजिः स्यात्सुदीर्घो गृहकूलकः। चिचिण्डो वातपित्तघ्नो बल्यः पथ्यो रुचिप्रदः॥
शोषणोऽतिहितः किञ्चिद्गुणैर्न्यूनः पटोलतः ॥ ६२ ॥

अथ कारवेल्लं कारवेल्ली च ( करेला, करेली ) तयोर्नामानि गुणाँश्चाह—

कारवेल्लं कठिल्लं स्यात्कारवेल्ली ततो लघुः। कारवेल्लं हिमं भेदि लघु तिक्तमवातलम् ६३
ज्वरपित्तकफास्रघ्नं पाण्डुमेहकृमीन् हरेत्। तद्गुणा कारवेल्ली स्याद्विशेषाद्दीपनी लघुः ॥६४॥

अथ महाकोशातकी ( नेनुआ ) तस्या नामानि गुणांश्चाह—

महाकोशातकी प्रोक्ता हस्तिघोषा महाफला ॥ ६६ ॥
धामार्गवो घोषकश्च हस्तिपर्णश्च संस्मृतः। महाकोशातकी स्निग्धा रक्तपित्तानिलापहा ॥६६॥

अथ राजकोशातकी ( तोरई ) तस्या नामानि गुणांश्चाह—

धामार्गवः पीतपुष्पो जालिनी कृतवेधना। राजकोशातकी चेति तथोक्ता राजिमत्फला ॥६७॥
राजकोशातकी शीता मधुरा कफवातकृत्। पित्तघ्नी दीपनी श्वासज्वरकासकृमिप्रणुत् ॥६८॥

अथ पटोलः ( परवल ) तस्या नामानि गुणाँश्चाह—

पटोलः कुलकस्तिक्तः पाण्डुकः कर्कशच्छदः। राजीफलः पाण्डुफलो राजेयश्चामृताफलः ॥६९॥

बीजगर्भः प्रतीकश्च कुष्टहा कासभञ्जनः । पटोलं पाचनं हृद्यं वृष्यं लध्वग्निदीपनम् ॥
स्निग्धोष्णं हन्ति कासास्रज्वरदोषत्रयक्रिमीन् ॥ ७० ॥

अथ पटोलस्य मूलनालपत्रफलानां गुणानाह—

पटोलस्य भवेन्मूलं विरेचनकरं सुखात् ॥ ७१ ॥
नालं श्लेष्महरं पत्रं पित्तहारि फलं पुनः । दोषत्रयहरं प्रोक्तं तद्वत्तिक्ता पटोलिका ॥ ७२ ॥

अथ बिम्बी ( कुंदुरी, कन्दूरी ) तस्या नामानि तत्फलगुणांश्चाह—

बिम्बा रक्तफला तुण्डी तुण्डीकेरी च बिम्बिका । ओष्ठोपमफला प्रोक्ता पीलुपर्णी च कथ्यते ७३
बिम्बीफलं स्वादु शीतं गुरु पित्तास्रवातजित् । स्तम्भनं लेखनं रुच्यं विबन्धाध्मानकारकम् ७४

अथ शिंबिः-पुस्तशिम्बी च ( सेम-सेमभेद ) तयोर्नामानि गुणांश्चाह—

शिम्बिः शिम्बी पुस्तशिम्बी तथा पुस्तकशिम्बिका । शिम्बीद्वयं च मधुरं रसे पाके हिमं गुरु॥
बल्यं दाहकरं प्रोक्तं श्लेष्मलं वातपित्तजित् ॥ ७५ ॥

अथ कोलशिम्बिः ( सुअरा सेम ) तस्या नामानि गुणांश्चाह—

कोलशिम्बिः कृष्णफला तथा पर्यङ्कपट्टिका ॥ ७६ ॥
कोलशिम्बिः समीरघ्नी गुर्व्युष्णा कफपित्तकृत् । शुक्राग्निसादकृद्रूक्ष्या रुचिकृद् बद्धविड्गुरुः ७७

अथ शोभाजनफलम् ( सहजनेकी फली ) तस्य गुणानाह—

शोभाञ्जनफलं स्वादु कषायं कफपित्तनुत् । शूलकुष्ठक्षयश्वासगुल्महृद् दीपनं परम् ॥ ७८ ॥

अथ वृन्ताकम् ( बैंगन, भण्टा ) तस्य नामानि भेदान् गुणांश्चाह—

वृन्ताकं स्त्री तु वार्ताकुर्भण्टाकी भाण्टिकाऽपि च। वृन्ताकं स्वादु तीक्ष्णोष्णं कटुपाकमपित्तलम् ७९

अथ तद्बालवृद्धफलयोर्गुणानाह—

ज्वरवातबलासघ्नं दीपनं शुक्रलं लघु । तद् बालं कफपित्तघ्नं वृद्धं पित्तकरं गुरु ॥ ८० ॥

अथाङ्गारपरिपाचितवृन्ताकफलगुणानाह—

वृन्ताकं पित्तलं किञ्चिदङ्गारपरिपाचितम् । कफमेदोऽनिलामघ्नमत्यर्थं लघु दीपनम् ॥ ८१ ॥

अथ तैललवणान्वितवृन्ताकफलस्य श्वेतवृन्ताकस्य च गुणानाह—

तदेव हि गुरु स्निग्धं सतैलं लवणान्वितम् । अपरं श्वेतवृन्ताकं कुक्कुटाण्डसमं भवेत् ।
तदर्शःसु विशेषेण हितं हीनं च पूर्वतः ॥ ८२ ॥

अथ डिण्डिशः ( ढेंढस ) तस्य नाम गुणानाह—

डिण्डिशो रोमशफलो मुनिनिर्मित इत्यपि ॥ ८३ ॥
डिण्डिशो रुचिकृद्भेदी पित्तश्लेष्मापहः स्मृतः । सुशीतो वातलो रूक्षो मूत्रलश्चाश्मरीहरः ८४

अथ पिण्डारम् ( पिण्डालु ) तस्य गुणानाह—

पिण्डारं शीतलं बल्यं पित्तघ्नं रुचिकारकम् । पाके लघु विशेषेण विषशान्तिकरं स्मृतम् ॥ ८५ ॥

अथ कर्कोटी ( ककोडा, खेखसा ) तस्या नामानि गुणांश्चाह—

कर्कोटकी पीतपुष्पा महाजालीति चोच्यते । कर्कोटी मलहृत्कुष्ठहृल्लासारुचिनाशिनी ॥
श्वासकासज्वरान्हन्ति कटुपाका च दीपनी ॥ ८६ ॥

अथ डोडिका ( करेरुआ ) तस्या नामानि गुणांश्चाह—

डोडिका विषमुष्टिश्च डोडीत्यपि सुदुष्टिका ॥ ८७ ॥

डोडिका पुष्टिदावृष्या रुच्या वह्निप्रदा लघुः । हन्ति पित्तकफार्शांसि कृमिगुल्मविषामयान् ८८

अथ कण्टकारीफलम् ( कटेरी का फल ) तस्य गुणानाह—

कण्टकारीफलं तिक्तं कटुकं दीपनं लघु । रूक्षोष्णं श्वासकासघ्नं ज्वरानिलकफापहम् ॥ ८९ ॥

अथ नालशाकानि, तत्र सार्षपनालगुणानाह—

तीक्ष्णोष्णं सार्षपं नालं वातश्लेष्मव्रणापहम् । कण्डूकृमिहरं दद्रुकुष्ठघ्नं रुचिकारकम् ॥ ९० ॥

अथ कन्दशाकानि, तत्र सूरणम् ( जिमीकन्द ) तस्य नामानि गुणांश्चाह—

सूरणः कन्द ओलश्च कन्दलोऽर्शोघ्न इत्यपि । सूरणो दीपनो रूक्षः कषायः कण्डूकृत् कटुः ॥९१॥

विष्टम्भी विशदो रुच्यः कफार्शः कृन्तनो लघुः । विशेषादर्शसे पथ्यः प्लीहगुल्मविनाशनः ॥९२॥

सर्वेषां कन्दशाकानां सूरणः श्रेष्ठ उच्यते । दद्रूणां कुष्ठिनां रक्तपित्तिनां न हितो हि सः ।

सन्धानयोगं सम्प्राप्तः सूरणो गुणवत्तरः ॥ ९३ ॥

अथालुकम् ( आलू ) तस्य नामानि भेदांश्चाह—

आलुकं वीरसेनञ्च वीरं वीरालुकं तथा । आलुकमप्यालुकं तत्कथितं वीरसेनकम् ॥ ९४ ॥

काष्ठालुकशङ्खालुकहस्त्यालुकानि कथ्यन्ते । पिण्डालुकमध्वालुकरक्तालुकानि चोक्तानि ॥९५॥

*काष्ठालुकं = काठिन्ययुक्तम् ( कठालू ) । शङ्खालुकं = श्वेततायुक्तम् ( शङ्खालू ) । हस्त्यालुकं = दीर्घतायुक्तं महाशरीरम् । पिण्डालुकं = वर्त्तुलम् ( सुथनी, पिण्डालू ) । मध्वालुकं = मधुरतायुक्तं-रोमान्वितम् ( दीर्घसुथनी ) । रक्तालुकम् = ( "रक्तालू, रतालू, रतण्डा" इति च ) ९४-९६ ॥

अथालुकमात्रगुणानाह—

आलुकं शीतलं सर्वं विष्टम्भि मधुरं गुरु ॥ ९६ ॥

सृष्टमूत्रमलं रूक्षं दुर्जरं रक्तपित्तनुत् । कफानिलकरं बल्यं वृष्यं स्तम्भविवर्द्धनम् ॥ ९७ ॥

अथालुकी रक्तालुभेदः ( अरुई ) तस्या लक्षणं गुणांश्चाह—

रक्तालुभेदो या दीर्घातन्वी च प्रथिताऽऽलुकी । आलुकी बलकृत्स्निग्धा गुर्वी हृत्कफनाशिनी ॥

विष्टम्भकारिणी तैले तलिताऽतिरुचिप्रदा ॥ ९८ ॥

अथ मूलकद्वयम् ( मूली, बडी मूली ) तस्य नामानि भेदान् गुणांश्चाह—

मूलकं द्विविधं प्रोक्तं तत्रैकं लघुमूलकम् । शालामर्कटकं विस्रं शालेयं मरुसम्भवम् ॥ ९९ ॥

चाणक्यमूलकं तीक्ष्णं तथा मूलकपोतिका । नेपालमूलकं चान्यत्तद्भवेद्गजदन्तवत् ॥ १०० ॥

लघुमूलं कटूष्णं स्याद्रुच्यं लघु च पाचनम् । दोषत्रयहरं स्वर्यं ज्वरश्वासविनाशनम् ॥ १०१ ॥

नासिकाकण्ठरोगघ्नं नयनामयनाशनम् ॥ १०२ ॥

महत्तदेव रूक्षोष्णं गुरु दोषत्रयप्रदम् । स्नेहसिद्धं तदेव स्याद्दोषत्रयविनाशनम् ॥ १०३ ॥

अथ गृञ्जनम् ( गाजर ) तस्य नामगुणानाह—

गृञ्जनं गाजरं प्रोक्तं तथा नारङ्गवर्णकम् । गाजरंमधुरं तीक्ष्णं तिक्तोष्णं दीपनं लघु ॥

संग्राहि रक्तपित्तार्शोग्रहणीकफवातजित् ॥ १०४ ॥

अथ कदलीकन्दः ( केराकन्द ) तस्य नामानि गुणांश्चाह—

शीतलः कदलीकन्दो बल्यः केश्योऽम्लपित्तजित्। वह्निकृद्दाहहारी च मधुरो रुचिकारकः ॥१०५॥

अथ मानकन्दः तस्य नामगुणानाह—

मानकः स्यान्महापत्रः कथ्यन्ते तद्गुणा अथ। मानकः शोथहृच्छीतो रक्तपित्तहरो लघुः १०६

अथ वाराहीकन्दः ( गेठी ) तस्य गुणानाह—

वाराही पित्तला बल्या कट्वी तिक्ता रसायनी। आयुः शुक्राग्निकृन्मेहकफकुष्ठानिलापहा १०७

अथ हस्तिकर्णी तस्यास्तत्कन्दस्य च गुणानाह—

गजकर्णी तु तिक्तोष्णा तथा वातकफाञ्जयेत्। शीतज्वरहरी स्वादुः पाके तस्यास्तु कन्दकः १०८

पाण्डुशोथकृमिप्लीहगुल्मानाहोदरापहः। ग्रहण्यर्शोविकारघ्नो वनसूरणकन्दवत् ॥ १०९ ॥

अथ केमुकम् ( केमुआं ) तस्य गुणानाह—

केमुकं कटुकं पाके तिक्तं ग्राहि हिमं लघु ॥ ११० ॥

दीपनं पाचनं हृद्यं कफपित्तज्वरापहम्। कुष्ठकासप्रमेहास्रनाशनं वातलं कटु ॥ १११ ॥

अथ कसेरु, चिचोडं च तयोर्गुणानाह—

कसेरु द्विविधं तत्तु महद्राजकसेरुकम्। मुस्ताकृति लघु स्याद्यत्तच्चिचोडमिति स्मृतम् ॥११२॥

कसेरुकद्वयं शीतं मधुरं तुवरं गुरु। पित्तशोणितदाहघ्नं नयनामयनाशनम् ॥

ग्राहि शुक्रानिलश्लेष्मारुचिस्तन्यकरं स्मृतम् ॥ ११३ ॥

अथ शालूकम् ( भसींडा ) तस्य नामानि गुणांश्चाह—

पद्मादिकन्दः शालूकं करहाटश्च कथ्यते ॥ ११४ ॥

मृणालमूलं भिस्साण्डं जलालूकञ्च कथ्यते। शालूकं शीतलं वृष्यं पित्तदाहास्रनुद् गुरु ॥११५॥

दुर्जरं स्वादुपाकञ्च स्तन्यानिलकफप्रदम्। संग्राहि मधुरं रूक्षं भिस्साण्डमपि तद्गुणम् ॥११६॥

अथ निषिद्धशाकान्याह—

बालं ह्यनार्त्तवं जीर्णं व्याधितं कृमिभक्षितम्। कन्दं विवर्जयेत्सर्वं यद्वाऽग्न्यादिविदूषितम् ॥

अतिजीर्णमकालोत्थं रूक्षसिद्धमदेशजम् ॥ ११७ ॥

कर्कशं कोमलं चातिशीतव्यालादिदूषितम। संशुष्कं सकलं शाकं नाश्नीयान्मूलकं विना ११८

*रूक्षसिद्धम् = अतैलादिसिद्धम्। अदेशजम् = अशुभस्थानजम् ॥ ११७–११८ ॥

अथ संस्वेदजशाकानि ( पसीनासे उत्पन्नशाक ) तेषां नामानि गुणानाह—

उक्तं संस्वेदजं शाकं भूमिच्छत्रं शिलीन्ध्रकम्। क्षितिगोमयकाष्ठेषु वृक्षादिषु तदुद्भवेत् ॥११९॥

सर्वे संस्वेदजाः शीता दोषलाः पिच्छिलाश्च ते। गुरवश्छर्दतीसारज्वरश्लेष्मामयप्रदाः ॥१२०॥

श्वेताशुचिस्थलीकाष्ठवंशगोमयसम्भवाः। नाति दोषकरास्ते स्युः शेषास्तेभ्यो विगर्हिताः १२१

इति श्रीमिश्रलटकनतनयश्रीमिश्रभावविरचिते भावप्रकाशे वर्गप्रकरणे दशमः शाकवर्गः समाप्तः ॥ १० ॥

# अथैकादशो मांसवर्गः ॥ ११ ॥

अथ मांसम्, तस्य नामानि गुणांश्चाह—

मांसं तु पिशितं क्रव्यमामिषं पललं पलम्। मांसं वातहरं सर्वं बृंहणं बलपुष्टिकृत् ॥
प्रीणनं गुरु हृद्यञ्च मधुरं रसपाकयोः ॥ १ ॥

अथ मांसभेदानाह—

मांसवर्गो द्विधा ज्ञेयो जाङ्गलानूपभेदतः ॥ २ ॥

तत्र जाङ्गलमांसस्य भेदान् गुणांश्चाह—

मांसवर्गेऽत्र जङ्घाला बिलस्थाश्च गुहाशयाः। तथा पर्णमृगा ज्ञेया विष्किराः प्रतुदास्तथा ॥३॥
प्रसहा अथ च ग्राम्या अष्टौ जाङ्गलजातयः। जाङ्गला मधुरा रूक्षास्तुवरा लघवस्तथा ॥ ४ ॥
बल्यास्ते बृंहणा वृष्या दीपना दोषहारिणः। मूकतां मिन्मिनत्वं च गद्गदत्वार्दिते तथा ॥५॥
बाधिर्यमरुचिच्छर्दिप्रमेहमुखजान् गदान्। श्लीपदं गलगण्डञ्च नाशयन्त्यनिलामयान् ॥ ६ ॥

अथानूपमांसस्य भेदान् गुणांश्चाह—

कूलेचराः प्लवाश्चापि कोशस्थाः पादिनस्तथा। मत्स्या एते समाख्याताः पञ्चधाऽऽनूपजातयः ॥७॥
आनूपा मधुराः स्निग्धा गुरवो वह्निसादनाः। श्लेष्मलाः पिच्छिलाश्चापि मांसपुष्टिप्रदा भृशम् ॥
तथाऽभिष्यन्दिनस्ते हि प्रायः पथ्यतमाः स्मृताः ॥ ८ ॥

अथ जाङ्गलाः, तत्र जङ्घालानां गणनां लक्षणानि विशिष्टगुणांश्चाह—

हरिणैणकुरङ्गर्ष्यपृषतन्यङ्कुशम्बराः ॥ ९ ॥
राजीवोऽपि च मुण्डी चेत्याद्या जङ्घालसंज्ञकाः। हरिणस्ताम्रवर्णः स्यादेणः कृष्णः प्रकीर्त्तितः १०
कुरङ्ग ईषत्ताम्रः स्तादेणतुल्याकृतिर्महान्। ऋष्यो नीलाङ्गको लोके स रोज इति कीर्तितः ॥११॥
पृषतश्चन्द्रबिन्दुः स्याद्धरिणात्किञ्चिदल्पकः। न्यङ्कुर्बहुविषाणोऽथ शम्बरो गवयो महान् ॥१२॥
राजीवस्तु मृगो ज्ञेयो राजिभिःपरितो वृतः। यो मृगःशृङ्गहीनःस्यात्समुण्डीतिनिगद्यते ॥१३॥
जङ्घालाः प्रायशः सर्वे पित्तश्लेष्महराः स्मृताः। किञ्चिद्वातकराश्चापि लघवो बलवर्द्धनाः ॥१४॥

अथ बिलेशयाः ( बिलनिवासी प्राणी ) तेषां गणनां गुणांश्चाह—

गोधाशशभुजंगाखुशल्लक्याद्या बिलेशयाः। बिलेशया वातहरा मधुरा रसपाकयोः ॥
बृंहणा बद्धविण्मूत्रा वीर्योष्णाश्च प्रकीर्त्तिताः ॥ १५ ॥

अथ गुहाशयाः ( गुफानिवासी प्राणी ) तेषां गणनां गुणांश्चाह—

सिंहव्याघ्रवृका ऋक्षतरक्षुद्वीपिनस्तथा। बभ्रुजम्बूकमार्जारा इत्याद्याः स्मुर्गुहाशयाः ॥१६॥

* तरक्षुः—"तेंदुआबाघ" इति लोके। "द्वीपी—चित्रव्याघ्र" इति लोके। स्थूलपुच्छो रक्तनेत्रो बभ्रुर्भेदः स नाकुलः ॥ १६ ॥

गुहाशया वातहरा गुरूष्णा मधुराश्चते। स्निग्धा बल्या हिता नित्यंनेत्रगुह्यविकारिणाम् ॥१७॥

अथ पर्णमृगाः ( वृक्षों पर चढनेवाले प्राणी ) तेषां गणनां गुणांश्चाह—

वनौका वृक्षमार्जारो वृक्षमर्कटिकाऽऽदयः। एते पर्णमृगाः प्रोक्ताः सुश्रुताद्यैर्महर्षिभिः ॥ १८ ॥

*वनौका=वानरः। वृक्षमार्जारो=वृक्षबिडालः। वृक्षमर्कटिका='रूखी वानर' इति लोके ॥१८॥

स्मृताः वर्णकृतः वृष्याश्चक्षुष्याः शोषिणे हिताः। श्वासार्शःकासशमनाः सृष्टमूत्रपुरीषकाः॥१९॥

अथ विष्किराः ( विष्किरपक्षी ) तेषां गणनां गुणांश्चाह—

वर्तको लाववर्तीरकपिञ्जलकतित्तिराः। कुलिङ्गकुक्कुटाद्याश्च विष्किराः समुदाहृताः ॥ २० ॥
विकीर्य भक्षयन्त्येते यस्मात्तस्माद्धि विष्किराः। कपिञ्जल इति प्राज्ञैःकथितो गौरतित्तिरिः ॥२१॥
विष्किरा मधुराः शीताः कषायाः कटुपाकिनः। बल्या वृष्यास्त्रिदोषघ्ना पथ्यास्ते लघवः स्मृताः २२

अथ प्रतुदाः ( चोंच से खानेवाले पक्षी ) तेषां गणनां गुणांश्चाह—

काककण्ठकहारीतकपोतशतपत्रकाः। पारावतः खञ्जरीटः पिकाद्याः प्रतुदाः स्मृताः ॥
प्रतुद्य भक्षयन्त्येते तुण्डेन प्रतुदास्ततः ॥ २३ ॥

*हारीतः="हरियल" इति लोके। कपोतो धवलः पाण्डुः। शतपत्रो वृहच्छुकः "दार्वाघाटः" इत्यमरः। 'कठफोरा' इति लोके ॥ २३ ॥

प्रतुदा मधुराःपित्तकफघ्नास्तुवरा हिमाः। लघवो बद्धवर्चस्काः किञ्चिद्वातकराः स्मृताः ॥२४॥

अथ प्रसहाः ( दूसरे से छीनकर खानेवाले पक्षी ) तेषां गणनां गुणांश्चाह—

काको गृध्र उलूकश्च चिल्हश्च शशघातकः। चाषो भासश्च कुररइत्याद्याः प्रसहाः स्मृताः ॥२५॥

*शशघातकः="बाज" इति लोके। चाषः="नीलकण्ठ" इति लोके। भासः=गृध्रविशेषः स्यात्। कुररः="कुराङ्कुर" इति लोके ॥ २५ ॥

प्रसहाः कीर्त्तता एते प्रसह्याच्छिद्य भक्षणात् ॥ २६ ॥

प्रसहाः खलु वीर्योष्णास्तन्मांसं भक्षयन्ति ते। ते शोषभस्मकोन्मादशुक्रक्षीणा भवन्ति हि२७

अथ ग्राम्याः ( ग्राम्यपशु ) तेषां गणनां गुणांश्चाह—

छागमेषवृषाश्वाद्या ग्राम्याः प्रोक्ता महर्षिभिः। ग्राम्या वातहराः सर्वे दीपनाः कफपित्तलाः ॥
मधुरा रसपाकाभ्यां बृंहणा बलवर्द्धनाः ॥ २८ ॥

अथाऽनूपाः, तत्र कूलेचराणां गणनां गुणांश्चाह—

लुलायगण्डवाराहचमरीवारणादयः। एते कूलेचराः प्रोक्ता यतः कूले चरन्त्यपाम् ॥ २९ ॥

*लुलायो=महिषः। गण्डः=खड्गः। चमरी=चमरपुच्छी गौः ॥ २९ ॥

कूलेचरा मरुत्पित्तहा वृष्या बलावहाः। मधुराः शीतलाः स्निग्धा मूत्रलाःश्लेष्मवर्धनाः ॥३०॥

अथ प्लवाः ( पंक्तियों से आकास में उड़ने वाले पक्षी ) तेषां गणनां गुणांश्चाह—

हंससारसकारण्डबकक्रौञ्चशारिकाः ॥ ३१ ॥
नन्दीमुखी सकादम्बा बलाकाद्याः प्लवाः स्मृताः।
प्लवन्ति सलिले यस्मादेते तस्मात्प्लवाः स्मृताः ॥ ३२ ॥

*कारण्डः=कपर्दिकाख्यो बृहद्धंसभेदः। क्रौञ्चः=शरद्विहङ्गः स्यात्-"टेंक" इति लोके। शारिका="सिन्धू" इति लोके ॥

स्थूला कठोरा वृत्ता च यस्याश्चञ्चूपरि स्थिता। गुटिका जम्बुसदृशी प्रोक्ता नन्दीमुखीति सा ॥१॥

प्लवाः पित्तहराः स्निग्धा मधुरा गुरवो हिमाः । वातश्लेष्मप्रदाश्चापि बलशुक्रकराः सराः ॥ ३३ ॥

अथ कोशस्थाः ( ढकनेके मध्यमें रहनेवाले प्राणी ) तेषां गणनां गुणांश्चाह—

शङ्खः शङ्खनखश्चापि शुक्तिशम्बूककर्कटाः । जीवा एवंविधाश्चान्ये कोशस्थाः परिकीर्त्तिताः ॥ ३४ ॥

* शङ्खनखः = क्षुद्रशङ्खः ॥ ३४ ॥

कोशस्था मधुराः स्निग्धा वातपित्तहरा हिमाः । बृंहणा बहुवर्चस्का वृष्याश्च बलवर्द्धनाः ॥ ३५ ॥

अथ पादिनः ( पांवोंके प्राणी ) तेषां गणनां गुणांश्चाह—

कुम्भीरकूर्मनक्राश्च गोधामकरशङ्कवः । घण्टिकः शिशुमारश्चेत्यादयः पादिनः स्मृताः ॥ ३६ ॥

* कुम्भीरो = मारको जलजन्तुः । "कूर्मः = कच्छपः । नक्रः = "नाक" इति लोके ( सरय्वादिनदीषु बहुलः ) गोधा = "गोहि" जलजन्तुः । मकरः = "मगर" इति लोके । शङ्कुः = "शाकुचा" इति लोके । घण्टिकः = "घडियाल" इति लोके । शिशुमारः = 'सूस' इति लोके ॥

पादिनोऽपि च ये ते तु कोशस्थानां गुणैः समाः ॥ ३७ ॥

अथ मत्स्याः ( मछली ) तेषां नामानि गुणांश्चाह—

मत्स्यो मीनो विकारश्च झषो वैसारिणोऽण्डजः । शकुली पृथुरोमा च स सुदर्शन इत्यपि ॥ ३८ ॥
रोहिताद्यास्तु ये जीवास्ते मत्स्याः परिकीर्त्तिताः ॥ मत्स्याः स्निग्धोष्णमधुरा गुरवः कफपित्तलाः
वातघ्ना बृंहणा वृष्या रोचका बलवर्द्धनाः । मद्यव्यवायसक्तानां दीप्ताग्नीनाञ्च पूजिताः ॥ ४० ॥

अथ जङ्घालाः ( जांघवाले प्राणी ) तत्र हरिणस्य मांसगुणानाह—

हरिणः शीतलो बद्धविण्मूत्रो दीपनो लघुः । रसे पाके च मधुरः सुगन्धिः सन्निपातहा ॥ ४१ ॥

अथैणहरिणः ( काला हरिण ) तस्य मांसगुणानाह—

एणः कषायो मधुरः पित्तासृक्कफवातहृत् । संग्राही रोचनो बल्यो ज्वरप्रशमनः स्मृतः ॥ ४२ ॥

अथ कुरङ्गः, तस्य मांसगुणानाह—

कुरङ्गो बृंहणो बल्यः शीतलः पित्तहृद् गुरुः । मधुरो वातहृद् ग्राही किञ्चित्कफकरः स्मृतः ॥ ४३ ॥

अथ ऋष्यः ( रोझ ) तस्य नामानि मांसगुणांश्चाह—

ऋष्यो नीलाण्डकश्चापि गवयो रोझ इत्यपि । गवयो मधुरो बल्यः स्निग्धोष्णः कफपित्तलः ॥ ४४

अथ पृषतः ( चित्तालमृग ) तस्य मांसगुणानाह—

पृषतस्तु भवेत्स्वादुर्ग्राहकः शीतलो लघुः । दीपनो रोचनः श्वासज्वरदोषत्रयास्रजित् ॥ ४५ ॥

अथ न्यङ्कुः ( बारहसिंग ) तस्य मांसगुणानाह—

न्यङ्कुः स्वादुर्लघुर्बल्यो वृष्यो दोषत्रयापहः ॥ ४६ ॥

अथ साबरम् , तस्य मांसगुणानाह—

साबरं पललं स्निग्धं शीतलं गुरु च स्मृतम् । रसे पाके च मधुरं कफदं रक्तपित्तहृत् ॥ ४७ ॥

अथ राजीवः, तस्य मांसगुणानाह—

राजीवस्तु गुणैर्ज्ञेयः पृषतेन समो जनैः ॥ ४८ ॥

अथ मुण्डी, तस्य गुणानाह—

मुण्डी तु ज्वरकासास्रक्षयश्वासापहो हिमः ॥ ४९ ॥

अथ बिलेशयाः, तत्र शशः ( खरगोश ) तस्य नामानि मांसगुणांश्चाह—

लम्बकर्णः शशः शूली लोमकर्णो बिलेशयः । शशः शीतो लघुर्ग्राही रूक्षः स्वादुः सदा हितः
वह्निकृत्कफपित्तघ्नो वातसाधारणैः स्मृतः । ज्वरातीसारशोषास्रश्वासामयहरश्च सः ॥ ९० ॥

अथ सेधा ( सेह, साही ) तस्या नामानि मसांगुणांश्चाह—

सेधा तु शल्यकः श्वावित्कथ्यन्ते तद्गुणा अथ । शल्यकः श्वासकासास्रशोषदोषत्रयापह ॥९१॥

अथ पक्षिणः ( पक्षियां ) तेषां नामानि मांसगुणांश्चाह—

पक्षी खगो विहङ्गश्च विहगश्च विहङ्गमः । शकुनिर्विः पतत्री च विष्किरो विकिरोऽण्डजः ॥
धान्याङ्कुरचरा येऽत्र तेषां मांसं लघूत्तमम् । आनूपं बलकृन्मासं स्निग्धं गुरुतरं स्मृतम् ॥९२॥

अथ तेषु विष्किरेषु वर्तकः ( बटेर ) तस्य नामानि मांसगुणांश्चाह—

वर्तीको वर्त्तकश्चिन्नस्ततोऽन्या वर्त्तका स्मृता । वर्तकोऽग्निकरः शीतो ज्वरदोषत्रयापहः ॥
सुरुच्यः शुक्रदो बल्यो वर्त्तकाऽल्पगुणा ततः ॥ ९३ ॥

अथ लावः ( लवा ) तस्य मांसगुणसहितान् भेदान् मांसगुणांश्चाह—

लावा विष्किरवर्गेषु ते चतुर्धा मता बुधैः ॥ ९४ ॥

पांशुलो गौरकाऽन्यस्तु पौण्ड्रको दर्भरस्तथा। लावा वह्निकराः स्निग्धा गरघ्ना ग्राहका हिताः ९५
पांशुलः श्लेष्मलस्तेषु वीर्योष्णोऽनिलनाशनः । गौरो लघुतरो रूक्षो वह्निकारो त्रिदोषजित् ९६
पौण्ड्रकः पित्तकृत्किञ्चिल्लघुर्वातकफापहः । दर्भरो रक्तपित्तघ्नो हृदामयहरो हिमः ॥ ९७ ॥

अथ वार्त्तीकः ( वगेरा, बटेरा ) तस्य नामानि मांसगुणानाह—

वर्त्तीको वर्तिचटको वार्त्तीकश्चैव स स्मृतः । वर्त्तीको मधुरः शीतो रूक्षश्च कफपित्तनुत् ॥ ९८ ॥

अथ कृष्णतित्तिरिर्गौरतित्तिरिश्च ( तीतर ) तयोर्नामानि मांसगुणानाह—

तित्तिरिः कृष्णवर्णः स्यात्स तु गौरः कपिञ्जलः । तित्तिरिर्बलदो ग्राही हिक्कादोषत्रयापहः ॥
श्वासकासज्वरहरस्तस्माद्गौरोऽधिको गुणैः ॥ ९९ ॥

अथ चटकः ( गवरैया, चिडा ) तस्य नामानि मांसगुणानाह—

चटकः कलविङ्कः स्यात्कुलिङ्कः कालकण्ठकः ॥ ६० ॥

कुलिङ्कः शीतलः स्निग्धः स्वादुः शुक्रकफप्रदः । सन्निपातहरो वेश्मचटकश्चातिशुक्रलः ॥६१॥

अथ कुक्कुटो वनकुक्कुटश्च ( मुरगा-वनमुरगा ) तयोर्नामानि मांसगुणांश्चाह—

कुक्कुटः कृकवाकुः स्यात्कालज्ञश्चरणायुधः । ताम्रचूडस्तथा दक्षो यामनादो शिखाण्डकः ॥६२॥
कुक्कुटो बृंहणः स्निग्धो वीर्योष्णोऽनिलहृद्गुरुः। चक्षुष्यः शुक्रकफकृद् बल्यो वृष्यः कषायकः ६३
आरण्यकुक्कुटः स्निग्धो बृंहणः श्लेष्मलो गुरुः । वातपित्तक्षयवमिविषमज्वरनाशनः ॥ ६४ ॥

अथ प्रतुदाः तत्र हारीतः, ( हरियल ) तस्य नामानि मांसगुणानाह—

हारीतो रक्तपीतः स्याद्धरितोऽपि स कथ्यते । हारीतो रूक्ष उष्णश्च रक्तपित्तकफापहः ।
स्वेदस्वरकरः प्रोक्त ईषद्वातकरश्च सः ॥ ६५ ॥

अथ पाण्डुर्धवलपाण्डुश्च ( पण्डाक्ता ) तयोर्नामानि मांसगुणानाह—

पाण्डुस्तु द्विविधो ज्ञेयश्चित्रपक्षः कलध्वनिः ॥ ६६ ॥

द्वितीयो धवलः प्रोक्तः स कपोतः स्फुटध्वनिः । चित्रपक्षः कफहरो वातघ्नो ग्रहणीप्रणुत् ॥६७॥
धवलः पाण्डुरद्विष्टो रक्तपित्तहरो हिमः । रसे पाके च मधुरः संग्राही वातशान्तिकृत् ॥ ६८ ॥

अथ मयूरः ( मोर ) तस्य नामानि मांसगुणांश्चाह—

मयूरश्चन्द्रकी केकी मेघरावो भुजङ्गभुक् । शिखी शिखावलो बर्ही शिखण्डी नीलकण्ठकः ॥६९॥
शुक्लापाङ्गः कलापी च मेघनादानुलास्यपि । रसे पाके च मधुरः संग्राही वातशान्तिकृत् ॥७०॥

अथ पारावतः ( कबूतर, परेवा ) तस्य नामानि मांसगुणांश्चाह—

पारावातः कलरवः कपोतो रक्तलोचनः । पारावतो गुरुः स्निग्धो रक्तपित्तानिलापहः ॥
संग्राही शीतलस्तज्ज्ञैः कथितो वीर्यवर्द्धनः ॥ ७१ ॥

अथ पक्ष्यण्डानि ( पक्षियोंके अण्डे ) तेषां गुणानाह—

नातिस्निग्धानि वृष्याणि स्वादुपाकरसानि च । वातघ्नान्यतिशुक्राणि गुरूण्यण्डानि पक्षिणाम्

अथ ग्राम्याः, तत्रच्छागः ( बकरा ) तस्य नामानि मांसगुणांश्चाह—

छागलो बर्करश्छागो बस्तोऽजश्छेलकः स्तुभः ॥ ७३ ॥
अजा छागी स्तुभा चापि छेलिका च गलस्तनी । छागमांसं लघु स्निग्धं स्वादुपाकं त्रिदोषनुत्
नातिशीतमदाहि स्यात्स्वादु पीनसनाशनम् । परं बलकरं रुच्यं बृंहणं वीर्यवर्द्धनम् ॥ ७५ ॥

अथाप्रसूताजाया बालकाजातुस्तस्य च मांसगुणानाह—

अजायास्त्वप्रसूताया मांसं पीनसनाशनम् । शुष्ककासेऽरुचौ शोषे हितमग्नेश्च दीपनम् ॥७६॥
अजासुतस्य बालस्य मांसं लघुतरं स्मृतम् । हृद्यं ज्वरहरं श्रेष्ठं सुखदं बलदं भृशम् ॥ ७७ ॥

अथ निष्कासिताण्ड-वृद्ध-व्याधिमृतानां छागानां मांसस्य छागमुण्डस्य च गुणानाह—

मांसं निष्कासिताण्डस्य छागस्य कफकृद्गुरु । स्रोतःशुद्धिकरं बल्यं मांसदं वातपित्तनुत् ॥७८॥
वृद्धस्य वातलं रूक्षं तथा व्याधिमृतस्य च । ऊर्ध्वजत्रुविकारघ्नं छागमुण्डं रुचिप्रदम् ॥७९॥

अथ मेषः ( मेढा ) तस्य नामान्यण्डविहीनस्य तस्य मांसगुणांश्चाह—

मेढ्रो मेढो हुडो मेष उरणोऽप्येडकोऽपि च । अविर्वृष्णिस्तथोर्णायुः कथ्यन्ते तद्गुणा अथ ८०
मेषस्य मांसं पुष्टौ स्यात्पित्तश्लेष्मकरं गुरु । तस्यैवाण्डविहीनस्य मांसं किञ्चिल्लघु स्मृतम् ८१

अथैडकः ( दुम्बा मेढा ) तस्य नामानि तद्भेदस्य च मांसगुणांश्चाह—

एडकः पृथुशृङ्गः स्यान्मेदःपुच्छस्तु दुम्बकः । एडकस्य पलं ज्ञेयं मेषामिषसमं गुणैः ॥ ८२ ॥
मेदःपुच्छोद्भवं मांसं हृद्यं वृष्यं श्रमापहम् । पित्तश्लेष्मकरं किञ्चिद्वातव्याधिविनाशनम् ॥८३।

अथ वृषभः ( बैल ) तस्य नामानि मांसगुणानाह—

बलीवर्दस्तु वृषभ ऋषभश्च तथा वृषः । अनड्वान्सौरभेयोऽपि गौरुक्षा भद्र इत्यपि ॥८४॥
सुरभिः सौरभेयी च माहेयी गौरुदाहृता । गोमांसं सुगुरु स्निग्धं पित्तश्लेष्मविवर्द्धनम् ॥
बृंहणं वातहृद् बल्यमपथ्यं पीनसप्रणुत् ॥ ८५ ॥

अथाश्वः ( घोड़ा ) तस्य नामानि मांसगुणानाह—

घोटकेऽप्यश्वतुरगास्तुरङ्गाश्च तुरङ्गमाः । वाजिवाहार्वगन्धर्वहयसैन्धवसप्तयः ॥ ८६ ॥
अश्वमांसन्तु तुवरं वह्निकृत्कफपित्तकम् । वातहृद् बृंहणं बल्यं चक्षुष्यं मधुरं लघु ॥ ८७ ॥

अथ कूलेचराः, तत्र महिषम् ( भैसा ) तस्य नामानि मांसगुणानाह—

महिषो घोटकारिः स्यात्कासरश्च रजस्वलः ॥ ८८ ॥

पीनस्कन्धःकृष्णकायो लुलायो यमवाहनः। माहिषस्यामि 'स्वादु स्निग्धोष्णं वातनाशनम् ८९

निद्राशुक्रप्रदं बल्यं तनुदार्ढ्यकरं गुरु । वृष्यञ्च सुष्टविण्मू 'वातपित्तास्ननाशनम् ॥ ९० ॥

अथ मण्डूकः ( मेंढक, मेघा ) तस्य नामानि मांसगुणाँश्चाह—

मण्डूकः प्लवगो भेको वर्षाभूर्दर्दुरो हरिः । मण्डूकः श्लेष्मलो नातिपित्तलो बलकारकः ॥९१॥

## अथ पादिनः ।

तत्र कच्छपः ( कछुआ ) तस्य नामानि मांसगुणानाह—

कच्छपो गूढपात्कूर्मः कमठो दृढपृष्ठकः । कच्छपो बलदो वातपित्तनुत्पुंस्त्वकारकः ॥ ९२ ॥

अथ विशेषाः, तत्र सद्योहतस्य मांसगुणानाह—

सद्योहतस्य मांसं स्याद्व्याधिघाति यथाऽमृतम् । वयस्यं बृंहणं सात्म्यमन्यथा तद् विवर्जयेत् ॥

अथ स्वयं मृतस्य मांसगुणानाह—

स्वयं मृतस्य चाबल्यमतीसारकरं गुरु ॥ ९४ ॥

अथ वृद्धबालयोर्मांसगुणानाह—

वृद्धानां दोषलं मांसं बालानां बलदं लघु ॥ ९५ ॥

अथ सर्पव्यालदष्टयोर्मांसयोः शुष्कमांसस्य च गुणानाह—

सर्पदष्टस्य मांसञ्च शुष्कमांसं त्रिदोषकृत् । त्रिदोषकृद् व्यालदष्टं शुष्कं शूलकरं परम् ॥ ९६ ॥

अथ विषादिमृतस्य मांसगुणानाह—

विषाम्बुरुङ्मृतस्यैतन्मृत्युदोषरुजाकरम् । क्लिन्नमुत्क्लेशजनकं कृशं वातप्रकोपणम् ॥

तोयपूर्णं शिराजालं मृतमप्सु त्रिदोषकृत् ॥ ९७ ॥

अथ जात्यादिपरत्वेन मांसस्य गुणानाह—

विहङ्गेषु पुमाञ्छ्रेष्ठः स्त्री चतुष्पदजातिषु । परार्द्धं लघु पुंसां स्यात्स्त्रीणां पूर्वार्द्धमादिशेत् ॥

देहमध्यं गुरुप्रायं सर्वेषां प्राणिनां स्मृतम् ॥ ९८ ॥

पक्षक्षेपाद्विहङ्गानां तदेव लघु कथ्यते । गुरूण्यण्डानि सर्वेषां गुर्वी ग्रीवा च पक्षिणाम् ॥ ९९ ॥

उरःस्कन्धोदरं कुक्षी पादौ पाणी कटी तथा । पृष्ठत्वग्यकृदन्त्राणि गुरूणीह यथोत्तरम् ॥ १०० ॥

लघु वातकरं मांसं खगानां धान्यचारिणाम् । मत्स्याशिनां पित्तकरं वातघ्नं गुरु कीर्त्तितम्१०१

पलाशिनां श्लेष्मकरं लघुरूक्षमुदारितम् । बृंहणं गुरु वातघ्नं तेषामेव पलाशिनाम् ॥ १०२ ॥

तुल्यजातिष्वल्पदेहा महादेहेषु पूजिताः । अल्पदेहेषु शस्यन्ते तथैव स्थूलदेहिनः ॥ १०३ ॥

## अथ मत्स्याः ।

तत्र रोहितः ( रोहू ) तस्य लक्षणं मांसमुण्डयोर्गुणांश्चाह—

रक्तोदरो रक्तमुखो रक्ताक्षो रक्तपक्षतिः । कृष्णपुच्छो झषः श्रेष्ठो रोहितः कथितो बुधैः ॥१०४॥

रोहितः सर्वमत्स्यानां वरो वृष्योऽर्दितार्त्तिजित् । कषायानुरसः स्वादुर्वातघ्नो नातिपित्तकृत् ॥

ऊर्ध्वजत्रुगतान् रोगान् हन्याद्रोहितमुण्डकम् ॥ १०५ ॥

अथ शिलींध्रः ( सिलन्ध ) तस्य मांसगुणानाह—

शिलीन्ध्रः श्लेष्मलो बल्यो विपाके मधुरो गुरुः । वातपित्तहरो हृद्य आमवातकरश्च सः ॥१०६॥

अथ भकुरः ( भाकुर ) तस्य मांसगुणानाह—

भकुरो मधुरः शीतो वृष्यः श्लेष्मकरो गुरुः । विष्टम्भजनकश्चापि रक्तपित्तहरः स्मृतः ॥ १०७ ॥

अथ मोचिका ( मोई ) तस्य मांसगुणानाह—

मोचिका वातहृद् बल्या बृंहणी मधुरा गुरुः । पित्तहृत्कफकृद्रुच्या वृष्या दीप्तामये हिता १०८

अथ पाठीनः ( बुआरी, बोयल ) तस्य मांसगुणानाह —

पाठीनः श्लेष्मलो बल्यो निद्रालुः पिशिताशनः । दूषयेद्रुधिरं पित्तं कुष्ठरोगं करोति च ॥१०९

अथ शृङ्गी ( सींगी ) तस्या मांसगुणानाह—

शृङ्गी तु वातशमनी स्निग्धा श्लेष्मप्रकोपणी।रसे तिक्ता कषाया च लघ्वी रुच्या स्मृता बुधैः११०

अथेल्लीसः ( इलसा ) तस्य मांसगुणानाह—

इल्लीसो मधुरः स्निग्धो रोचनो वह्निवर्द्धनः । पित्तहृत्कफकृत्किञ्चिल्लघुर्वृष्योऽनिलापहः १११

अथ शष्कुली ( सौरी ) तस्या मांसगुणानाह—

शष्कुली ग्राहिणी हृद्या मधुरा तुवरा स्मृता ॥ ११२ ॥

अथ गर्गरः ( गर्गरा ) तस्य मांसगुणानाह—

गर्गरः पित्तलः किञ्चिद्वातजित्कफकोपनः ॥ ११३ ॥

अथ कविका ( कवई ) तस्या मांसगुणानाह—

कविका मधुरा स्निग्धा कफघ्नी रुचिकारिणी । किञ्चित्पित्तकरी वातनाशिनी वह्निवर्द्धिनी ११४

अथ वर्मिमत्स्यः ( वर्मी ) तस्य मांसगुणानाह—

वर्मिमत्स्यो हरेद्वातं पित्तं रुचिकरो लघुः ॥ ११५ ॥

अथ दण्डमत्स्यः ( दण्डारी ) तस्य मांसगुणानाह—

दण्डमत्स्यो रसे तिक्तः पित्तरक्तं कफं हरेत् । वातसाधारणः प्रोक्तः शुक्रलो बलवर्द्धनः॥११६॥

अथैरङ्गः ( अरंगी ) तस्य मांसगुणानाह—

एरङ्गो मधुरः स्निग्धो विष्टम्भी शीतलो लघुः ॥ ११७ ॥

अथ महाशफरः ( पपता ) तस्य मांसगुणानाह—

महाशफरसंज्ञस्तु तिक्तः पित्तकफापहः । शिशिरो मधुरो रुच्यो वातसाधारणः स्मृतः ॥११८॥

अथ गरघ्नी ( गरई ) तस्या मांसगुणानाह—

गरघ्नी मधुरा तिक्ता तुवरा वातपित्तहृत् । कफघ्नी रुचिकृल्लघ्वी दीपनी बलवीर्यकृत् ॥ ११९ ॥

अथ मद्गुरः ( मँगुरी ) तस्य मांसगुणानाह—

मद्गुरो वातहृद् बल्यो वृष्यः कफकरो लघुः ॥ १२० ॥

अथ सपादमत्स्यः (टेंगरा) तस्य मांसगुणानाह—

सपादमत्स्यो मेधाकृन्मेदः क्षयकरश्च सः । वातपित्तकरश्चापि रुचिकृत्परमो मतः ॥ १२१ ॥

अथ प्रोष्ठी ( "शफरी, पुंठी" इति च ) तस्या मांसगुणानाह—

प्रोष्ठी तिक्ता कटुः स्वादुः शुक्रदा कफवातजित् ।
स्निग्धाऽऽस्यकण्ठरोगघ्नी रोचनी च लघुः स्मृता ॥ १२२ ॥

अथ क्षुद्रमत्स्याः तेषां मांसगुणानाह—

क्षुद्रमत्स्याः स्वादुरसा दोषत्रयविनाशनाः । लघुपाका रुचिकरा बलदास्ते हिता मताः ॥१२३॥

अथातिक्षुद्रमत्स्याः तेषां मांसगुणानाह—

अतिसूक्ष्माः पुंस्त्वहरा रुच्याः कासानिलापहाः ॥ १२४ ॥

अथ मत्स्यगर्भः ( मत्स्याण्डः ) तस्य गुणानाह—

मत्स्यगर्भो भृशं वृष्यः स्निग्धः पुष्टिकरो लघुः ।।कफमेदः प्रदो बल्यो ग्लानिकृन्मेहनाशनः।१२५

अथ शुष्कमत्स्याः ( सूखी मछली ) तेषां मांसगुणानाह—

शुष्कमत्स्या नवा बल्या दुर्जरा विड्विबन्धिनः ॥ १२६ ॥

अथ दग्धमत्स्यः ( भूँजी मछली ) तस्य मांसगुणानाह—

दग्धमत्स्यो गुणैः पुष्टिकृद् बलवर्द्धनः ॥ १२७ ॥

अथ कूपजादिमत्स्याः तेषां मांसगुणानाह—

कौपमत्स्याः शुक्रमूत्रकुष्ठश्लेष्मविवर्द्धनाः । सरोजा मधुराः स्निग्धा बल्या वातविनाशनाः ॥
नादेया बृंहणा मत्स्या गुरवोऽनिलनाशनाः । रक्तपित्तकरावृष्याःस्निग्धोष्णाः स्वल्पवर्चसः ॥
चौञ्ज्याः पित्तकराः स्निग्धा मधुरा लघवो हिमाः। ताडागा गुरवो वृष्याः शीतला मलमूत्रदाः॥
ताडागवन्निर्झरजा बलायुर्मतिदक्कराः ॥ १२८ ॥

अथर्तुविशेषे मत्स्यविशेषाणां मांसगुणानाह—

हेमन्ते कूपजा मत्स्याः शिशिरे सारसा हिताः । वसन्ते ते तु नादेया ग्रीष्मे चौञ्ज्यसमुद्भवाः ॥
तडागजाता वर्षासु तास्वपथ्या नदीभवाः । नैर्झराः शरदि श्रेष्ठा विशेषोऽयमुदाहृतः ॥१२९॥

इति श्रीमिश्रलटकनतनयश्रीमिश्रभावविरचिते भावप्रकाशे वर्गकरणे एकादशो मांसवर्गः समाप्तः ॥ ११ ॥

---

## अथ द्वादशः कृतान्नवर्गः ॥ १२ ॥

तत्रान्नानां साधनप्रकारान् सिद्धानां गुणांश्चाह । तत्र परिभाषामाह—

समवायिनि हेतौ ये मुनिभिर्गणिता गुणाः । कार्य्येऽपि तेऽखिला ज्ञेयाः परिभाषेति भाषिताः १
क्वचित्संस्कारभेदेन गुणभेदो भवेद्यतः । भक्तं लघु पुराणस्य शालेस्तच्चिपिटो गुरुः ॥ २ ॥
क्वचिद्योगप्रभावेण गुणान्तरमपेक्षते । कृदन्नं गुरु सर्पिश्च तद्युक्तं सुपचं भवेत ॥ ३ ॥

अथ भक्तम् ( भात ) तस्य नामानि साधनं गुणांश्चाह—

भक्तमन्नं तथाऽन्धश्च क्वचित्कूरं च कीर्त्तितम् ।
ओदनोऽस्त्री स्त्रियां भिस्सा दीदिविः पुंसि भाषितः ॥ ४ ॥
सुधौतांस्तण्डुलान् स्फीतांस्तोये पञ्चगुणे पचेत् । तदुक्तं प्रस्तुतं चोष्णं विशदं गुणवन्मतम् ॥५॥

भक्तं वह्निकरं पथ्यं तर्पणं रोचनं लघु । अधौतमसृतं शीतं गुर्वरुच्यं कफप्रदम् ॥ ६ ॥

अथ दाली ( दाल ) तस्या नामानि साधनं गुणांश्चाह—

दलितास्तु शमीधान्यं दालिर्दाली स्त्रियामुभे । दाली तु सलिले सिद्धा लवणार्द्रकहिङ्गुभिः ॥ ७ ॥

संयुक्ता सूपनाम्नी स्यात्कथ्यन्ते तद्गुणा अथ । सूपो विष्टम्भको रूक्षः शीतस्तु स विशेषतः ।

निस्तुषो भृष्टसंसिद्धो लाघवं सुतरां भजेत् ॥ ८ ॥

अथ कृशरा ( खिचरी ) तस्याः साधनं गुणांश्चाह—

तण्डुला दालिसंमिश्रा लवणार्द्रकहिङ्गुभिः । संयुक्ता सलिले सिद्धा कृशरा कथिता बुधैः ॥ ९ ॥

कृशरा शुक्रला बल्या गुरुः पित्तकफप्रदा । दुर्जरा बुद्धिविष्टम्भमलमूत्रकरी स्मृता ॥ १० ॥

अथ तापहरी ( ताताहरी ) तस्याः साधनं गुणांश्चाह—

घृते हरिद्रासंयुक्ते माषजां भर्जयेद्वटीम् ॥ ११ ॥

तण्डुलांश्चापि निर्धौतान्सहैव परिभर्जयेत् । सिद्धयोग्यं जलं तत्र प्रक्षिप्य कुशलः पचेत् ॥ १२ ॥

लवणार्द्रकहिङ्गूनि मात्रया तत्र निक्षिपेत् ।

एषा सिद्धिं समायाता प्रोक्ता तापहरी बुधैः ॥ १३ ॥

भवेत्तापहरी बल्या वृष्या श्लेष्माणमाचरेत् । बृंहणी तर्पणी रुच्या गुर्वी पित्तहरी स्मृता ॥ १४ ॥

अथ क्षीरिका ( खीर ) तस्या नामानि साधनं गुणांश्चाह—

पायसं परमान्नं स्यात्क्षीरिकाऽपि तदुच्यते । शुद्धेऽर्द्धपक्वे दुग्धे तु घृताक्तांस्तण्डुलान्पचेत् ॥ १५ ॥

ते सिद्धाः क्षीरिका ख्याता ससिताऽऽज्ययुतोत्तमा । क्षीरिका दुर्जरा प्रोक्ता बृंहणी बलवर्द्धिनी ॥

विष्टम्भिनी हरेत् पित्तं रक्तपित्ताग्निमारुतान् ॥ १६ ॥

अथ नारिकेरक्षीरी ( नारियलकी खीर ) तस्याः साधनं गुणांश्चाह—

नारिकेरं तनूकृत्य छिन्नं पयसि गोः क्षिपेत् । सितागव्याज्यसंयुक्तं तत्पचेन्मृदुनाऽग्निना ॥ १७ ॥

नारिकेरोद्भवा क्षीरी स्निग्धा शीताऽतिपुष्टिदा । गुर्वी सुमधुरा वृष्या रक्तपित्तानिलापहा ॥ १८ ॥

अथ सेविका ( सेंवई ) तस्याः साधनं गुणांश्चाह—

समिता वर्त्तिकाः कृत्वा सुसूक्ष्मा यवसन्निभाः । शुष्काः क्षीरेण संसाध्या भोज्या घृतसिताऽन्विताः ।

सेविका तर्पणी बल्या गुर्वी पित्तानिलापहा । ग्राहिणी सन्धिकृद्रुच्या तां खादेन्नातिमात्रया ॥ २० ॥

अथ समिता ( मैदा ) तस्याः साधनमाह—

गोधूमा धवला धौताः कुट्टिताः शोषितास्ततः । प्रोक्षिता यन्त्रनिष्पिष्टाश्चालिताः समिताः स्मृताः

अथ मण्डकः ( मण्डा ) तस्य साधनमाह—

वारिणा कोमलां कृत्वा समितां साधु मर्दयेत् । हस्तचालनया तस्या लोप्त्रीं सम्यक्प्रसारयेत् ॥ २२ ॥

अधोमुखघटस्यैतद्विस्तृतं प्रक्षिपेद् बहिः । मृदुना वह्निना साध्यः सिद्धो मण्डक उच्यते ॥ २३ ॥

*लोप्त्री 'लोई' इति लोके ॥ २२–२३ ॥

अथ सानुपानं मण्डकगुणानाह—

दुग्धेन साज्यखण्डेन मण्डकं भक्षयेन्नरः । अथवा सिद्धमांसेन सतक्रवटकेन वा ॥ २४ ॥

मण्डको बृंहणो वृष्यो बल्यो रुचिकरो भृशम् । पाकेऽपि मधुरो ग्राही लघुर्दोषत्रयापहः ॥ २५ ॥

अथ पोलिका (पूरी) (कुत्रापि "दूनौरी" इति च) तस्याः साधनं गुणांश्चाह—

कुर्यात्समितयाऽतीव तन्वीं पर्पटिका ततः ॥ २६ ॥

स्वेदयेत्तप्तके तां तु पोलिकां जगदुर्बुधाः ॥ तांखादेल्लप्सिकायुक्तां तस्या मण्डकवद् गुणाः॥२७॥

अथ लप्सिका (लप्सी) तस्याः साधनं गुणांश्चाह—

समितां सर्पिषा भृष्टां शर्करां पयसि क्षिपेत् । तस्मिन्घनीकृते न्यस्येल्लवंगं मरिचादिकम् ॥

सिद्धैषा लप्सिका ख्याता गुणानस्या वदाम्यहम् ॥ २८ ॥

लप्सिका बृंहणी वृष्या बल्या पित्तानिलापहा । स्निग्धा श्लेष्मकरी गुर्वी रोचनी तर्पणी परम्

अथ रोटिका (रोटी) तस्याः सधनं गुणांश्चाह—

शुष्कगोधूमचूर्णेन किञ्चित्पुष्टाञ्च पोलिकाम् ॥ ३० ॥

तप्तके स्वेदयेत्कृत्वा भूर्यङ्गारेऽपि तां पचेत्। सिद्धैषा रोटिका प्रोक्ता गुणानस्याः प्रचक्ष्महे ॥३१॥

रोटिका बलकृद्रुच्या बृंहणी धातुवर्द्धनी । वातघ्नी कफकृद् गुर्वी दीप्ताग्नीनां प्रपूजिता ॥ ३२ ॥

*तप्तकं="तावा" इति लोके ॥ ३०–३२ ॥

अथाङ्गारकर्कटी (बाटी) तस्याः साधनं गुणांश्चाह—

शुष्कगोधूमचूर्णन्तु साम्बु गाढं विमर्दयेत् । विधाय वटकाकारं निर्धूमेऽग्नौ शनैः पचेत् ॥ ३३ ॥

अङ्गारकर्कटी ह्येषा बृंहणी शुक्रला लघुः । दीपनी कफकृद्बल्या पीनसश्वासकासजित् ॥ ३४ ॥

अथ यवरोटिका, तस्या गुणानाह—

यवजा रोटिका रुच्या मधुरा विशदा लघुः । मलशुक्रानिलकरी बल्या हन्ति कफामयान् ॥३५॥

अथ बलभद्रिका (चमसीरोटिका) (छिल्केदार उडद की रोटी) तस्याः साधनं गुणांश्चाह—

चूर्णं यच्छुष्कमाषाणां चमसी साऽभिधीयते । चमसीरचिता रोटी कथ्यते बलभद्रिका ॥

रूक्षोष्णा वातला बल्या दीप्ताग्नीनां सुपूजिता ॥ ३६ ॥

अथ धूमसी (धुआंस) तस्याः साधनविधिमाह—

माषाणां दालयस्तोयेस्थापितास्त्यक्तकञ्चुकाः। आतपे शोषिता यन्त्रेपिष्टास्ता धूमसी स्मृता

अथ झर्झरी, तस्याः साधनं गुणांश्चाह—

धूमसीरचिता चैव प्रोक्ता झर्झरिका बुधैः । झर्झरी कफपित्तघ्नी किञ्चिद्वातकरी स्मृता ॥ ३८ ॥

अथ चणकरोटिका (चनेकी रोटी) तस्या गुणानाह—

चणकया रोटिका रूक्षा श्लेष्मपित्तास्रनुद् गुरुः।विष्टम्भिनी न चक्षुष्या तद्गुणा चापि शष्कुली

अथ पिष्टिका (पीठी) तस्या निर्माणप्रकारमाह—

दालिः संस्थापिता तोये ततोऽपहृतकञ्चुका । शिलाया साधु सम्पिष्टा पिष्टिका कथिता बुधैः।

अथ वेढमिका (वेढई) तस्याः साधनं गुणांश्चाह—

माषपिष्टिकया पूर्णगर्भा गोधूमचूर्णतः । रचिता रोटिका सैव प्रोक्ता वेढमिका बुधैः ॥ ४१ ॥

भवेद्वेढमिका बल्या वृष्या रुच्याऽनिलापहा । उष्णा सन्तर्पणी गुर्वी बृंहणी शुक्रला परम्॥४२॥

भिन्नमूत्रमला स्तन्यमेदः पित्तकफप्रदा । गुदकीलार्दितश्वासपक्तिशूलानि नाशयेत् ॥ ४३ ॥

अथ पर्पटः ( पापड ) तत्र माषोद्भवस्य तस्य साधनं गुणांश्चाह--

मुसलोशचिता हिङ्गुहरिद्रालवणैर्युताः । जीरकस्वर्जिकाम्याञ्च तनूकृत्य च वेल्लिताः ॥ ४४ ॥
पर्पटास्ते सदाऽङ्गारभ्रष्टाः परमरोचकाः । दीपना पाचना रूक्षा गुरवः किञ्चिदीरिताः ॥ ४५ ॥

अथ मुद्ग-चणकोद्भव-स्नेहभृष्टानां पर्पटानां गुणानाह--

मौद्गाश्च तद्गुणाः प्रोक्ता विशेषाल्लघवो हिताः ॥ ४६ ॥
चणकस्य गुणैर्युक्तपर्पटाश्चणकोद्भवाः । स्नेहभृष्टास्तु ते सर्वे भवेयुर्मध्यमागुणैः ॥ ४७ ॥

अथ पूरिका घृतपक्वा तैलपक्वा च ( घी व तेल में पकी हुई कचौड़ी ) तयोः साधनं गुणांश्चाह--

माषाणां पिष्टिकां पूर्वाल्लवणार्द्रकहिङ्गुभिः । तया पिष्टिकया पूर्णा समिता कृतपोलिका ॥४८॥
ततस्तैलेन पक्वा सा पूरिका कथिता बुधैः । रुच्या स्वाद्वी गुरुः स्निग्धा बल्या पित्तास्रदूषिका
चक्षुस्तेजोहरी चोष्णा पाके वातविनाशिनी । तथैव घृतपक्वाऽपि चक्षुष्या रक्तपित्तहृत् ॥५०॥

अथ वटकः शुष्कः सरसश्च च ( सूखा व रसादार बड़ा ) तयोः साधनं गुणांश्चाह—

माषाणां पिष्टिकां युक्तां लवणार्द्रकहिंगुभिः । कृत्वा विदध्याद्वटकांस्तांस्तैलेषु पचेच्छनैः ॥५१॥
विशुष्का वटका बल्या बृंहणा वीर्यवर्द्धनाः । वातामयहरा रुच्या विशेषादर्दितापहाः ॥५२॥
विबन्धभेदिनः श्लेष्मकारिणोऽस्यग्निदूषिताः । संचूर्ण्य निक्षिपेत्तक्रे भृष्टं जीरकहिंगु च ॥५३॥
लवणं तत्र वटकान्सकलानपि मज्जयेत् । शुक्रस्तत्र वटको बलकृद्रोचनो गुरुः ॥ ५४ ॥
विबन्धहृद्विदाही च श्लेष्मलः पवनापहः । राज्यक्तयाऽतिरोचन्या पाचन्या तांस्तु भक्षयेत्॥५५

* राज्यक्ता 'राइता' इति लोके ॥ ५५ ॥

अथ काञ्जिकवटकः ( काञ्जीवरा ) तस्य साधनं गुणांश्चाह—

मन्थनी नूतना धार्या कटुतैलेन लेपिता । निर्मलेनाम्बुनाऽऽपूर्य तस्यां चूर्णं विनिक्षिपेत् ॥
राजिकाजीरलवणहिंगुशुण्ठीनिशाकृतम् ॥ ५६ ॥
निक्षिपेद्वटकांस्तत्र भाण्डस्यास्यञ्च मुद्रयेत् । ततो दिनत्रयादूर्ध्वमम्लाः स्युर्वटका ध्रुवम् ॥५७॥
काञ्जिकवटको रुच्यो वातघ्नः श्लेष्मकारकः । शूलघ्नोऽजीर्णदाहनुद् नेत्ररोगे तु नो हितः ॥५८॥

अथाम्लिकावटकाः ( इमलीके बडे ) तेषां साधनं गुणांश्चाह—

अम्लिकां स्वेदयित्वा तु जलेन सह मर्दयेत् । तन्नीरे कृतसंस्कारे वटकान्मज्जयेज्जनः ॥ ५९ ॥
अम्लिकावटकास्ते तु रुच्या वह्निप्रदीपनाः । वटकस्य गुणैः पूर्वैरेतेऽपि च समन्विताः ॥ ६०॥

अथ मुद्गवटकाः ( मूंगके बड़े ) तक्रमज्जितानां तेषां गुणानाह—

मुद्गानां वटकास्तक्रे मज्जिता लघवो हिमाः । संस्कारजप्रभावेण त्रिदोषशमना हिताः ॥६१॥

अथ माषवटिकाः ( उड़दकी बड़ी ) तेषां साधनं गुणांश्चाह—

माषाणां पिष्टिका हिंगुलवणार्द्रकसंस्कृता । तया विरचिता वस्त्रे वटिकाः साधु शोषिताः ॥६२॥
भर्जितास्तप्ततैलैस्ता अथवाऽम्बुप्रयोगतः । वटकस्य गणैर्युक्ता ज्ञातव्या रुचिदा भृशम् ॥ ६३ ॥

अथ कूष्माण्डकवटी ( पेठेकी बड़ी ) तस्या गुणानाह—

कूष्माण्डकवटी ज्ञेया पूर्वोक्तवटिकागुणा । विशेषात्पित्तरक्तघ्नी लघ्वी च कथिता बुधैः ॥ ६४ ॥

अथ मुद्गवटी ( मूंगकी बड़ी ) तस्या गुणानाह—

मुद्गानां वटिका तद्वद्रचिता साधिता तथा । पथ्या रुच्या तथा लघ्वी मुद्गसूपगुणास्मृता ६५

अथालीकमत्स्यः, तस्य साधनप्रकारमाह—

माषपिष्टिकया लिप्तं नागवल्लीदलं महत् ॥ ६६ ॥

तत्तु संस्वेदयेद्युक्त्या स्थाल्यामास्तारकोपरि । ततो निष्कास्य तं खण्डयं ततस्तैलेन भर्जयेत् ६७

* खण्डयं = खण्डेन योग्यमिति यावत् ॥ ६७ ॥

अलीकमत्स्य उक्तोऽयं प्रकारः पाकपण्डितैः । तं वृन्ताकभटित्रेण वास्तूकेन च भक्षयेत् ॥६८॥

अथ क्वथिता ( कढी ) तस्याः साधनं गुणाँश्चाह—

स्थाल्यां घृते वा तैले वा हरिद्रां हिङ्गु भर्जयेत् । अवलेहनसंयुक्तं तक्रं तत्रैव निक्षिपेत् ॥

एषा सिद्धा समरिचा क्वथिता कथिता बुधैः ॥ ६९ ॥

* अवलेहनम् "अरिहन" इति लोके ॥ ६९ ॥

क्वथिता पाचनी रुच्या लघ्वी वह्निप्रदीपिनी । कफानिलविबन्धघ्नी किञ्चित्पित्तप्रकोपिणी ॥ ७० ॥

अथालीकमत्स्यस्य गुणानाह—

अलीकमत्स्याः शुष्का वा किंवा क्वथितया पुनः । बृंहणा रोचना वृष्या बल्या वातगदापहाः ७१

कोष्ठशुद्धिकराः शुष्काः किञ्चित्पित्तप्रकोपणाः । अर्दिते सहनुस्तम्भे विशेषेण हिताः स्मृताः ७२

अथ मुद्गार्द्रकवटकाः ( अदरकबड़ा ) तेषां साधनं गुणांश्चाह—

मुद्गपिष्टीविरचितान् वटकाँस्तैलपाचितान् । हस्तेन चूर्णयेत्सम्यक् तस्मिंश्चूर्णे विनिक्षिपेत् ७३

भृष्टं हिङ्ग्वार्द्रकं सूक्ष्मं मरिचं जीरकं तथा । निम्बूरसं यवानीं च युक्त्या सर्वं विमिश्रयेत् ॥७४॥

मुद्गपिष्टिं पचेत्सम्यक् स्थाल्यामास्तारकोपरि । तस्यास्तु गोलकं कुर्यात्तन्मध्ये पूरणं क्षिपेत् ७५

तैले तान्गोलकान्पक्त्वा क्वथितायां निमज्जयेत् । गोलकाः पाचकैः प्रोक्तास्ते त्वार्द्रकवटा अपि

मुद्गार्द्रकवटा रुच्या लघवो बलकारकाः । दीपनास्तर्पणाः पथ्यास्त्रिषु दोषेषु पूजिताः ॥ ७७ ॥

अथ वेसनम् ( वेसन ) तस्य साधनमाह—

दाल्यश्चणकानां तु निस्तुषा यन्त्रपेषिताः । तच्चूर्णं वेसनं प्रोक्तं पाकशास्त्रविशारदैः ॥ ७८ ॥

अथ वेसनवटिका ( फुलौरी ) तस्याः साधनं गुणांश्चाह—

वटिका वेसनस्यापि क्वथितायां निमज्जिता । रुच्या विष्टम्भजननी बल्या पुष्टिकरी स्मृता ७९

* एवमन्येऽपि वेसनभवाः प्रकाराः खण्डनखण्डप्रभृतयो बोद्धव्याः ॥ ७९ ॥

## अथ मांसस्य प्रकाराः ।

तत्र शुद्धमांसम् , तस्य प्रकारमाह—

पाकपात्रे घृतं दद्यात्तैलञ्च तदभावतः । तत्र हिङ्गु हरिद्रां च भर्जयेत्तदनन्तरम् ॥ ८० ॥

छागादेरस्थिरहितं मांसं तत्खण्डितं ध्रुवम् । धौतं निर्गालितं तस्मिन्घृते तद्भर्जयेच्छनैः ॥८१॥

सिद्धयोग्यं जलं दत्त्वा लवणन्तु पचेत्ततः । सिद्धे जलेन सम्पिष्य वेसवारं परिक्षिपेत् ॥ ८२ ॥

अथ वेसवारः ( पीसा हुआ मसाला ) तद्द्रव्याण्याह—

द्रव्याणि वेसवारस्य नागवल्लीदलानि च । तण्डुलाश्च लवङ्गानि मरिचानि समासतः ॥ ८३ ॥

* वेशवारः "वेगर" इति लोके ॥ ८३ ॥

अथ शुद्धमांसस्य गुणानाह—

अनेन विधिना सिद्धं शुद्धमांसमिति स्मृतम् ॥ ८४ ॥

शुद्धमांसं परं वृष्यं बल्यं रुच्यञ्च बृंहणम् । त्रिदोषशमकं श्रेष्ठं दीपनं धातुवर्द्धनम् ॥ ८५ ॥

अथ सहद्रकम् "सेडण्डुक, सद्दवीसु" इति लोके तस्य साधनं गुणांश्चाह—

छागादेर्मांसमूर्वादेः कुट्टितं खण्डितं पुनः । शुद्धमांसविधानेन पचेदेतत्सहद्रकम् ॥

सहद्रकं गुणैर्ज्ञेयं शुद्धमांसगुणं स्मृतम् ॥ ८६ ॥

अथ तक्रमांसम् ( अखनी ) तस्य साधनं गुणांश्चाह—

पाकपात्रे घृतं दत्त्वा हरिद्रां हिङ्गु भर्जयेत् । छागादेः सकलस्यापि खण्डान्यपि च भर्जयेत् ॥ ८७ ॥

सिद्धयोग्यं जलं दत्वा पचेन्मृदुतरं तथा । जीरकादियुते तक्रे मांसखण्डानि भावयेत् ॥ ८८ ॥

तक्रमांसन्तु वातघ्नं लघु रुच्यं बलप्रदम् । कफघ्नं पित्तलं किञ्चित्सर्वाहारस्य पाचनम् ॥ ८९ ॥

अथ हरीसा ( आस ) तस्य साधनं गुणांश्चाह—

पाकपात्रे तु बृहति मांसखण्डानि निक्षिपेत् । पानीयं प्रचुरं सर्पिः प्रभूतं हिङ्गु जीरकम् ॥ ९० ॥

हरिद्रामार्द्रकं शुण्ठीं लवगं मरिचानि च । तण्डुलांश्चापि गोधूमाञ्जम्बीराणां रसान् बहून् ॥ ९१ ॥

यथा सर्वाणि वस्तूनि सुपक्वानि भवन्ति हि । तथा पचेत्तु निपुणो बहुमण्डस्थितिर्यथा ॥ ९२ ॥

एषा हरीसा बलकृद्वातपित्तापहा गुरुः । शीतोष्णा शुक्रदा स्निग्धा सर सन्धानकारिणी ॥ ९३ ॥

अथ तलितमांसम् ( तला हुआ मांस ) तस्य साधनं गुणांश्चाह—

शुद्धमांसविधानेन मांसं सम्यक्प्रसाधितम् । पुनस्तदाज्ये सम्भृष्टं तलितं प्रोच्यते बुधैः ॥ ९४ ॥

तलितं बलमेधाऽग्निमांसौजःशुक्रवृद्धिकृत् । तर्पणं लघु सुस्निग्धं रोचनं दृढताकरम् ॥ ९५ ॥

अथ शूल्यपलम् ( कबाब ) तस्य साधनं गुणांश्चाह—

कालखण्डादिमांसानि ग्रथितानि शलाकया । घृतं सलवणं दत्वा निर्धूमे दहने पचेत् ॥ ९६ ॥

तत्तु शुल्यमिति प्रोक्तं पाककर्मविचक्षणैः ॥ ९७ ॥

शूल्यं पलं सुधातुल्यं रुच्यं वह्निकरं लघु । कफवातहरं बल्यं किञ्चित्पित्तकरं हि तत् ॥ ९८ ॥

अथ मांसशृङ्गाटकम् ( मांस का सिंगाड़ा ) तस्य साधनं गुणांश्चाह—

शुद्धमांसं तनूकृत्य कर्त्तितं स्वेदितं जले । लवङ्गहिङ्गुलवणमरिचार्द्रकसंयुतम् ॥ ९९ ॥

एलाजीरकधान्याकनिम्बूरससमन्वितम् । घृते सुगन्धे तद् भृष्टं पूरणं प्रोच्यते बुधैः ॥ १०० ॥

शृङ्गाटकं समितया कृतं पूरणपूरितम् । पुनः सर्पिषि संभृष्टं मांसशृङ्गाटकं वदेत् ॥ १०१ ॥

मांसशृङ्गाटकं रुच्यं बृंहणं बलकृद् गुरु । वातपित्तहरं वृष्यं कफघ्नं वीर्यवर्धनम् ॥ १०२ ॥

अथ सिद्धमांसरसः ( शुरवा ) तस्य गुणानाह—

सिद्धमांसरसो रुच्यः श्रमश्वासक्षयापहः । प्रीणनो वातपित्तघ्नः क्षीणानामल्परेतसाम् ॥

विश्लिष्टभग्नसन्धीनां शुद्धानां शुद्धिकाङ्क्षिणाम् ॥ १०३ ॥

स्मृत्योजोबलहीनानां ज्वरक्षीणक्षतोरसाम् । शस्यते स्वरहीनानां दृष्ट्यायुःश्रवणार्थिनाम् १०४

प्रकाराः कथिताः सन्ति बहवो मांससम्भवाः । ग्रन्थविस्तरभीतेस्ते मया नात्र प्रकीर्त्तिताः १०५

अथ शाकपाकविधिः, तमाह—

हिङ्गुजीरयुते तैले क्षिपेच्छाकं सुखण्डितम् ॥ १०६ ॥

लवणं चात्र चूर्णादि सिद्धे हिङ्गूदकं क्षिपेत्। इत्येवं सर्वशाकानां साधनोऽभिहितो विधिः१०७

अथ पच्यान्नसाधनविधिमाह, तत्र मण्डकः "मठरी, माड़" इति च लोके तस्य साधनविधिमाह—

समितां मर्दयेदाज्यैर्जलेनापि च सन्नयेत। तस्यास्तु वटिकां कृत्वा पचेत्सर्पिषि नीरसम् ॥

एलालवङ्गकर्पूरमरिचाद्यैरलङ्कृते ॥ १०८ ॥

मज्जयित्वा सितापाके ततस्तञ्च समुद्धरेत्। अयं प्रकारः संसिद्धो मण्ड इत्यभिधीयते ॥१०९॥

*सन्नयेद् = मर्दयेत् ॥ १०८-१०९ ॥

अथ मण्डस्य गुणानाह—

मण्डस्तु बृंहणो वृष्यो बल्यः सुमधुरो गुरुः। पित्तानिलहरो रुच्यो दीप्ताग्नीनां सुपूजितः ॥११०॥

समिताशर्करासर्पिर्निर्मिता अपरेऽपि ये। प्रकारा अमुना तुल्यास्तेऽपि चेत्तद्गुणाः स्मृताः १११

अथ सम्पावः ( गुजिया ) तस्य साधनं गुणांश्चाह—

पर्पट्यः साज्यसमितानिर्मिता घृतभर्जिताः। कुट्टिताश्चालिताः शुद्धशर्कराभिर्विमर्दिताः ॥११२॥

तत्र चूर्णं क्षिपेदेलालवङ्गमरिचानि च। नारिकेरं सकर्पूरं चारबीजान्यनेकधा ॥ ११३ ॥

घृताक्तसमिता पुष्टरोटिका रचिता ततः। तस्यान्तःपूरणं तस्य कुर्यान्मुद्रां दृढां सुधीः ॥११४॥

सर्पिषि प्रचुरे तान्तु सुपचेन्निपुणो जनः। प्रकारज्ञैः प्रकारोऽयं सम्पाव इति कीर्त्तितः ॥११५॥

मण्डकेन समो ज्ञेयः सम्पावोऽपि गुणैर्जनैः ॥ ११६ ॥

अथ कर्पूरनालिका, तस्याः साधनं गुणांश्चाह—

घृताढ्यया समितया लम्बं कृत्वा पुटं ततः। लवङ्गोषणकर्पूरयुतया सितयाऽन्वितम् ॥११७॥

पचेदाज्येन सिद्धैषा ज्ञेया कर्पूरनालिका। सम्पावसदृशा ज्ञेया गुणैः कर्पूरनालिका ॥११८॥

अथ फेनिका ( फेनी ) तस्याः साधनं गुणांश्चाह—

समितायां घृताढ्यायां वर्त्तीर्दीर्घाः समाचरेत्, तास्तु सन्निहिता दीर्घाः पीठस्योपरि धारयेत्११९

वेल्लयेद्वेल्लनेनैतां यथैका पर्पटी भवेत्। ततश्छुरिकया तान्तु संलग्नामेव कर्त्तयेत् ॥ १२० ॥

ततस्तु वेल्लयेद्भूयः सट्टकेन च लेपयेत्। शालिचूर्णं घृतं तोयं मिश्रितं सट्टकं वदेत् ॥ १२१ ॥

ततः संवृत्य तल्लोप्त्रीं विदधीत पृथक्पृथक्। पुनस्तां वेल्लयेल्लोप्त्रीं यथा स्यान्मण्डलाकृतिः ॥

ततस्तां सुपचेदाज्ये भवेयुश्च स्फुटाः स्फुटाः। सुगन्धया शर्करया तदुद्धूलनमाचरेत् ॥ १२३ ॥

सिद्धैषा फेनिकानाम्नी मण्डकेन समा गुणैः। ततः किञ्चिल्लघुरयं विशेषोऽप्युदाहृतः ॥१२४॥

*वेल्लयेत् = प्रसारयेत्। वेल्लनः = 'वेलन' इति लोके। पर्पटी = रोटी। लोप्त्री 'लोई' इति लोके ॥ ११९—१२४ ॥

अथ शष्कुली ( खस्तापूड़ी ) तस्याः साधनं गुणांश्चाह—

समितायां घृताक्तायां लोप्त्रीं कृत्वा च वेल्लयेत्। आज्ये तां भर्जयेत्सिद्धा शष्कुली फेनिकागुणा

अथ सेविकामोदकाः ( सेव के लड्डू ) तेषां साधनं गुणांश्चाह—

घृताढ्यया समितया कृत्वा सूत्राणि तानि तु। निपुणा भर्जयेदाज्ये खण्डपाकेन योजयेत् ॥

सुकेन मोदकान्कुर्य्यात्ते कुमैलण्डका यथा ॥ १२६ ॥

अथ मुक्तामोदका मुद्गमोदका वा ( बूंदी के लड्डू ) तेषां साधनं गुणांश्चाह—

मुद्गानां धूमसीं सन्धयेत्तोयैर्निमन्त्याऽम्बुना ॥ १२७ ॥

कटाहस्य घृतस्योर्ध्वं झर्झरं स्थापयेत्ततः । धूमसीन्तु द्रवीभूतां प्रक्षिपेज्झर्झरोपरि ॥ १२८ ॥

*"झर्झरं झर्झरा" इति लोके ॥ १२७–१२८ ॥

पतन्ति बिन्दवस्तस्मात्तान्सुपक्वान्समुद्धरेत् । सितापाकेन संयोज्य कुर्याद्धस्तेन मोदकान् ॥

लघुर्ग्राही त्रिदोषघ्नः स्वादुः शीतो रुचिप्रदः । चक्षुष्यो ज्वरहृद्बल्यस्तर्पणो मुद्गमोदकः ॥

अथ बेसनमोदकाः ( मोतीचूर के लड्डू ) तेषां साधनं गुणांश्चाह—

एवमेव प्रकारेण कार्य्या बेसनमोदकाः ॥ १३१ ॥

ते बल्या लघवः शीताः किञ्चिद्वातकरास्तथा । विष्टम्भिनो ज्वरघ्नाश्च पित्तरक्तकफापहाः १३२

अथ दुग्धकूपिका तस्याः साधनं गुणांश्चाह—

तण्डुलचूर्णविमिश्रितनष्टक्षीरेण सान्द्रपिष्टेन । दृढकूपिकां विदध्यात्ताञ्च पचेत्सर्पिषा सम्यक् ॥

अथ तां कोष्णितमध्यां घनरवसा पूर्णगर्भाञ्च । सद्दकमुद्रितवदनां तलघृते सुपक्वचूर्णाञ्च ॥१३४॥

अथ पाण्डुखण्डपाके स्नपयेत्कर्पूरवासिते कुशलः । अथ दुग्धकूपिका सा बल्या पित्तानिलापहा चैव

वृष्या शीता गुर्वी शुक्रकरी च तर्पणी रुच्या । विदधाति कायपुष्टिं दृष्टिं दूरप्रसारिणीं सुचिरम्

अथ कुण्डलिनी "जलेबी" इति लोके तस्याः साधनं गुणांश्चाह—

नूतनं घटमानीय तस्यान्तः कुशलो जनः । प्रस्थार्द्धपरिमाणेन दध्नाऽम्लेन प्रलेपयेत् ॥ १३७ ॥

द्विप्रस्थां समितां तत्र दध्यम्लं प्रस्थसम्मितम् । घृतमर्द्धशरावञ्च घोलयित्वा घटे क्षिपेत् १३८

आतपे स्थापयेत्तावद् यावद्याति तदम्लताम् । ततस्तत्प्रक्षिपेत्पात्रे सच्छिद्रे भाजने तु तत् ॥

परिभ्राम्य परिभ्राम्य सुसन्तप्ते घृते क्षिपेत् । पुनःपुनस्तदावृत्त्या विदध्यान्मण्डलाकृतिम् ॥

तां सुपक्वां घृतान्नीत्वा सितापाके तनुद्रवे । कर्पूरादिसुगन्धैश्च स्नापयित्वोद्धरेत्ततः ॥१४१॥

एषा कुण्डलिनी नाम्ना पुष्टिकान्तिबलप्रदा । धातुवृद्धिकरी वृष्या रुच्या चेन्द्रियतर्पणी १४२

---

## अथ पश्चात् परिवेष्याणि ।

तत्र रसाला ( सिखरन ) तस्याः साधनं सेवनार्हजनान् गुणांश्चाह—

आदौ माहिषमम्लमम्बुरहितं दध्याढकं शर्करां-
शुभ्रां प्रस्थयुगोन्मितां शुचिपटे किञ्चिच्च किञ्चित्क्षिपेत् ।
दुग्धेनार्द्धघटेन मृण्मयनवस्थाल्यां दृढं स्रावये-
देलाबीजलवङ्गचन्द्रमरिचैर्योग्यैश्च तद्योजयेत् ॥ १४३ ॥
भीमेन प्रियभोजनेन रचिता नाम्ना रसाला स्वयं-
श्रीकृष्णेन पुरा पुनः पुनरियं प्रीत्या समास्वादिता ।
एषा येन वसन्तवर्जितदिने संसेव्यते नित्यश-
स्तस्य स्यादतिवीर्य्यवृद्धिरनिशं सर्वेन्द्रियाणां बलम् ॥ १४४ ॥

ग्रीष्मे तथा शरदि ये रविशोषिताङ्गा, ये च प्रमत्तवनितासुरतातिखिन्नाः ।

ये चापि मार्गपरिखिन्नविशीर्णगात्रास्ते-षामियं वपुषि पोषणमाशु कुर्यात् ॥ १४५ ॥
रसाला शुक्रला बल्या रोचनी वातपित्तजित् ॥ १४६ ॥
दीपनी बृंहणी स्निग्धा मधुरा शिशिरा सरा । रक्तपित्तं तृषां दाहं प्रतिश्यायं विनाशयेत् ॥

अथ शर्करोदकम् ( सरबत ) तस्य साधनं गुणांश्चाह—

जलेन शीतलेनैव घोलिता शुभ्रशर्करा । एलालवङ्गकर्पूरमरिचैश्च समन्विता ॥ १४८ ॥
शर्करोदकनाम्ना तत्प्रसिद्धं विदुषां मुखैः । शर्करोदकमाख्यातं शुक्रलं शिशिरं सरम् ॥१४९॥
बल्यं रुच्यं लघु स्वादु वातपित्तप्रणाशनम् । मूर्च्छाछर्दितृषादाहज्वरशान्तिकरं परम् ॥१५०॥

अथ प्रपाणकानि ( सरबत ) तत्राम्रफलप्रपाणकम् , तस्य साधनं गुणांश्चाह—

आम्रमामं जले स्विन्नं मर्दितं दृढपाणिना । सिताशीताम्बुसंयुक्तं कर्पूरमरिचान्वितम् ॥१५१॥
प्रपाणकमिदं श्रेष्ठं भीमसेनेन निर्मितम् । सद्यो रुचिकरं बल्यं शीघ्रमिन्द्रियतर्पणम् ॥१५२॥

अथाम्लिकाफलपानकम् , तस्य साधनं गुणांश्चाह—

अम्लिकायाः फलं पक्वं मर्दितं वारिणा दृढम् । शर्करामरिचैर्मिश्रं लवङ्गेन्दुसुवासितम् ॥१५३॥
अम्लिकाफलसम्भूतं पानकं वातनाशनम् । पित्तश्लेष्मकरं किञ्चित्सुरुच्यं वह्निबोधनम् ॥१५४॥

अथ निम्बुकफलपानकम् , तस्य साधनं गुणांश्चाह—

भागैकं निम्बुजं तोयं षड्भागं शर्करोदकम् । लवङ्गमरिचैर्मिश्रं पानं पानकमुत्तमम् ॥१५५॥
निम्बूफलभवं पानमत्यम्लं वातनाशनम् । वह्निदीप्तिकरं रुच्यं समस्ताहारपाचकम् ॥१५६॥

अथ धान्याकपानकम् , तस्य साधनं गुणांश्चाह—

शिलायां साधु सम्पिष्टं धान्याकं वस्त्रगालितम् । शर्करोदकसंयुक्तं कर्पूरादिसुसंस्कृतम् ॥
नूतने मृण्मये पात्रे स्थितं पित्तहरं परम् ॥ १५७ ॥

अथ काञ्जी तस्या गुणांश्चाह—

काञ्जिकं रोचनं रुच्यं पाचनं वह्निदीपनम् ॥ १५८ ॥
शूलाजीर्णविबन्धघ्नं कोष्ठशुद्धिकरं परम् । न भवेत्काञ्जिकं यत्र तत्र जालिः प्रदीयते ॥१५९॥
*काञ्जीविधिर्वटकावसरे लिखितः ॥ १५८-१५९ ॥

अथ जालिः, तस्य साधनं गुणांश्चाह—

आममाम्रफलं पिष्टं राजिकालवणान्वितम् । भृष्टहिङ्गुयुतं पूतं घोलितं जालिरुच्यते ॥१६०॥
जालिर्हरति जिह्वायाः कुण्ठत्वं कण्ठशोधिनी । मन्दं मन्दन्तु पीता सा रोचनी वह्निबोधिनी ॥

अथ तक्रम् ( छाछ ) तस्य साधनं गुणांश्चाह—

तुर्यांशेन जलेन संयुतमतिस्थूलं सदम्लं दधि। प्रायो माहिषमम्बुकेनविमले मृद्भाजने गालयेत् ।
भृष्टं हिङ्गु च जीरकञ्च लवणं राजीञ्च किञ्चिन्मितां—
पिष्टां तत्र विमिश्रयेद्भवति तत्तक्रं न कस्य प्रियम् ॥ १६२ ॥
तक्रं रुचिकरंवह्निदीपनं पाचनं परम् । उदरे ये गदास्तेषां नाशनं तृप्तिकारकम् ॥ १६३ ॥

अथ दुग्धम् ( दूध ) तस्य भोजनान्ते पानगुणानाह—

विदाहीन्यन्नपानानि यानि भुङ्क्ते हि मानवः । तद्विदाहप्रशान्त्यर्थं भोजनान्ते पयः पिबेत् १६४

*दुग्धस्यापरे गुणा युक्ता एव दुग्धवर्गे ॥ १६४ ॥

अथ सक्तवः ( सत्तू ) तस्य साधनविधिमाह—

धान्यानि भ्राष्ट्रभृष्टानि यन्त्रपिष्टानि सक्तवः ॥ १६५ ॥

तत्र यवसक्तवः, तेषां गुणानाह—

यवजाः सक्तवः शीता दीपना लघवः सराः । कफपित्तहरा रूक्षा लेखनाश्च प्रकीर्तिताः ॥१६६॥
ते पीता बलदा वृष्या बृंहणा भेदनास्तथा । तर्पणा मधुरा रुच्याः परिणामे बलावहाः ॥१६७॥
कफपित्तश्रमक्षुत्तृड्व्रणनेत्रामयापहाः । प्रशस्ता घर्मदाहाध्वव्यायामार्तशरीरिणाम् ॥१६८॥

अथ चणकयवसक्तवः, तेषां साधनं गुणांश्चाह—

निस्तुषैश्चणकैर्भृष्टैस्तुर्यांशैश्च यवैः कृताः । सक्तवः शर्करासर्पिर्युक्ता ग्रीष्मेऽतिपूजिताः ॥१६९॥

अथ शालिसक्तवः, तेषां गुणानाह—

सक्तवः शालिसम्भूता वह्निदा लघवो हिमाः । मधुरा ग्राहिणो रुच्याः पथ्याश्च बलशुक्रदाः १७०

अथ सक्तुविषये सामान्यपरिभाषामाह—

न भुक्त्वा न द्विजैश्छित्त्वा न निशायां न वा बहून् । न जलान्तरितानद्भिः सक्तूनद्यान्न केवलान् १७१
पृथक्पानं पुनर्दानं सामिषं पयसा निशि । दन्तच्छेदनमुष्णञ्च सप्त सक्तुषु वर्जयेत् ॥ १७२ ॥

अथ धानाः ( बहुरी ) तासां साधनं गुणांश्चाह—

यवास्तु निस्तुषा भृष्टाः स्मृता धाना इति स्त्रियाम् । धानाः स्युर्दुर्जरा रूक्षास्तृट्प्रदा गुरवश्च ताः ॥
तथा मेहकफच्छर्दिनाशिन्यः सम्प्रकीर्तिताः ॥ १७३ ॥

अथ लाजाः ( खील ) तेषां साधनं गुणांश्चाह—

येषां स्युस्तण्डुलास्तानि धान्यानि सतुषाणि च । भृष्टानि स्फुटितान्याहुर्लाजा इति मनीषिणः ॥
लाजाः स्युर्मधुराः शीता लघवो दीपनाश्च ते । स्वल्पमूत्रमला रूक्षा बल्याः पित्तकफच्छिदः ॥
छर्द्यतीसारदाहास्रमेहमेदस्तृषाऽपहाः ॥ १७५ ॥

अथ चिपिटाः ( चिउड़ा ) तेषां साधनं नामानि गुणांश्चाह—

शालयःसतुषा आर्द्रा भृष्टा अस्फुटितास्ततः । कुट्टिताश्चिपिटाःप्रोक्तास्ते स्मृताः पृथुका अपि १७६
पृथुका गुरवो वातनाशनाः श्लेष्मला अपि । सक्षीरा बृंहणा वृष्या बल्या भिन्नमलाश्च ते १७७

अथ होलकः ( होरहा ) तस्य साधनं गुणांश्चाह—

अर्द्धपक्वैः शमीधान्यैस्तृणभृष्टैश्च होलकः । होलकोऽल्पानिलो मेदः कफदोषत्रयापहः ॥
भवेद्यो होलको यस्य स च तत्तद्गुणो भवेत् ॥ १७८ ॥

अथ ऊची ( ऊम्बी ) तस्याः साधनं गुणांश्चाह—

मञ्जरी स्वर्द्धपक्वा या यवगोधूमयोर्भवेत् । तृणानलेन संभृष्टा बुधैरूचीति सा स्मृता ॥
ऊची कफप्रदा बल्या लघ्वी पित्तानिलापहा ॥१७९ ॥

*ऊंवी = उम्बी, "उमिया" इति लोके ॥ १७९ ॥

अथ कुल्माषाः ( घुघुरी ) तेषां साधनं गुणांश्चाह—

अर्धस्विन्नास्तु गोधूमा अन्येऽपि चणकादयः ॥ १८० ॥

साधारणं तु मधुरं दीपनं शीतलं लघु । तर्पणं रोचनं तृष्णादाहदोषत्रयप्रणुत् ॥ ३१ ॥

अथ भौमानामेव नादेयादीनां लक्षणानि गुणाश्च ।

तत्र नादेयस्य लक्षणं गुणांश्चाह—

नद्या नदस्य वा नीरं नादेयमिति कीर्त्तितम् ॥ ३२ ॥

नादेयमुदकं रूक्षं वातलं लघु दीपनम् । अनभिष्यन्दि विशदं कटुकं कफपित्तनुत् ॥ ३३ ॥

अथ शीघ्रवहत्वादिभेदेन देशभेदेन च नादेयजलानां गुणभेदानाह—

नद्यः शीघ्रवहा लघ्व्यः सर्वा याश्चामलोदकाः । गुर्व्यः शैवलसंछन्ना मन्दगाः कलुषाश्च याः ॥३४॥

हिमवत्प्रभवाः पथ्या नद्योऽश्माहतपाथसः । गङ्गाशतद्रुसरयूयमुनाऽऽद्या गुणोत्तमाः ॥ ३५ ॥

सह्यशैलभवा नद्यो वेणागोदावरीमुखाः । कुर्वन्ति प्रायशः कुष्ठमीषद्वातकफावहाः ॥ ३६ ॥

नदीसरस्तडागस्थे कूपप्रस्रवणादिजे । उदके देशभेदेन गुणान्दोषांश्च लक्षयेत् ॥ ३७ ॥

अथौद्भिदजलस्य लक्षणं गुणांश्चाह—

विदार्य भूमिं निम्नां यन्महत्या धारया स्रवेत् । तत्तोयमौद्भिदं नाम वदन्तीति महर्षयः ॥३८॥

औद्भिदं वारि पित्तघ्नमविदाह्यतिशीतलम् । प्रीणनं मधुरं बल्यमीषद्वातकरं लघु ॥ ३९ ॥

अथ नैर्झरजलस्य लक्षणं गुणाँश्चाह—

शैलसानुस्रवद्वारिप्रवाहो निर्झरो झरः । स तु प्रस्रवणश्चापि तत्रत्यं नैर्झरं जलम् ॥ ४० ॥

नैर्झरं रुचिकृन्नीरं कफघ्नं दीपनं लघु । मधुरं कटुपाकं च वातलं स्यादपित्तलम् ॥ ४१ ॥

अथ सारसजलस्य लक्षणं गुणांश्चाह—

नद्याः शैलादिरुद्धाया यत्र संश्रित्य तिष्ठति । तत्सरो जलजच्छन्नं तदम्भः सारसं स्मृतम् ॥४२॥

सारसं सलिलं बल्यं तृष्णाघ्नं मधुरं लघु । रोचनं तुवरं रूक्षं बद्धमूत्रफलं स्मृतम् ॥ ४३ ॥

अथ ताडागजलस्य लक्षणं गुणांश्चाह—

प्रशस्तभूमिभागस्थो बहुसंवत्सरोषितः । जलाशयस्तडागः स्यात्ताडागं तज्जलं स्मृतम् ॥४४॥

ताडागमुदकं स्वादु कषायं कटुपाकि च । वातलं बद्धविण्मूत्रमसृक्पित्तकफापहम् ॥ ४५ ॥

अथ वाप्यजलस्य लक्षणं क्षारमिष्टयोस्तयोर्गुणांश्चाह—

पाषाणैरिष्टकाभिर्वा बद्धः कूपो बृहत्तरः । ससोपानो भवेद्वापी तज्जलं वाप्यमुच्यते। ॥ ४६ ॥

वाप्यं वारि यदि क्षारं पित्तकृत्कफवातहृत् । तदेव मिष्टं कफकृद्वातपित्तहरं भवेत् ॥ ४७ ॥

अथ कौपजलस्य लक्षणं स्वादुक्षारयोस्तयोर्गुणाँश्चाह—

भूमौ खातोऽल्पविस्तारो गम्भीरो मण्डलाकृतिः । बद्धोऽबद्धः स कूपः स्यात्तदम्भः कौपमुच्यते

कौपं पयो यदि स्वादु त्रिदोषघ्नं हितं लघु । तत्क्षारं कफवातघ्नं दीपनं पित्तकृत्परम् ॥ ४९ ॥

अथ चौञ्ज्यजलस्य लक्षणं गुणांश्चाह—

शिलाकीर्णं स्वयं श्वभ्रं नीलाञ्जनसमोदकम् । लतावितानसंछन्नं चौञ्ज्यमित्यभिधीयते ॥५०॥

अश्मादिभिरबद्धं यत्तचौञ्ज्यमिति वा परे । तत्रत्यमुदकं चौञ्ज्यं मुनिभिस्तदुदाहृतम् ॥५१॥

चौञ्ज्यं वह्निकरं नीरं रूक्षं कफहरं लघु । मधुरं पित्तनुद्रुच्यं पाचनं विशदं स्मृतम् ॥ ५२ ॥

अथ पाल्वलजलस्य लक्षणं गुणांश्चाह—

अल्पं सरः पल्वलं स्याद्यत्र चन्द्रर्क्षगे रवौ ॥ ५३ ॥

* रवौ – सूर्ये, चन्द्रर्क्षगे – कर्कटराशिस्थे, श्रावणे मासीति यावत्। अत्र चन्द्रर्क्षं मृगःशिरस्तत्रग इति मुख्यार्थः ॥ ५३ ॥

न तिष्ठति जलं किञ्चित्तत्रस्थं वारि पाल्वलम्। पाल्वलं वार्यभिष्यन्दि गुरु स्वादु त्रिदोषकृत्॥

अथ विकिरजलस्य लक्षणं गुणांश्चाह—

नद्यादिनिकटे भूमिर्या भवेद्वालुकामयी। उन्नाव्यते ततो यत्तु तज्जलं विकिरं विदुः ॥ ५५ ॥

विकिरं शीतलं स्वच्छं निर्दोषं लघु च स्मृतम्। तुवरं स्वादु पित्तघ्नं क्षारं तत्पित्तलं मनाक्॥

अथ कैदारजलस्य लक्षणं गुणांश्चाह—

केदारः क्षेत्रमुद्दिष्टं कैदारं तज्जलं स्मृतम्। कैदारं वार्यभिष्यन्दि मधुरं गुरु दोषकृत् ॥ ५७ ॥

अथ वृष्टिजलस्य लक्षणं गुणांश्चाह—

वार्षिकं त्र्यहवृष्टं भूमिस्थमहितं जलम्। त्रिरात्रमुषितं तत्तु प्रसन्नममृतोपमम् ॥ ५८ ॥

अथ हेमन्तादिकालविशेषे विहितं जलविशेषमाह—

हेमन्ते सारसं तोयं ताडागं वाहितं स्मृतम्। हेमन्ते विहितं तोयं शिशिरेऽपि प्रशस्यते ॥५९॥

वसन्तग्रीष्मयोः कौपं वाप्यं वा नैर्झरं जलम्। नादेयं वारि नादेयं वसन्तग्रीष्मयोर्बुधैः ॥६०॥

विषवद्वनवृक्षाणां पत्राद्यैर्दूषितं यतः। औद्भिदं वाऽऽन्तरीक्षं वा कौपं वा प्रावृषि स्मृतम् ॥

शस्तं शरदि नादेयं नीरमंशूदकं परम् ॥ ६१ ॥

अथांशूदकजलस्य लक्षणं गुणांश्चाह—

दिवा रविकरैर्जुष्टं निशि शीतकरांशुभिः। ज्ञेयमंशूदकं नाम स्निग्धं दोषत्रयापहम् ॥ ६२ ॥

* रविकरैर्जुष्टमित्युक्त दिवापदं समस्तदिवसप्राप्त्यर्थं, शीतकरांशुभिर्जुष्टमित्युक्तेनि शीतिपदं समस्तरात्रिप्राप्त्यर्थम् ॥ ६२ ॥

अनभिष्यन्दि निर्दोषमान्तरीक्षजलोपमम्। बल्यं रसायनं मेध्यं शीतं लघु सुधासमम् ॥६३॥

अन्यच्च—

शरदि स्वच्छमुदयादगस्त्यस्याखिलं हितम् ॥ ६४ ॥

वृद्धसुश्रुतस्तु—

पौषे वारि सरोजातं माघे तत्तु तडागजम्। फाल्गुने कूपसम्भूतं चैत्रे चौण्ड्यं हितं मतम् ६५

वैशाखे नैर्झरं नीरं ज्येष्ठे शस्तं तथौद्भिदम्। आषाढे शस्यते कौपं श्रावणे दिव्यमेव च ॥६६॥

भाद्रे कौपं पयः शस्तमाश्विने चौण्ड्यमेव च। कार्त्तिके मार्गशीर्षे च जलमात्रं प्रशस्यते॥६७॥

अथ जलग्रहणस्य समयमाह—

भौमानामम्भसां प्रायो ग्रहणं प्रातरिष्यते। शीतत्वं निर्मलत्वञ्च यतस्तेषां मतो गुणः ॥६८॥

अथ जलस्य पानविधिमाह—

अत्यम्बुपानान्न विपच्यतेऽन्नं निरम्बुपानाच्च स एव दोषः।

तस्मान्नरो वह्निविवर्द्धनाय मुहुर्मुहुर्वारि पिबेदभूरि ॥ ६९ ॥

अथ शीतलजलपानस्य विषयानाह—

मूर्च्छापित्तोष्णदाहेषु विषे रक्ते मदात्यये। श्रमे भ्रमे विदग्धेऽन्ने तमके वमथौ तथा॥
ऊर्ध्वगे रक्तपित्ते च शीतमम्भः प्रशस्यते॥ ७०॥

अथ शीतलजलपानस्य निषेधविषयानाह—

पार्श्वशूले प्रतिश्याये वातरोगे गलग्रहे। आध्माने स्तिमिते कोष्ठे सद्यः शुद्धौ नवज्वरे॥७१॥
अरुचिग्रहणीगुल्मश्वासकासेषु विद्रधौ। हिक्कायां स्नेहपाने च शीताम्बु परिवर्जयेत्॥७२॥

अथाल्पजलपानस्य विषयानाह—

अरोचके प्रतिश्याये मन्देऽग्नौ श्वयथौ क्षये। मुखप्रसेके जठरे कुष्ठे नेत्रामये ज्वरे॥
व्रणे च मधुमेहे च पिबेत्पानीयमल्पकम्॥ ७३॥

अथ जलपानस्यावश्यकतामाह—

जीवनं जीविनां जीवो जगत् सर्वन्तु तन्मयम्। नातोऽत्यन्तनिषेधेन कदा चिद्वारि वार्य्यते ७४

हारीतश्च—

तृष्णा गरीयसी घोरा सद्यःप्राणविनाशिनी। तस्माद् देयं तृषाऽऽर्त्ताय पानीयं प्राणधारणम् ७५
तृषितो मोहमायाति मोहात्प्राणान्विमुञ्चति। अतः सर्वास्ववस्थासु न क्व चिद्वारि वारयेत् ७६

अथ गुणवतस्तोयस्य लक्षणान्याह—

अगन्धमव्यक्तरसं सुशीतं तर्षनाशनम्। स्वच्छं लघु च हृद्यञ्च तोयं गुणवदुच्यते॥ ७७॥

अथावगुणकारिजलस्य लक्षणानि दुर्गुणांश्चाह—

पिच्छिलं कृमिलं क्लिन्नं पर्णशैवालकर्दमैः। विवर्णं विरसं सान्द्रं दुर्गन्धं न हितं जलम्॥७८॥
कलुषं छन्नमम्भोजपर्णनीलीतृणादिभिः। दुःस्पर्शनमसंस्पृष्टं सौरचान्द्रमरीचिभिः॥ ७९॥
अनार्त्तवं वार्षिकं तु प्रथमं तच्च भूमिगम्। व्यापन्नं परिहर्त्तव्यं सर्वदोषप्रकोपणम्॥ ८०॥
तत् कुर्यात्स्नानपानाभ्यां तृष्णाऽऽध्मानचिरज्वरान्।
कासाग्निमान्द्याभिष्यन्दकण्डूगण्डादिकं तथा॥ ८१॥

अथ दूषितजलस्य निर्दोषीकरणोपायमाह—

निन्दितं चापि पानीयं क्वथितं सूर्य्यतापितम्। सुवर्णं रजतं लौहं पाषाणं सिकतामपि॥८२॥
भृशं सन्ताप्य निर्वाप्य सप्तधा साधितं तथा। कर्पूरजातिपुन्नागपाटलादिसुवासितम्॥८३॥
शुचिसान्द्रपटस्रावि क्षुद्रजन्तुविवर्जितम्। स्वच्छं कनकमुक्ताऽऽद्यैःशुद्धं स्याद्दोषवर्जितम्॥८४॥
पर्णमूलविषग्रन्थिमुक्ताकनकशैवलैः। गोमेदेन च वस्त्रेण कुर्य्यादम्बुप्रसादनम्॥ ८५।

अथ पीतजलस्य परिपाककालानाह—

पीतं जलं जीर्य्यति यामयुग्माद्यामैकमात्राच्छृतशीतलञ्च।
तदर्धमात्रेण शृतं कदुष्णं पयःप्रपाके त्रय एव कालाः॥ ८६॥

इति श्रीमिश्रलटकनतनयश्रीमिश्रभावविरचिते भावप्रकाशे वर्गप्रकरणे त्रयोदशो वारिवर्गः समाप्तः॥१३॥

अथ शीतलजलपानस्य विषयानाह—

मूर्च्छापित्तोष्णदाहेषु विषे रक्ते मदात्यये। श्रमे भ्रमे विदग्धेऽन्ने तमके वमथौ तथा ॥
ऊर्ध्वगे रक्तपित्ते च शीतमम्भः प्रशस्यते ॥ ७० ॥

अथ शीतलजलपानस्य निषेधविषयानाह—

पार्श्वशूले प्रतिश्याये वातरोगे गलग्रहे। आध्माने स्तिमिते कोष्ठे सद्यः शुद्धौ नवज्वरे ॥७१॥
अरुचिग्रहणीगुल्मश्वासकासेषु विद्रधौ। हिक्कायां स्नेहपाने च शीताम्बु परिवर्जयेत् ॥७२॥

अथाल्पजलपानस्य विषयानाह—

अरोचके प्रतिश्याये मन्देऽग्नौ श्वयथौ क्षये। मुखप्रसेके जठरे कुष्ठे नेत्रामये ज्वरे ॥
व्रणे च मधुमेहे च पिबेत्पानीयमल्पकम् ॥ ७३ ॥

अथ जलपानस्यावश्यकतामाह—

जीवनं जीविनां जीवो जगत् सर्वन्तु तन्मयम्। नातोऽत्यन्तनिषेधेन कदा चिद्वारि वार्य्यते ७४

हारीतश्च—

तृष्णा गरीयसी घोरा सद्यःप्राणविनाशिनी। तस्माद् देयं तृषाऽऽर्त्ताय पानीयं प्राणधारणम् ७५
तृषितो मोहमायाति मोहात्प्राणान्विमुञ्चति। अतः सर्वास्ववस्थासु न क्व चिद्वारि वारयेत् ७६

अथ गुणवतस्तोयस्य लक्षणान्याह—

अगन्धमव्यक्तरसं सुशीतं तर्षनाशनम्। स्वच्छं लघु च हृद्यञ्च तोयं गुणवदुच्यते ॥ ७७ ॥

अथावगुणकारिजलस्य लक्षणानि दुर्गुणांश्चाह—

पिच्छिलं कृमिलं क्लिन्नं पर्णशैवालकर्दमैः। विवर्णं विरसं सान्द्रं दुर्गन्धं न हितं जलम् ॥७८॥
कलुषं छन्नमम्भोजपर्णनीलीतृणादिभिः। दुःस्पर्शनमसंस्पृष्टं सौरचान्द्रमरीचिभिः ॥ ७९ ॥
अनार्त्तवं वार्षिकं तु प्रथमं तच्च भूमिगम्। व्यापन्नं परिहर्त्तव्यं सर्वदोषप्रकोपणम् ॥ ८० ॥
तत् कुर्यात्स्नानपानाभ्यां तृष्णाऽऽध्मानचिरज्वरान्।
कासाग्निमान्द्याभिष्यन्दकण्डूगण्डादिकं तथा ॥ ८१ ॥

अथ दूषितजलस्य निर्दोषीकरणोपायमाह—

निन्दितं चापि पानीयं क्वथितं सूर्य्यतापितम्। सुवर्णं रजतं लौहं पाषाणं सिकतामपि ॥८२॥
भृशं सन्ताप्य निर्वाप्य सप्तधा साधितं तथा। कर्पूरजातिपुन्नागपाटलादिसुवासितम् ॥८३॥
शुचिसान्द्रपटस्रावि क्षुद्रजन्तुविवर्जितम्। स्वच्छं कनकमुक्ताऽऽद्यैःशुद्धं स्याद्दोषवर्जितम्॥८४॥
पर्णमूलविषग्रन्थिमुक्ताकनकशैवलैः। गोमेदेन च वस्त्रेण कुर्य्यादम्बुप्रसादनम् ॥ ८५ ।

अथ पीतजलस्य परिपाककालानाह—

पीतं जलं जीर्य्यति यामयुग्माद्यामैकमात्राच्छृतशीतलञ्च।
तदर्धमात्रेण शृतं कदुष्णं पयःप्रपाके त्रय एव कालाः ॥ ८६ ॥

इति श्रीमिश्रलटकनतनयश्रीमिश्रभावविरचिते भावप्रकाशे वर्गप्रकरणे त्रयोदशो वारिवर्गः समाप्तः ॥१३॥

अथ मृग्यादिदुग्धस्य गुणानाह—

मृगीणां जाङ्गलास्तथानामजाक्षीरगुणं पयः ॥ १८ ॥

तत्राविकदुग्धस्य गुणानाह—

आविकं लवणं स्वादु स्निग्धोष्णं चाश्मरीप्रणुत्। अहृद्यं तर्पणं केश्यं शुक्रपित्तकफप्रदम्।

गुरु कासानिलोद्भूते केवले चानिले वरम् ॥ १९ ॥

अथ घोटकीदुग्धस्य गुणानाह—

रूक्षोष्णं वडवाक्षीरं बल्यं शोषानिलापहम्। अम्लं पटु लघु स्वादु सर्वमेकशफं तथा ॥२०॥

अथौष्ट्रदुग्धस्य गुणानाह—

औष्ट्रं दुग्धं लघु स्वादु लवणं दीपनं तथा। कृमिकुष्ठकफानाहशोथोदरहरं सरम् ॥ २१ ॥

अथ हस्तिनीदुग्धस्य गुणानाह—

बृंहणं हस्तिनीदुग्धं मधुरं तुवरं गुरु। वृष्यं बल्यं हिमं स्निग्धं चक्षुष्यं स्थिरताकरम् ॥२२॥

अथ नारीदुग्धस्य गुणानाह—

नार्या लघु पयःशीतं दीपनं वातपित्तजित्। चक्षुःशूलाभिघातघ्नं नस्याश्च्योतनयोर्वरम् ॥२३॥

अथ धारोष्णादिदुग्धस्य गुणानाह—

धारोष्णं गोपयो बल्यं लघु शीतं सुधासमम्। दीपनञ्च त्रिदोषघ्नं तद्धाराशिशिरं त्यजेत् ॥२४॥

धारोष्णं शस्यते गव्यं धाराशीतन्तु माहिषम्। शृतोष्णमाविकं पथ्यं शृतशीतमजापयः ॥२५॥

आमं क्षीरमभिष्यन्दि गुरु श्लेष्मामवर्द्धनम्। ज्ञेयं सर्वमपथ्यं तु गव्यमाहिषवर्जितम् ॥२६॥

नारीक्षीरं त्वाममेव हितं न तु शृतं हितम्। शृतोष्णं कफवातघ्नं शृतशीतन्तु पित्तनुत् ॥२७॥

अर्द्धोदकं क्षीरशिष्टमामाल्लघुतरं पयः। जलेन रहितं दुग्धमतिपक्वं यथा यथा ॥

तथा तथा गुरु स्निग्धं वृष्यं बलविवर्द्धनम् ॥ २८ ॥

अथ पीयूष-किलाट-क्षीरशाक-तक्रपिण्ड-मोरटानां-लक्षणानि गुणांश्चाह—

क्षीरं तत्कालसूताया घनं पीयूषमुच्यते। नष्टदुग्धस्य पक्वस्य पिण्डः प्रोक्तः किलाटकः ॥२९॥

*पीयूषं "पेवस" इति लोके। किलाटकः 'खरेटा', "गिजिरी" वा इति लोके ॥ २९ ॥

अपक्वमेव यन्नष्टं क्षीरशाकं हि तत्पयः ॥ ३० ॥

*क्षीरशाकं 'तुषिभरा' वा "खिरिसा" इति लोके ॥ ३० ॥

दध्ना तक्रेण वा नष्टं दुग्धं बद्धं सुवाससा। द्रवभावेन सहितं तक्रपिण्डः स उच्यते ॥ ३१ ॥

नष्टदुग्धं भवेन्नीरं मोरटं जेज्जटोऽब्रवीत्। पीयूषञ्च किलाटश्च क्षीरशाकं तथैव च ॥ ३२ ॥

तक्रपिण्ड इमे वृष्या बृंहणा बलवर्द्धनाः। गुरवः श्लेष्मला हृद्या वातपित्तविनाशनाः ॥ ३३ ॥

दीप्ताग्नीनां विनिद्राणां विदग्धौ चाभिपूजिताः। मुखशोषतृषादाहरक्तपित्तज्वरप्रणुत्।

लघुर्बलकरो रुच्यो मोरटः स्यात्सितायुतः ॥ ३४ ॥

अथ सन्तानिका ( मलाई ) तस्या गुणानाह—

सन्तानिका गुरुः शीता वृष्या पित्तास्रवातनुत्। तर्पणी बृंहणी स्निग्धा बलासबलशुक्रला ३५

अथ खण्डादियुक्तस्य दुग्धस्य गुणानाह—

खण्डेन सहितं दुग्धं कफकृत्पवनापहम् । सितासितोपलायुक्तं शुक्रलं त्रिमलापहम् ॥
सगुडं मूत्रकृच्छ्रघ्नं पित्तश्लेष्मकरं परम् ॥ ३६ ॥

अथ प्रभातादिभवस्य दुग्धस्य गुणानाह—

रात्रौ चन्द्रगुणाधिक्याद्व्यायामाकरणात्तथा । प्राभातिकं पयः प्रायः प्रादोषाद् गुरु शीतलम् ३७
दिवाकरकराघाताद्व्यायामानलसेवनात् । प्राभातिकात्तु प्रादोषं लघु वातकफापहम् ॥ ३८ ॥

अथ दुग्धसेवनस्य समयविशेषेण गुणविशेषानाह—

वृष्यं बृंहणमग्निदीपनकरं पूर्वाह्णकाले पयो । मध्याह्ने तु बलावहं कफहरं पित्तापहं दीपनम् ॥
बाले वृद्धिकरं क्षयेऽक्षयकरं वृद्धेषु रेतोवहं । रात्रौ पथ्यमनेकदोषशमनं चक्षुर्हितं संस्मृतम् ॥३९॥
वदन्ति पेयं निशि केवलं पयो भोज्यं न तेनेह सहौदनादिकम् ।
भवत्यजीर्णं न शयीत शर्वरीं क्षीरस्य पीतस्य न शेषमुत्सृजेत् ॥ ४० ॥
विदाहीन्यन्नपानानि दिवा भुङ्क्ते हि यन्नरः । तद्विदाहप्रशान्त्यर्थं रात्रौ क्षीरं सदा पिबेत् ॥४१॥
दीप्तानले कृशे पुंसि बाले वृद्धे पयःप्रिये । मतं हिततमं दुग्धं सद्यः शुक्रकरं यतः ॥ ४२ ॥

अथ मथितदुग्धस्य गुणानाह—

क्षीरं गव्यमथाजं वा कोष्णं दण्डाहतं पिबेत् । लघु वृष्यं ज्वरहरं वातपित्तकफापहम् ॥४३॥

अथ दुग्धफेनम् ( झाग ) तस्य गुणानाह—

गोदुग्धप्रभवं किंवा छागीदुग्धसमुद्भवम् । भवेत् फेनं त्रिदोषघ्नं रोचनं बलवर्द्धनम् ॥ ४४ ॥
वह्निवृद्धिकरं वृष्यं सद्यस्तृप्तिकरं लघु । अतीसारेऽग्निमान्द्ये च ज्वरे जीर्णे प्रशस्यते ॥ ४५ ॥

अथ निन्दितदुग्धस्य लक्षणमाह—

विवर्णं विरसं चाम्लं दुर्गन्धं ग्रथितं पयः । वर्जयेदम्ललवणयुक्तं कुष्ठादिकृद् यतः ॥ ४६ ॥

इति श्रीमिश्रलटकनतनयश्रीमिश्रभावविरचिते भावप्रकाशे वर्गप्रकरणे चतुर्दशोदुग्धवर्गः ॥ १४ ॥

---

## अथ पञ्चदशो दधिवर्गः ॥ १५ ॥

तत्र दध्नो गुणानाह—

दध्युष्णं दीपनं स्निग्धं कषायानुरसं गुरु । पाकेऽम्लं ग्राहि पित्तास्रशोथमेदःकफप्रदम् ॥ १ ॥
मूत्रकृच्छ्रे प्रतिश्याये शीतगे विषमज्वरे । अतीसारेऽरुचौ कार्श्ये शस्यते बलशुक्रकृत् ॥ २ ॥

अथ दधिभेदानाह—

आदौ मन्दं ततः स्वादु स्वाद्वम्लञ्च ततः परम् । अम्लं चतुर्थमत्यम्लं पञ्चमं दधि पञ्चधा ॥३॥

अथ मन्दादिदध्नो लक्षणं गुणांश्चाह—

मन्दं दुग्धवदव्यक्तरसं किञ्चिद्घनं भवेत् । मन्दं स्यात्सृष्टविण्मूत्रं दोषत्रयविदाहकृत् ॥ ४ ॥
यत्सम्यग्घनतां यातं व्यक्तस्वादुरसं भवेत् । अव्यक्ताम्लरसं तत्तु स्वादु विज्ञैरुदाहृतम् ॥ ५ ॥
स्वादु स्याददत्यभिष्यन्दि वृष्यं मेदःकफावहम् । वातघ्नं मधुरं पाके रक्तपित्तप्रसादनम् ॥ ६ ॥

स्वाद्वम्लं सान्द्रमधुरं कषायानुरसं भवेत् । स्वाद्वम्लस्य गुणा ज्ञेयाः सामान्यदधिवज्जनैः ॥७॥
यत्तिरोहितमाधुर्य्यं व्यक्ताम्लत्वं तदम्लकम् । अम्लं तु दीपनं पित्तरक्तश्लेष्मविवर्द्धनम् ॥८॥
तद्वदत्यम्लं दन्तरोमहर्षकण्ठादिदाहकृत् । अत्यम्लं दीपनं रक्तवातपित्तकरं परम् ॥ ९ ॥

अथ गोदधिगुणानाह—

गव्यं दधि विशेषेण स्वाद्वम्लं च रुचिप्रदम् । पवित्रं दीपनं हृद्यं पुष्टिकृत्पवनापहम् ॥
उक्तं दध्नामशेषाणां मध्ये गव्यं गुणाधिकम् ॥ १० ॥

अथ माहिषदधिगुणानाह—

माहिषं दधि सुस्निग्धं श्लेष्मलं वातपित्तनुत् । स्वादुपाकमभिष्यन्दि वृष्यं गुर्वस्रदूषकम् ११

अथाजदधिगुणानाह—

आजं दध्युत्तमं ग्राहि लघु दोषत्रयापहम् । शस्यते श्वासकासार्शःक्षयकार्श्येषु दीपनम् ॥ १२ ॥

अथ पक्वदुग्धजातस्य दध्नो गुणानाह—

पक्वदुग्धभवं रुच्यं दधि स्निग्धं गुणोत्तमम् । पित्तानिलापहं सर्वधात्वग्निबलवर्द्धनम् ॥ १३ ॥

अथ निःसारदुग्धजनितदध्नो गुणानाह—

असारं दधि संग्राहि शीतलं वातलं लघु । विष्टम्भि दीपनं रुच्यं ग्रहणीरोगनाशनम् ॥१४॥

अथ गालितदध्नो गुणानाह—

गालितं दधि सुस्निग्धं वातघ्नं कफकृद् गुरु । बलपुष्टिकरं रुच्यं मधुरं नातिपित्तकृत् ॥ १५ ॥

अथ शर्कराऽऽदिसहितस्य दध्नो गुणानाह—

सशर्करं दधि श्रेष्ठं तृष्णापित्तास्रदाहजित् । सगुडं वातनुद् वृष्यं बृंहणं तर्पणं गुरु ॥ १६ ॥

अथ रात्रौ दधिभक्षणस्य निषेधमाह—

न नक्तं दधि भुञ्जीत न चाप्यघृतशर्करम् । नामुद्गसूपं नाक्षौद्रं नोष्णं नामलकैर्विना ॥ १७ ॥

*अयमर्थः—

रात्रौ दधि न भुञ्जीत, भुञ्जीत चेत्तदा-अघृतशर्करममुद्गसूपमक्षौद्रमुष्णं विनाऽऽमलकैश्च दधि न भुञ्जीत । तेन घृतशर्कराऽऽदियुक्तं दधि रात्रावपि भुञ्जीतेत्यर्थः ।

*तथा च—

शस्यते दधि नो रात्रौ शस्तं चाम्बुघृतान्वितम् । रक्तपित्तकफोत्थेषु विकारेषु तु नैव तत् ॥१॥

*तद् = अम्बुघृतान्वितमपि । १-१७ ॥

अथ ऋतुविशेषेण दध्नो विधिनिषेधावाह—

हेमन्ते शिशिरे चापि वर्षासु दधि शस्यते । शरद्ग्रीष्मवसन्तेषु प्रायशस्तद्विगर्हितम् ॥१८॥

अथ विधिमन्तरा दधिसेवने दुर्गुणानाह—

ज्वरासृक्पित्तवीसर्पकुष्ठपाण्ड्वामयभ्रमान् । प्राप्नुयात्कामलां चोग्रां विधिं हित्वा दधिप्रियः १९

अथ दध्नः सरमस्तुनोर्लक्षणं गुणांश्चाह—

दध्नस्तूपरि यो भागो घनःस्नेहसमन्वितः । स लोके सर इत्युक्तो दध्नो मण्डस्तु मस्त्विति॥२०॥
सरः स्वादुर्गुरुर्वृष्यो वातवह्निप्रणाशनः । साम्लो बस्तिप्रशमनः पित्तश्लेष्मविवर्द्धनः ॥२१॥
मस्तु क्लमहरं बल्यं लघु भक्ताभिलाषकृत् ॥ २२ ॥

स्रोतोविशोधनं ह्लादि कफतृष्णाऽनिलापहम् । अवृष्यं प्रीणनं शीघ्रं भिनत्ति मलसञ्चयम् ॥२३॥
इति श्रीमिश्रलटकनतनयश्रीमिश्रभावविरचिते भावप्रकाशे वर्गप्रकरणे पञ्चदशो दधिवर्गः समाप्तः ॥१५॥

## अथ षोडशस्तक्रवर्गः ॥ १६ ॥

तत्र तक्रस्य पृथक्पृथक् नामानि लक्षणं गुणांश्चाह—

घोलं तु मथितं तक्रमुदश्विच्छच्छिकाऽपि च । ससरं निर्जलं घोलं मथितं त्वसराद्‌कम् ॥१॥
तक्रं पादजलं प्रोक्तमुदश्वित्त्वर्द्धवारिकम् । छच्छिका सारहीना स्यात्स्वच्छा प्रचुरवारिका ॥
घोलं तु शर्करायुक्तं गुणैर्ज्ञेयं रसालवत् ॥ २ ॥

*मथितम् = 'महुआ', "मथुआ" वा इति लोके । छच्छिका = "छाछ" इति लोके १-२

वातपित्तहरं ह्लादि मथितं कफपित्तनुत् ॥ ३ ॥
तक्रं ग्राहि कषायाम्लं स्वादुपाकरसं लघु । वीर्योष्णं दीपनं वृष्यं प्रीणनं वातनाशनम् ॥४॥
ग्रहण्यादिमतां पथ्यं भवेत्संग्राहि लाघवात् । किञ्च स्वादुविपाकित्वान्न च पित्तप्रकोपणम् ॥५॥
अम्लोष्णं दीपनं वृष्यं प्रीणनं वातनाशनम् । कषायोष्णविकाशित्वाद्रौक्ष्याच्चापि कफापहम् ॥
न तक्रसेवी व्यथते कदाचिन्न तक्रदग्धाः प्रभवन्ति रोगाः ।
यथा सुराणाममृतं सुखाय तथा नराणां भुवि तक्रमाहुः ॥ ७ ॥
उदश्वित् कफकृद् बल्यमामघ्नं परमं मतम् । छच्छिका शीतला लघ्वी पित्तश्रमतृषाहरी ।
वातनुत् कफकृत् सा तु दीपनी लवणान्विता ॥ ८ ॥

अथोद्धृतस्तोकोद्धृतानुद्धृतघृतानां तक्राणां गुणानाह—

समुद्धृतघृतं तक्रं पथ्यं लघु विशेषतः ॥ ९ ॥
स्तोकोद्धृतघृतं तस्माद् गुरु वृष्यं कफापहम् । अनुद्धृतघृतं सान्द्रं गुरु पुष्टिकफप्रदम् ॥१०॥

अथ दोषविशेषे व्याधिविशेषे च तक्रविशेषानाह—

वातेऽम्लं शस्यते तक्रं शुण्ठीसैन्धवसंयुतम् । पित्ते स्वादु सितायुक्तं व्योषक्षारयुतं कफे ॥११॥
हिंगुजीरयुतं घोलं सैन्धवेन च संयुतम् । भवेदतीव वातघ्नमर्शोऽतीसारहृत्परम् ॥ १२ ॥
रुचिदं पुष्टिदं बल्यं वस्तिशूलविनाशनम् । मूत्रकृच्छ्रे तु सगुडं पाण्डुरोगे सचित्रकम् ॥१३॥

अथ पक्वापक्वतक्रयोर्गुणानाह—

तक्रमामं कफं कोष्ठे हन्ति कण्ठे करोति च । पीनसश्वासकासादौ पक्वमेव प्रयुज्यते ॥ १४ ॥

अथ तक्रसेवनविषयानाह—

शीतकालेऽग्निमान्द्ये च तथा वातामयेषु च । अरुचौ स्रोतसां रोधे तक्रं स्यादमृतोपमम् १५
तत्तु हन्ति गरच्छर्दिप्रसेकविषमज्वरान् । पाण्डुमेदोग्रहण्यर्शोमूत्रग्रहभगन्दरान् ॥ १६ ॥
मेहं गुल्ममतीसारं शूलप्लीहोदरारुचीः । श्वित्रकोष्ठगतव्याधीन् कुष्ठशोथतृषाकृमीन् ॥ १७ ॥

अथ तक्रस्य निषेधविषयानाह—

नैव तक्रं क्षये दद्यान्नोष्णकाले न दुर्बले । न मूर्च्छाभ्रमदाहेषु न रोगे रक्तपित्तजे ॥ १८ ॥

अथ गव्यादीनां विशिष्टतक्राणां गुणानाह—

यान्युक्तानि दधीन्यष्टौ तद्गुणं तक्रमादिशेत् ॥ १९ ॥

इति श्रीमिश्रलटकनतनयश्रीमिश्रभावविरचिते भावप्रकाशे वर्गप्रकरणे षोडशस्तक्रवर्गः समाप्तः ॥ १६ ॥

# अथ सप्तदशो नवनीतवर्गः ॥ १७ ॥

अत्र नवनीतस्य नामगुणानाह—

म्रक्षणं सरजं हैयङ्गवीनं नवनीतकम् । नवनीतं हितं गव्यं वृष्यं वर्णबलाग्निकृत् ॥ १ ॥
संग्राहि वातपित्तासृक्क्षयार्शोऽर्दितकासहृत् । तद्धितं बालके वृद्धे विशेषादमृतं शिशोः ॥ २ ॥

अथ माहिषनवनीतस्य गुणानाह—

नवनीतं महिष्यास्तु वातश्लेष्मकरं गुरु । दाहपित्तश्रमहरं मेदःशुक्रविवर्द्धनम् ॥ ३ ॥

अथ दुग्धोत्थनवनीतस्य गुणानाह—

दुग्धोत्थं नवनीतं तु चक्षुष्यं रक्तपित्तनुत् । वृष्यं बल्यमतिस्निग्धं मधुरं ग्राहि शीतलम् ॥४॥

अथ सद्योनिःसारितनवनीतस्य गुणानाह—

नवनीतं तु सद्यस्कं स्वादु ग्राहि हिमं लघु । मेध्यं किञ्चित्कषायाम्लमीषत्तक्रांशसङ्क्रमात् ५

अथ चिरन्तननवनीतस्य गुणानाह—

सक्षारकटुलाम्लत्वाच्छर्द्यर्शःकुष्ठकारकम् । श्लेष्मलं गुरु मेदस्यं नवनीतं चिरन्तनम् ॥ ६ ॥

इति श्रीमिश्रलटकनतनयश्रीमिश्रभावविरचिते भावप्रकाशे वर्गप्रकरणे सप्तदशो नवनीतवर्गः समाप्तः ॥१७॥

# अथाष्टादशो घृतवर्गः ॥ १८ ॥

तत्र घृतस्य नामगुणानाह—

घृतमाज्यं हविः सर्पिः कथ्यन्ते तद्गुणा अथ । घृतं रसायनं स्वादु चक्षुष्यं वह्निदीपनम् ॥१॥
शीतवीर्यं विषालक्ष्मीपापपित्तानिलापहम् । अल्पाभिष्यन्दिकान्त्योजस्तेजोलावण्यवृद्धिकृत् २
स्वरस्मृतिकरं मेध्यमायुष्यं बलकृद् गुरु । उदावर्त्तज्वरोन्मादशूलानाहव्रणान् हरेत् ।
स्निग्धं कफकरं रक्षःक्षयवीसर्परक्तनुत् ॥ ३ ॥

अथ गव्यघृतस्य गुणानाह—

गव्यं घृतं विशेषेण चक्षुष्यं वृष्यमग्निकृत् । स्वादुपाककरं शीतं वातपित्तकफापहम् ॥ ४ ॥
मेधालावण्यकान्त्योजस्तेजोवृद्धिकरं परम् । अलक्ष्मीपापरक्षोघ्नं वयसः स्थापकं गुरु ॥ ५ ॥
बल्यं पवित्रमायुष्यं सुमङ्गल्यं रसायनम् । सुगन्धं रोचनं चारु सर्वाज्येषु गुणाधिकम् ॥ ६ ॥

अथ माहिषघृतस्य गुणानाह—

माहिषं तु घृतं स्वादु पित्तरक्तानिलापहम् । शीतलं श्लेष्मलं वृष्यं गुरुस्वादु विपच्यते ॥ ७ ॥

अथाजघृतस्य गुणानाह—

आजमाज्यं करोत्यग्निं चक्षुष्यं बलवर्द्धनम् । कासे श्वासे क्षये चापि हितं पाके भवेत् कटु ॥८॥

अथौष्ट्रघृतस्य गुणानाह—

औष्ट्रं कटु घृतं पाके शोषक्रिमिविषापहम् । दीपनं कफवातघ्नं कुष्ठगुल्मोदरापहम् ॥ ९ ॥

अथाविकघृतस्य गुणानाह—

पाके लघ्वाविकं सर्पिः सर्वरोगविनाशनम् ॥ १० ॥

वृद्धिं करोति चास्थ्नां वै वाऽश्मरीशर्कराऽपहम् । चक्षुष्यमग्निसंधुक्ष्यं वातदोषनिवारणम् ११

अथ नारीघृतस्य गुणानाह—

कफेऽनिले योनिदोषे पित्ते रक्ते च तद्धितम् । चक्षुष्यमाज्यं स्त्रीणां वा सर्पिः स्यादमृतोपमम् १२

अथ वडवाघृतस्य गुणानाह—

वृद्धिं करोति देहाग्नेर्लघु पाके विषापहम् । तर्पणं नेत्ररोगघ्नं दाहनुद् वडवाघृतम् ॥ १३ ॥

अथ दुग्धनिःसृतघृतस्य गुणानाह—

घृतं दुग्धभवं ग्राही शीतलं नेत्ररोगहृत् । निहन्ति पित्तदाहास्रमदमूर्छाभ्रमानिलान् ॥ १४ ॥

अथ हैयङ्गवीनदुग्धोत्थघृतस्य गुणानाह—

हविर्यत्तस्तनदुग्धोत्थं तत्स्याद्धैयङ्गवीनकम् । हैयङ्गवीनं चक्षुष्यं दीपनं रुचिकृत्परम् ।

बलकृद् बृंहणं वृष्यं विशेषाज्ज्वरनाशनम् ॥ १५ ॥

अथ पुराणघृतस्य गुणानाह—

वर्षादूर्ध्वं भवेदाज्यं पुराणं तत् त्रिदोषनुत् । मूर्च्छाकुष्ठविषोन्मादापस्मारतिमिरापहम् ॥१६॥

यथा यथाऽखिलं सर्पिः पुराणमधिकं भवेत् । तथा तथा गुणैः स्वैः स्वैरधिकं तदुदाहृतम् ॥१७॥

अथ नवीनघृतस्य विषयानाह—

योजयेन्नवमेवाज्यं भोजने तर्पणे श्रमे । बलक्षये पाण्डुरोगे कामलानेत्ररोगयोः ॥ १८ ॥

अथ घृतप्रयोगस्याविषयानाह—

राजयक्ष्मणि बाले च वृद्धे श्लेष्मकृते गदे ॥ १९ ॥

रोगे सामे विषूच्यां च विबन्धे च मदात्यये । ज्वरे च दहने मन्दे न सर्पिर्बहु मन्यते ॥ २० ॥

इति श्रीनिश्चलटङ्कनतनयश्रीमिश्रभावविरचिते भावप्रकाशे वर्गप्रकरणेऽष्टादशो घृतवर्गः समाप्तः ॥ १८ ॥

---

## अथैकोनविंशो मूत्रवर्गः ॥ १९ ॥

तत्र गोमूत्रगुणानाह—

गोमूत्रं कटु तीक्ष्णोष्णं क्षारं तिक्तकषायकम् । लघ्वग्निदीपनं मेध्यं पित्तकृत्कफवातहृत् ॥१॥

शूलगुल्मोदरानाहकण्ड्वक्षिमुखरोगजित् । किलासगदवातामवस्तिरुक्कुष्ठनाशनम् ॥

कासश्वासापहं शोथकामलापाण्डुरोगहृत् ॥ २ ॥

कण्डूकिलासगदशूलमुखाक्षिरोगान्गुल्मातिसारमरुदामयमूत्ररोधान् ।

कासं सकुष्ठजठरक्रिमिपाण्डुरोगान्गोमूत्रमेकमपि पीतमपाकरोति ॥ ३ ॥

सर्वेष्वपि च मूत्रेषु गोमूत्रं गुणतोऽधिकम् । अतोऽविशेषात्कथने मूत्रं गोमूत्रमुच्यते ॥ ४ ॥

प्लीहोदरश्वासकासशोथवर्चोग्रहापहम् ॥ ५ ॥
शूलगुल्मरुजाऽऽनाहकामलापाण्डुरोगहृत् । कषायं तिक्ततीक्ष्णं च पूरणात्कर्णशूलनुत् ॥ ६ ॥

अथ मनुष्यमूत्रगुणानाह—

नरमूत्रं गरं हन्ति सेवितं तद्रसायनम् । रक्तपामाहरं तीक्ष्णं सक्षारलवणं स्मृतम् ॥ ७ ॥

अथ मूत्रस्य सामान्यां परिभाषामाह—

गोऽजाऽविमहिषीणां तु स्त्रीणां मूत्रं प्रशस्यते । खरोष्टेभनराश्वानां पुंसां मूत्रं हितं स्मृतम् ॥ ८ ॥

इति श्रीमिश्रलटकनतनयश्रीमिश्रभावविरचिते भावप्रकाशे वर्गप्रकरणे एकोनविंशो मूत्रवर्गः समाप्तः ॥ १९ ॥

---

## अथ विंशस्तैलवर्गः ॥ २० ॥

तत्र तैलस्य स्वरूपं गुणं चाह—

तिलादिस्निग्धवस्तूनां स्नेहस्तैलमुदाहृतम् । तत्तु वातहरं सर्वं विशेषात्तिलसम्भवम् ॥ १ ॥

अथ तिलतैलगुणानाह—

तिलतैलं गुरु स्थैर्यबलवर्णकरं सरम् । वृष्यं विकाशि विशदं मधुरं रसपाकयोः ॥ २ ॥
सूक्ष्मं कषायानुरसं तिक्तं वातकफापहम् । वीर्येणोष्णं हिमं स्पर्शे बृंहणं रक्तपित्तकृत् ॥ ३ ॥
लेखनं बद्धविण्मूत्रं गर्भाशयविशोधनम् । दीपनं बुद्धिदं मेध्यं व्यवायि व्रणमेहनुत् ॥ ४ ॥
श्रोत्रयोनिशिरःशूलनाशनं लघुताकरम् । त्वच्यं केश्यं च चक्षुष्यमभ्यङ्गे भोजनेऽन्यथा ॥ ५ ॥
छिन्नभिन्नच्युतोत्पिष्टमथितक्षतपिच्चिते । भग्नस्फुटितविद्धाग्निदग्धविश्लिष्टदारिते ॥ ६ ॥
तथाऽभिहतनिर्भुग्नमृगव्याघ्रादिविक्षते । वस्तौ पानेऽन्नसंस्कारे नस्ये कर्णाक्षिपूरणे ॥
सेकाभ्यङ्गावगाहेषु तिलतैलं प्रशस्यते ॥ ७ ॥

ननु बृंहणलेखनयोः कथं सामानाधिकरण्यमित्याह—

रूक्षादिदुष्टः पवनः स्रोतः संकोचयेद् यदा । रसोऽसम्यग्वहन् कार्श्यं कुर्याद्रक्तान्यवर्द्धयन् ॥ ८ ॥
तेषु प्रवेष्टुं सरतासौक्ष्म्यस्निग्धत्वमार्दवैः । तैलं क्षमं रसं नेतुं कृशानां तेन बृंहणम् ॥ ९ ॥
व्यवायिसूक्ष्मतीक्ष्णोष्णसरत्वैर्मेदसः क्षयम् । शनैः प्रकुरुते तैलं तेन लेखनमीरितम् ॥ १० ॥
द्रुतं पुरीषं बध्नाति स्खलितं तत्प्रवर्त्तयेत् । ग्राहकं सारकञ्चापि तेन तैलमुदीरितम् ॥ ११ ॥

अथ घृततैलयोः परिभाषामाह—

घृतमब्दात्परं पक्वं हीनवीर्यं प्रजायते । तैलं पक्वमपक्वं वा चिरस्थायी गुणाधिकम् ॥ १२ ॥

अथ सर्षपराजिकातैलयोर्गुणानाह—

दीपनं सार्षपं तैलं कटुपाकरसं लघु । लेखनं स्पर्शवीर्योष्णं तीक्ष्णं पित्तास्रदूषकम् ॥ १३ ॥
कफमेदोऽनिलार्शोघ्नं शिरःकर्णामयापहम् । कण्डूकुष्ठकृमिश्वित्रकोठदुष्टक्रिमिप्रणुत् ॥ १४ ॥
तद्वद्राजिकयोस्तैलं विशेषान्मूत्रकृच्छ्रकृत् ॥ १५ ॥

*राजिकयोः=कृष्णराजिकारक्तराजिकयोः ॥ १५ ॥

अथ तुवरीतैलगुणानाह—

तीक्ष्णोष्णं तुवरीतैलं लघु ग्राहि कफास्रजित् । वह्निकृद्विषहृत्कण्डूकुष्ठकोठकृमिप्रणुत् ॥

मेदोदोषापहं चापि व्रणशोथहरं परम् ॥ १६ ॥

अथातसीतैलगुणानाह—

अतसीतैलमाग्नेयं स्निग्धोष्णं कफपित्तकृत् । कटुपाकमचक्षुष्यं बल्यं वातहरं गुरु ॥ १७ ॥
मलकृद्रसतः स्वादु ग्राहि त्वग्दोषहृद् घनम् ॥ १८ ॥
वस्तौ पाने तथाऽभ्यङ्गे नस्ये कर्णस्य पूरणे । अनुपानविधौ चापि प्रयोज्यं वातशान्तये ॥१९॥

अथ कुसुम्भतैलगुणानाह—

कुसुम्भतैलमम्लं स्यादुष्णं गुरु विदाहि च । चक्षुर्भ्यां नहितं बल्यं रक्तपित्तकफप्रदम् ॥ २० ॥

अथ खसबीज ( पोस्त ) तैलगुणानाह—

तैलं तु खसबीजानां बल्यं वृष्यं गुरु स्मृतम् । वातहृत्कफहृच्छीतं स्वादुपाकरसं च तत् ॥२१॥

अथैरण्डतैलगुणानाह—

एरण्डतैलं तीक्ष्णोष्णं दीपनं पिच्छिलं गुरु । वृष्यं त्वच्यं वयःस्थापि मेधाकान्तिबलप्रदम् २२
कषायानुरसं सूक्ष्मं योनिशुक्रविशोधनम् । विस्रं स्वादु रसे पाके सतिक्तं कटुकं सरम् ॥ २३ ॥
विषमज्वरहृद्रोगपृष्ठगुह्यादिशूलनुत् । हन्ति वातोदरानाहगुल्माष्ठीलाकटिग्रहान् ॥ २४ ॥
वातशोणितविड्बन्धब्रध्नशोथामविद्रधीन् । आमवातगजेन्द्रस्य शरीरवनचारिणः ॥
एक एव निहन्ताऽयमेरण्डस्नेहकेसरी ॥ २५ ॥

अथ सर्जरसतैलगुणानाह—

तैलं सर्जरसोद्भूतं । विस्फोटव्रणनाशनम् । कुष्ठपामाकृमिहरं वातश्लेष्मामयापहम् ॥ २६ ॥

अथ सर्वतैलानां गुणानाह—

तैलं स्वयोनिगुणकृद्वाग्भटेनाखिलं मतम् । अतः शेषस्य तैलस्य गुणा ज्ञेयाः स्वयोनिवत् २७

इति श्रीमिश्रलटकनतनयश्रीमिश्रभावविरचिते भावप्रकाशे वर्गप्रकरणे विंशस्तैलवर्गः समाप्तः ॥ २० ॥

---

## अथैकविंशः सन्धानवर्गः ॥ २१ ॥

तत्र काञ्जिकस्य लक्षणं गुणांश्चाह—

सन्धितं धान्यमण्डादि काञ्जिकं कथ्यते जनैः । काञ्जिकं भेदि तीक्ष्णोष्णं रोचनं पाचनं लघु १
दाहज्वरहरं स्पर्शात्पानाद्वातकफापहम् । माषादिवटकैर्यत्तु क्रियते तद् गुणाधिकम् ॥ २ ॥
लघु वातहरं तत्तु रोचनं पाचनं परम् । शूलाजीर्णविबन्धामनाशनं बस्तिशोधनम् ॥ ३ ॥

अथ काञ्जिकसेवनायोग्यजनानाह

शोषमूर्च्छाभ्रमार्त्तानां मदकण्डुविशोषिणाम् । कुष्ठिनां रक्तपित्तिनां काञ्जिकं न प्रशस्यते ॥४॥
पाण्डुरोगे यक्ष्मणि च तथा शोषातुरेषु च । क्षतक्षीणे तथा श्रान्ते मन्दज्वरनिपीडिते ॥
एतेषां न हितं प्रोक्तं काञ्जिकं दोषकारकम् ॥ ५ ॥

अथ तुषोदकस्य लक्षणं गुणांश्चाह—

तुषोदकं यवैरामैः सतुषैः शकलीकृतैः ॥ ६ ॥

* यवैः=उद्र्के संहितः सन्धानवर्गोक्तत्वात् ॥ ६ ॥

तुषाम्बु दीपनं हृद्यं पाण्डुक्रिमिगदापहम् । तीक्ष्णोष्णं पाचनं पित्तरक्तकृद्बस्तिशूलनुत् ॥ ७ ॥

अथ सौवीरस्य लक्षणं गुणांश्चाह--

सौवीरं तु यवैरामैः पक्वैर्वा निस्तुषैः कृतम् । गोधूमैरपि सौवीरमाचार्य्याः केचिदूचिरे ॥ ८ ॥

सौवीरं तु ग्रहण्यर्शःकफघ्नं भेदि दीपनम् । उदावर्त्ताङ्गमर्दास्थिशूलानाहेषु शस्यते ॥ ९ ॥

अथारनालस्य लक्षणं गुणांश्चाह--

आरनालं तु गोधूमैरामैः स्यान्निस्तुषीकृतैः । पक्वैर्वा सन्धितैस्तत्तु सौवीरसदृशं गुणैः ॥ १०

अथ धान्याम्लस्य लक्षणं गुणांश्चाह--

धान्याम्लं शालिचूर्णं च कोद्रवादिकृतं भवेत् । धान्याम्लं धान्ययोनित्वात्प्रीणनं लघु दीपनम्

अरुचौ वातरोगेषु सर्वेष्वास्थापने हितम् ॥ ११ ॥

अथ शिण्डाक्या लक्षणं गुणांश्चाह--

शिण्डाकी राजिकायुक्तैः स्यान्मूलकदलद्रवैः । सर्षपस्वरसैर्वाऽपि शालिपिष्टकसंयुतैः ॥ १२ ॥

* सन्धितैरिति शेषः ॥ १२ ॥

शिण्डाकी रोचनी गुर्वी पित्तश्लेष्मकरी स्मृता ॥ १३ ॥

अथ शुक्तस्य लक्षणं गुणांश्चाह--

कन्दमूलफलादीनि सस्नेहलवणानि च । यत्र द्रवेऽभिपूयन्ते तच्छुक्तमभिधीयते ॥ १४ ॥

शुक्तं कफघ्नं तीक्ष्णोष्णं रोचनं पाचनं लघु । पाण्डुक्रिमिहरं रूक्षं भेदनं रक्तपित्तकृत् ॥ १५ ॥

अथासुतम् ( संधान ) तस्य लक्षणं गुणांश्चाह--

कन्दमूलफलाद्यं यत्तु विज्ञेयमासुतम् । तद्रुच्यं पाचनं वातहरं लघु विशेषतः ॥ १६ ॥

अथ मद्यस्य नामानि लक्षणं गुणांश्चाह--

मद्यन्तु सीधुमैरेयमिरा च मदिरा सुरा । कादम्बरी वारुणी च हालाऽपि बलवल्लभा ॥ १७ ॥

पेयं यन्मादकं लोकैस्तन्मद्यमभिधीयते । यथाऽरिष्टं सुरा सीधुरासवाद्यमनेकधा ॥ १८ ॥

मद्यं सर्वं भवेदुष्णं पित्तकृद्वातनाशनम् । भेदनं शीघ्रपाकं च रूक्षं कफहरं परम् ॥ १९ ॥

अम्लं च दीपनं रुच्यं पाचनं चाशुकारि च । तीक्ष्णं सूक्ष्मं च विशदं व्यवायि च विकाशि च २०

अथारिष्टस्य लक्षणं गुणांश्चाह--

पक्वौषधाम्बुसिद्धं यन्मद्यं तत्स्यादरिष्टकम् ॥ २१ ॥

* अरिष्टं=मद्यमिति लोके । यथा—द्राक्षारिष्टं, दशमूलारिष्टम् बब्बूलारिष्टमिति ॥२१॥

अरिष्टं लघु पाकेन सर्वतश्च गुणाधिकम् । अरिष्टस्य गुणा ज्ञेया बीजद्रव्यगुणैः समाः ॥ २२ ॥

अथ सुराया लक्षणं गुणांश्चाह--

शालिषष्टिकपिष्टादिकृतं मद्यं सुरा स्मृता । सुरा गुर्वी बलस्तन्यपुष्टिमेदः कफप्रदा ॥

ग्राहिणी शोथगुल्मार्शोग्रहणीमूत्रकृच्छ्रनुत् ॥ २३ ॥

अथ सुराभेदस्य वारुण्या लक्षणगुणानाह--

पुनर्नवाशालिपिष्टिविहिता वारुणी स्मृता । संहितैस्तालखर्जूररसैर्या साऽपि वारुणी ॥

सुरावद्वारुणी लघ्वी पीनसाऽऽध्मानशूलनुत् ॥ २४ ॥

* सुरातो भेदार्थं लघ्वीति ॥ २५ ॥

अथ द्विविधसीध्वोर्लक्षणगुणानाह—

इक्षोः पक्वै रसैः सिद्धः सीधुः पक्वरसश्च सः । आमैस्तैरेव यः सीधुः स च शीतरसः स्मृतः ॥ २६ ॥

सीधुः पक्वरसः श्रेष्ठः स्वराग्निबलवर्णकृत् । वातपित्तकरः सद्यः स्नेहनो रोचनो हरेत् ॥ २६ ॥

विबन्धमेदःशोफार्शःशोफोदरकफामयान् । तस्माल्लघुगुणः शीतरसः संलेखनः स्मृतः ॥ २७ ॥

अथासवस्य लक्षणं गुणांश्चाह—

यदपक्वौषधाम्बुभ्यां सिद्धं मद्यं स आसवः ॥ २८ ॥

*यथा—लोहासवादिः ॥ २८ ॥

आसवस्य गुणा ज्ञेया बीजद्रव्यगुणैः समाः ॥ २९ ॥

अथ नवपुराणमदिरागुणानाह—

मद्यं नवमभिष्यन्दि त्रिदोषजनकं सरम् । अहृद्यं बृंहणं दाहि दुर्गन्धं विशदं गुरु ॥ ३० ॥

जीर्णं तदेव रोचिष्णु क्रिमिश्लेष्मानिलापहम् । हृद्यं सुगन्धि गुणवल्लघु स्रोतोविशोधनम् ॥ ३१ ॥

अथ सात्त्विकादिमनुष्याणां मद्येन जाताश्चेष्टा आह—

सात्त्विके गीतहास्यादि राजसे साहसादिकम् । तामसे निन्द्यकर्माणि निद्रां च मदिराऽऽचरेत्

*आचरेत् = कुर्यात् ॥ ३२ ॥

अथ मद्यपानप्रकारमाह—

विधिना मात्रया काले हितैरन्नैर्यथाबलम् । प्रहृष्टो यः पिबेन्मद्यं तस्य स्यादमृतं यथा ॥ ३३ ॥

किन्तु मद्यं स्वभावेन यथैवान्नं तथा स्मृतम् । अयुक्तियुक्तं रोगाय युक्तियुक्तं यथाऽमृतम् ॥ ३४ ॥

अथ मद्यगन्धस्य दूरीकरणोपायमाह—

मुस्तैलवालुगदजीरकधान्यकैलायश्चर्वयन्सदसि वाचमभिव्यनक्ति ।

स्वाभाविकं मुखजमुज्झति पूतिगन्धं गन्धञ्च मद्यलशुनादिभवञ्च नूनम् ॥ ३५ ॥

इति श्रीमिश्रलटकनतनयश्रीमिश्रभावविरचिते भावप्रकाशे वर्गप्रकरणे एकविंशः सन्धानवर्गः समाप्तः ॥ २१ ॥

# अथ द्वाविंशो मधुवर्गः ॥ २२ ॥

तत्र मधुनो नामगुणानाह—

मधु माक्षिकमाध्वीकक्षौद्रसारघमीरितम् । मक्षिकावरटीभृङ्गवान्तं पुष्परसोद्भवम् ॥ १ ॥

मधु शीतं लघु स्वादु रूक्षं ग्राहि विलेखनम् । चक्षुष्यं दीपनं स्वर्यं व्रणशोधनरोपणम् ॥ २ ॥

सौकुमार्यकरं सूक्ष्मं परं स्रोतोविशोधनम् । कषायानुरसं ह्लादि प्रसादजनकं परम् ॥ ३ ॥

वर्ण्यं मेधाकरं वृष्यं विशदं रोचनं हरेत् । कुष्ठार्शःकासपित्तास्रकफमेहक्लमक्रिमीन् ॥ ४ ॥

मेदस्तृष्णावमिश्वासहिक्काऽतीसारविड्ग्रहान् । दाहक्षतक्षयांस्तत्तु योगवाह्यल्पवातलम् ॥ ५ ॥

अथ मधुभेदानाह—

माक्षिकं भ्रामरं क्षौद्रं पौत्तिकं छात्रमित्यपि । आर्घ्यमौद्दालकं दालमित्यष्टौ मधुजातयः ॥ ६ ॥

अथ तेषां लक्षणं गुणाश्च, तत्र माक्षिकस्य लक्षणगुणानाह—

मक्षिकाः पिङ्गवर्णास्तु महत्यो मधुमक्षिकाः। ताभिः कृतं तैलवर्णं माक्षिकं परिकीर्त्तितम् ॥७॥

माक्षिकं मधुषु श्रेष्ठं नेत्रामयहरं लघु। कामलाऽर्शःक्षतश्वासकासक्षयविनाशनम् ॥ ८ ॥

अथ भ्रामरस्य लक्षणगुणानाह—

किञ्चित्सूक्ष्मैः प्रसिद्धेभ्यः षट्पदेभ्योऽलिभिश्चितम्। निर्मलं स्फटिकाभं यत्तन्मधु भ्रामरं स्मृतम्

भ्रामरं रक्तपित्तघ्नं मूत्रजाड्यकरं गुरु। स्वादुपाकमभिष्यन्दि विशेषात्पिच्छिलं हिमम् ॥१०॥

अथ क्षौद्रस्य लक्षणगुणानाह—

मक्षिकाः कपिलाः सूक्ष्माः क्षुद्राऽऽख्यास्तत्कृतं मधु। मुनिभिः क्षौद्रमित्युक्तं तद्वर्णात्कपिलं भवेत्

गुणैर्माक्षिकवत्क्षौद्रं विशेषान्मेहनाशनम् ॥ ११ ॥

अथ पौत्तिकमधुनो लक्षणगुणानाह—

कृष्णा या मशकोपमा लघुतराः प्रायो महापीडिका
वृक्षाणां पृथुकोटरान्तरगताः पुष्पासवं कुर्वते।
तास्तज्ज्ञैरिह पुत्तिका निगदितास्ताभिः कृतं सर्पिषा
तुल्यं यन्मधु तद्वनेचरजनैः संकीर्त्तितं पौत्तिकम् ॥ १२ ॥

पौत्तिकं मधु रूक्षोष्णं पित्तदाहास्रवातकृत्। विदाहि मेहकृच्छ्रघ्नं ग्रन्थ्यादिक्षतशोषि च ॥१३॥

अथ छात्रमधुनो लक्षणं गुणांश्चाह—

वरटाः कपिलाः पीताः प्रायो हिमवतो वने ॥ १४ ॥

कुर्वन्ति च्छत्रकाकारं तज्जं छात्रं मधु स्मृतम्। छात्रं कपिलपीतं स्यात्पिच्छिलं शीतलं गुरु १५

स्वादुपाकं कृमिश्वित्ररक्तपित्तप्रमेहजित्। भ्रमतृण्मोहविषहृत्तर्पणञ्च गुणाधिकम् ॥ १६ ॥

अथार्घ्यस्य लक्षणगुणानाह—

मधूकवृक्षनिर्यासं जरत्कार्वाश्रमोद्भवम्। स्रवत्यार्घ्यं तदाख्यातं श्वेतकं मालवे पुनः ॥ १७ ॥

तीक्ष्णं तुण्डासु याः पीता मक्षिकाः षट्पदोपमाः। अर्घ्यास्तास्तत्कृतं यत्तदार्घ्यमित्यपरे जगुः१८

आर्घ्यं मध्वतिचक्षुष्यं कफपित्तहरं परम्। कषायं कटुकं पाके तिक्तञ्च बलपुष्टिकृत् ॥ १९ ॥

अथौद्दालकमधुनो लक्षणगुणानाह—

प्रायो वल्मीकमध्यस्थाः कपिलाः स्वल्पकीटकाः। कुर्वन्ति कपिलं स्वल्पं तत्स्यादौद्दालकं मधु २०

औद्दालकं रुचिकरं स्वर्यं कुष्ठविषापहम्। कषायमुष्णमम्लञ्च कटुपाकञ्च पित्तकृत् ॥ २१ ॥

अथ दालमधुलक्षणगुणानाह—

संस्रुत्य पतितं पुष्पाद्यत्तु पत्रोपरि स्थितम्। मधुराम्लकषायञ्च तद्दालं मधुकीर्त्तितम् ॥ २२ ॥

दालं मधु लघु प्रोक्तं दीपनीयं कफापहम्। कषायानुरसं रूक्षं रुच्यं छर्दिप्रमेहजित् ॥ २३ ॥

अधिकं मधुरं स्निग्धं बृंहणं गुरु भारिकम् ॥ २४ ॥

*लघु पाके, गुरु भारिकं, तुलितम् ॥ २३–२४ ॥

अथ नवपुराणमधुगुणानाह—

नवं मधु भवेत्पुष्ट्यै नातिश्लेष्महरं सरम्। पुराणं ग्राहकं रूक्षं मेदोघ्नमतिलेखनम् ॥ २५ ॥

मधुनः शर्करायाश्च गुडस्यापि विशेषतः । एकसंवत्सरे वृत्ते पुराणत्वं स्मृतं बुधैः ॥ २६ ॥

अथ शीतलोष्णमधुनोर्गुणदोषानाह—

विषपुष्पादपि रसं सविषा भ्रमरादयः । गृहीत्वा मधु कुर्वन्ति तच्छीतं गुणवन्मधु ॥ २७ ॥
विषान्वयात्तदुष्णन्तु द्रव्योष्णेन वा सह । उष्णार्त्तस्योष्णकाले च स्मृतं विषसमं मधु ॥२८॥

अथ मधूच्छिष्टम् ( मोम ) तस्य नामगुणानाह—

मयनं तु मधूच्छिष्टं मधुशेषं च सिक्थकम् । मक्षाधारो मदनकं मधूषितमपि स्मृतम् ॥ २९ ॥
मदनं मृदु सुस्निग्धं भूतघ्नं व्रणरोपणम् । भग्नसन्धानकृद्वातकुष्ठवीसर्परक्तजित् ॥ ३० ॥

इति श्रीमिश्रलटकनतनयश्रीमिश्रभावविरचिते भावप्रकाशे वर्गप्रकरणे द्वाविंशो मधुवर्गः समाप्तः ॥२२॥

---

# अथ त्रयोविंश इक्षुवर्गः ॥ २३ ॥

तत्रादाविक्षोर्नामगुणानाह—

इक्षुर्दीर्घच्छदः प्रोक्तस्तथा भूरिरसोऽपि च । गुडमूलोऽसिपत्रश्च तथा मधुतृणः स्मृतः ॥ १ ॥
इक्षवो रक्तपित्तघ्ना बल्या वृष्याः कफप्रदाः । स्वादुपाकरसाः स्निग्धा गुरवो मूत्रला हिमाः॥२॥

अथेक्षुभेदानाह—

पौण्ड्रको भीरुकश्चापि वंशकः शतपोरकः । कान्तारस्तापसेक्षुश्च काण्डेक्षुः सूचिपत्रकः ॥ ३ ॥
नैपालो दीर्घपत्रश्च नीलपोरोऽथ कोशकृत् । मनोगुप्ता च इत्येता जातयस्तस्य कीर्त्तिताः ॥ ४ ॥

अथ श्वेतपौण्ड्रकभीरुकेक्षुगुणानाह—

वातपित्तप्रशमनो मधुरो रसपाकयोः । सुशीतो बृंहणो बल्यः पौण्ड्रको भीरुकस्तथा ॥ ५ ॥

अथ कोशकारेक्षुगुणानाह—( करिया कुशिआर )

कोशकारो गुरुः शीतो रक्तपित्तक्षयापहः ॥ ६ ॥

अथ कान्तारेक्षुगुणानाह—

कान्तारेक्षुर्गुरुर्वृष्यः श्लेष्मलो बृंहणः सरः ॥ ७ ॥

अथ वंशकेक्षुगुणानाह—

दीर्घपोरः सुकठिनः सक्षारो वंशकः स्मृतः ॥ ८ ॥

अथ शतपोरकेक्षुगुणानाह—

शतपर्वा भवेत्किञ्चित्कोशकारगुणान्वितः । विशेषात्किञ्चिदुष्णश्च सक्षारः पवनापहः ॥ ९ ॥

अथ तापसेक्षुगुणानाह—

तापसेक्षुर्भवेन्मृद्वी मधुरा श्लेष्मकोपनी । तर्पणी रुचिकृच्चापि वृष्या च बलकारिणी ॥ १० ॥

अथ काण्डेक्षुगुणानाह—

एवं गुणैस्तु काण्डेक्षुः स तु वातप्रकोपणः ॥ ११ ॥

अथ सूचीपत्रनैपालदीर्घपत्रनीलपोराणां गुणानाह—

सूचीपत्रो नीलपोरो नैपालो दीर्घपत्रकः । वातलाः कफपित्तघ्नाः सकषाया विदाहिनः ॥१२॥

अथ मनोगुप्तेक्षुगुणानाह—

मनोगुप्ता वातहर्त्री तृष्णाऽऽमयविनाशिनी । सुशीता मधुराऽतीव रक्तपित्तप्रणाशिनी ॥ १३ ॥

अथ बालतरुणवृद्धेक्षुगुणानाह—

बाल इक्षुः कफं कुर्यान्मेदोमेहकरश्च सः । युवा तु वातहृत् स्वादुरीषत्तीक्ष्णश्च पित्तनुत् ॥
रक्तपित्तहरो वृद्धः क्षतहृद् बलवीर्यकृत् ॥ १४ ॥

अथेक्षोरङ्गभेदेन गुणभेदानाह—

मूले तु मधुरोऽत्यर्थं मध्येऽपि मधुरः स्मृतः । अग्रे ग्रन्थिषु विज्ञेय इक्षुः पटुरसो जनैः ॥ १५ ॥

अथ चूषितेक्षुगुणानाह—

दन्तनिष्पीडितस्येक्षो रसः पित्तास्रनाशनः । शर्करासमवीर्यः स्यादविदाही कफप्रदः ॥ १६ ॥

अथ यान्त्रिकेक्षुरसगुणानाह—

मूलाग्रजन्तुग्रन्थ्यादिपीडनान्मलसङ्करात् । किञ्चित्कालविधृत्या च विकृतिं याति यान्त्रिकः ॥
तस्माद्विदाही विष्टम्भी गुरुः स्याद्यान्त्रिको रसः ॥ १७ ॥

अथ पर्युषितेक्षुरसगुणानाह—

रसः पर्युषितो नेष्टो ह्यम्लो वातापहो गुरुः । कफपित्तकरः शोषी भेदनश्चातिमूत्रलः ॥ १८ ॥

अथ पक्वेक्षुरसगुणानाह—

पक्वो रसो गुरुः स्निग्धः सुतीक्ष्णः कफवातनुत् । गुल्मानाहप्रशमनः किञ्चित्पित्तकरः स्मृतः॥१९

अथेक्षुरसनिर्मितपदार्थगुणानाह—

इक्षोर्विकारास्तृड्दाहमूर्छापित्तास्रनाशनाः । गुरवो मधुरा बल्याः स्निग्धा वातहराः सराः ॥
वृष्या मोहहराः शीता बृंहणा विषहारिणः ॥ २० ॥

अथ फाणितस्य लक्षणगुणानाह—( "चरका, राब, छोवा" इति लोके )।

इक्षो रसस्तु यः पक्वः किञ्चिद्गाढो बहुद्रवः । स एवेक्षुविकारेषु ख्यातः फाणितसंज्ञया ॥
फाणितं गुर्वभिष्यन्दि बृंहणं कफशुक्रकृत् । वातपित्तश्रमान्हन्ति मूत्रबस्तिविशोधनम् ॥ २१ ॥

अथ मत्स्यण्डीलक्षणगुणानाह—( "रावकाकब, खण्डराव" इति लोके )

इक्षो रसो यः सम्पक्वो घनः किञ्चिद्द्रवान्वितः ॥ २२ ॥
मन्दं यत्स्यन्दते तस्मात्तन्मत्स्यण्डी निगद्यते। मत्स्यण्डी भेदिनी बल्या लघ्वी पित्तानिलापहा।
मधुरा बृंहणी वृष्या रक्तदोषापहा स्मृता ॥ २३ ॥

अथ गुडस्य लक्षणं गुणांश्चाह—

इक्षो रसो यः सम्पक्वो जायते लोष्टवद् दृढः ॥ २४ ॥
स गुडो गौडदेशे तु मत्स्यण्ड्येव गुडो मतः। गुडो वृष्यो गुरुः स्निग्धो वातघ्नो मूत्रशोधनः ॥
नातिपित्तहरो मेदः कफक्रिमिबलप्रदः॥ २५ ॥

अथ पुराणगुडस्य गुणानाह—

गुडो जीर्णो लघुः पथ्योऽनभिष्यन्द्यग्निपुष्टिकृत्। पित्तघ्नो मधुरो वृष्यो वातघ्नोऽसृक्प्रसादनः।२६

अथ नवीनगुडस्य गुणानाह—

गुडो नवः कफश्वासकासक्रिमिकरोऽग्निकृत् ॥ २७ ॥

अथानुपानभेदेन गुडस्य गुणानाह—

श्लेष्माणमाशु विनिहन्ति सहार्द्रकेण पित्तं निहन्ति च तदेव हरीतकीभिः ।
शुण्ठ्या समं हरति वातमशेषमित्थं दोषत्रयक्षयकराय नमो गुडाय ॥ २८ ॥

अथ खण्डस्य गुणानाह—

खण्डन्तु मधुरं वृष्यं चक्षुष्यं बृंहणं हिमम् । वातपित्तहरं स्निग्धं बल्यं वान्तिहरं परम् ॥२९॥

*"खण्डमि" ति प्रसिद्ध ( खांड़-गुड़ ) ॥ २९ ॥

अथ शर्करालक्षणगुणानाह—( "चीनी इति लोके प्रसिद्धा )

खण्डन्तु सिकतारूपं सुश्वेतं शर्करा सिता ।
सिता सुमधुरा रुच्या वातपित्तास्रदाहहृत् । मूर्च्छाच्छर्दिज्वरान्हन्ति सुशीता शुक्रकारिणी ३०

अथ पुष्पसिता सितोपलयोर्गुणानाह—( फूल से बनाई चीनी और मिश्री )

अथ पुष्पसिता शीता रक्तपित्तहरी लघुः । सितोपला सरा लघ्वी वातपित्तहरी हिमा ॥३१॥

अथ मधुखण्डगुणानाह—

मधुजा शर्करा रूक्षा कफपित्तहरी गुरुः । छर्द्यतीसारतृड्दाहरक्तहृत्तुवरा हिमा ॥ ३२ ॥

अथ परिभाषामाह—

यथा यथैषां नैर्मल्यं मधुरत्वं यथा यथा । स्नेहलाघवशैत्यादि सरत्वञ्च तथा तथा ॥ ३३ ॥

इति श्रीमिश्रलटकनतनयश्रीमिश्रभावविरचिते भावप्रकाशे वर्गप्रकरणे त्रयोविंश इक्षुवर्गः समाप्तः ॥२३॥

---

# अथ चतुर्विंशोऽनेकार्थनामवर्गः ॥ २४ ॥

## तत्र द्व्यर्थानि नामान्याह—

यथा—अश्मन्तकः-अम्ललोणिका, कोविदारश्च । कठिल्लकः-कारवेल्लः, रक्तपुनर्नवा च । कुलकः-पटोलः, कुपीलुश्च (कुपीलुः-"कुचिला" इति लोके प्रसिद्धः) कोशातकी-महाकोशातकी, राजकोशातकी च । दीप्यकः-यवानी अजमोदा च । मरुबकः-फणिजकः, पिण्डीतकश्च, (फणिजकः-"मरुआ" इति लोके) (पिण्डीतकः="मैनफल" इति लोके) । मधूलिका-मूर्वा, जलयष्टी च । रुचकम्-सौवर्चलं, बीजपूरकञ्च । लोणिका-लोणीशाकं, चांगेरीशाकञ्च । वसुकः-रक्तार्कः, क्षारलवणं च । वाह्लीकम्-कुङ्कुमं, हिङ्गु च । वितुन्नकम्-धान्यकं, तुत्थञ्च । स्वादुकण्टकः-गोक्षुरः, विकङ्कतश्च । अग्निमुखी-भल्लातकी, लाङ्गली च । अग्निशिखम्-कुङ्कुमं, कुसुम्भञ्च । अजशृङ्गी-मेषशृङ्गी, कर्कटशृङ्गी च । प्रियङ्गुः-फलिनी, कङ्गुश्च । भृङ्गः-भृङ्गराजः, त्वक् च । समङ्गा-मञ्जिष्ठा, लज्जालुश्च । अमोघा-विडङ्गं, पाटला च । मोचा-कदली, शाल्मलिश्च । कुटन्नटः-श्योनाकः, कैवर्तीमुस्तकञ्च । कुनटी-धनिका, मनःशिला च । घोण्टा-पूगः, बदरी च । त्रिपुटा-त्रिवृत, सूक्ष्मैला च । शटी-कर्चूरः, गन्धपलाशी च । दन्तशठः-जम्बीरः, कपित्थश्च ।

दन्तशठा-अम्लिका आङ्केरी च। अरुणम्-मञ्जिष्ठा, अतिविषा च। कणा-पिप्पली, जीरकञ्च। तालपर्णी-मुशली, मुरा च। पीलुपर्णी-मूर्वा, बिम्बी च ब्राह्मणी-भार्ङ्गी, स्पृक्का च। अपराजिता-विष्णुक्रान्ता, शालिपर्णी च। आस्फोता-अपराजिता सारिवा च। पारावतपदी-ज्योतिष्मती, काकजङ्घा च। शारदी-सारिवा, जलपिप्पली च। उग्रगन्धा-वचा, यवानी च। परिव्याधः—कर्णिकारः, जलवेतसश्च। अञ्जनम्-स्रोतोऽञ्जनं, सौवीरञ्च। अग्निः-चित्रकः, भल्लातश्च। कृमिघ्नः-विडङ्गः, हरिद्रा च। तेजनः-शरः, वेणुश्च। तेजनी-तेजस्वती, मूर्वा च। रोचनः—काम्पिल्लः, रोचना च। रोचना-गोरोचना, रक्तकह्लारश्च। राजादनम्-क्षीरिका, प्रियालश्च। शकुलादनी-कटुका, जलपिप्पली च। गोलोमी-श्वेतदूर्वा, वचा च। पद्मा—पद्मचारिणी, भार्ङ्गी च। श्यामा-सारिवा प्रियङ्गुश्च। उत्तमा-त्रिफला, सर्वतोभद्रा च। धान्यम्-धान्याकं, शाल्यादि च। सहस्रवीर्या-नीलदूर्वा, महाशतावरी च। सेव्यम्-उशीरं, लामज्जकञ्च। उदुम्बरः-जन्तुफलं, ताम्रञ्च। ऐन्द्री-इन्द्रवारुणी, इन्द्राणी च। कटम्भरा-कटुका, श्योनाकञ्च क्षारः-यवक्षारः, स्वर्जिका च। गण्डीरः-गण्डारी, मञ्जिष्ठा च। (गण्डारी शाकविशेषो "गण्डानी" ति लोके)। गन्धारी-दुरालभा, गन्धपलाशी च। चित्रा-इन्द्रवारुणी, वृहद्दन्ती च। तुण्डिकेरी-कार्पासी, बिम्बी च। धारा-गुडूची, क्षीरकाकोली च। बालपत्रः-खदिरः, यवासश्च। वारिः-बालकम्, उदकञ्च। अङ्गारवल्ली-भार्ङ्गी, गुञ्जा च। अमृणालम्-लामज्जकम्, उशीरञ्च। कुण्डली-गुडूची, कोविदारश्च। गन्धफली-प्रियङ्गुः, चम्पककलिका च। दीर्घमूलः-यवासः, शालिपर्णी च। पिच्छिला-शाल्मली, शिंशपा च। पुष्पफलः-कपित्थः, कूष्माण्डश्च। पोटगलः-नलः काशश्च। धवफलः-कुटजः, वंशश्च। देवी-मूर्वा, स्पृक्का च। विश्वा-शुण्ठी, अतिविषा च। शीतशिवम्-सैन्धवं, मिश्रेया च। कर्कशः-काम्पिल्यः, कासमर्दश्च। चर्मकषा-सातला, मांसरोहिणी च। नन्दिवृक्षः-अश्वत्थभेदः (अधोमुखपत्रशाखो। "वेलिया पीपर" इति लोके) तूणिश्च। पयः-क्षीरम्, उदकञ्च। रुहा-दूर्वा, मांसरोहिणी च। सिंही-बृहती, वासा च। कतकम्-विडलवणम्, निर्मलीफलं च। कण्टकाढ्यः-कुब्जकः, शाल्मली च। यक्षधूपः-सरलनिर्यासः, रालश्च। द्राविणी-शटी, सूक्ष्मैला च। हट्टविलासिनी-हरिद्रा, नखी च। तिलपर्णम्—रक्तचन्दनम्। ग्रन्थिपर्णं च। मधुरः-जीवकः, जीवनीयगणश्च। लोहद्राविणी-गण्डदूर्वा, अम्लवेतसश्च। नागिनी-ताम्बूली, नागपुष्पी च। मृदुरेचनी-त्रिवृत्, मार्कण्डिका च। नटः-श्योनाकः, अशोकश्च। वनस्पतिः-वटः, नन्दिवृक्षश्च। मन्दारः-श्वेतार्कः, महानिम्बश्च। अम्बुजः-कमलम्, इज्जलश्च। कबरी-बर्बरी, हिङ्गुपत्री च कुमारी-घृतकुमारिका, शतपत्री च। वरतिक्तकः-पाठा, पर्पटश्च। चित्रकः-पाठा, अनलनामा च। यज्ञियः-खदिरः, पलाशश्च। रक्तबीजः-अरिष्टकः, कन्दुरी च क्षारश्रेष्ठः-पलाशः, मोक्षकश्च। श्वेतपुष्पः-श्वेतार्कः, इन्द्रवारुणी च। तुवरी-सौराष्ट्री, आढकी च। कुम्भिका-पूगफला, वारिपर्णी च। राजपुत्रिका-रेणुका, जाती च। रक्तपुष्पः-रक्तार्कः, कन्दुरी च। शप्तला-सातला, वासन्ती च। विषमुष्टिकः-महानिम्बः, विषतिन्दुकश्च। रक्तफला-स्वर्णवल्ली, वचश्च। चन्द्रहासा-गुडूची, लक्ष्मणा च।

## अथ त्र्यर्थानि नामान्याह—

क्रमुकः—पूगः, तूदः, पट्टिकालोध्रश्च । क्षुरकः-कोकिलाक्षः, गोक्षुरः, तिलकनामपुष्पविशेषश्च । प्रियकः-प्रियङ्गुः, कदम्बः, असनश्च । पृथ्वीका-कालाजाजी, बृहदेला, हिङ्गुपत्री च । भूतीकम्-भूनिम्बं, कत्तृणं, भूस्तृणञ्च । सोमवल्कः-कट्फलः श्वेतखदिरः, घृतपूर्णकरञ्जश्च । सौगन्धिकम्-कह्लारं, कत्तृणं, गन्धकञ्च । भृङ्गः-भृङ्गराजः, त्वग्, भ्रमरश्च । अरिष्टः-निम्बः, रसोनं, मद्यञ्च । मर्कटी-कपिकच्छुः, अपामार्गः, करञ्जी च । अम्बष्ठा-पाठा, चाङ्गेरी, मोचिका च । कृष्णा-पिप्पली, कालाजाजी, नीली च । क्षीरिणी-दुग्धिका, क्षीरकाकोली, श्वेतसारिवा च । मधुपर्णी-गुडूची, गम्भारी, नीली च । मण्डूकपर्णः-श्योनाकः, स स्त्रियां तु मञ्जिष्ठा ब्राह्मी माण्डूकी च । श्रीपर्णी-गम्भारी, गणिकारिका, कट्फलं च । अमृता-गुडूची, हरीतकी, धात्री च । अनन्ता-दुरालभा, नीलदूर्वा, लाङ्गली च । ऋष्यप्रोक्ता-अतिबला, महाशतावरी, कपिकच्छुश्च । कृष्णवृन्ता-पाटली, गाम्भारी, माषपर्णी च । जीवन्ती-गुडूची, शाकविशेषः, वन्दा च । लता-सारिवा-प्रियङ्गुः, ज्योतिष्मती च । समुद्रान्ता-दुरालभा, कार्पासी, स्पृक्का च हैमवती-हरीतकी, श्वेतवचा, पीतदुग्धः सेहुण्डश्च, ( यस्य मूलं "चोक" इति प्रसिद्धम् ) । अव्यथा-हरीतकी, महाश्रावणी, पद्मचारिणी च । षड्ग्रन्था-गन्धपलाशी, बचा, करञ्जी, च । वरदा-सुवर्चला ( "हुरहुर" इति लोके ), अश्वगन्धा, वाराही ("गेठी"ति लोके) । इक्षुगन्धा-काशः, कोकिलाक्षः, क्षीरविदारी च । कालस्कन्धः-तमालः, तिन्दुकं, कालखदिरश्च । महौषधम्-शुण्ठी, रसोनः, विषञ्च । मधु-क्षौद्रं, पुष्परसः, मद्यञ्च । कपीतनः-आम्रातकः, शिरीषः, गर्दभाण्डश्च । मदनः-पिण्डीतकः, धत्तूर', सिक्थकञ्च । शतपर्वा-वंशः दूर्वा, वचा च । सहस्रवेधी-अम्लवेतसः, मृगमदः, हिङ्गु च । ताम्रपुष्पी-धातकी, पाटला, श्यामात्रिवृच्च । सदापुष्पः-श्वेतार्कः, रक्तार्कः, कुन्दश्च । सुरभिः-शल्लकी, सुरा, एलवालुकं च । लक्ष्मीः-ऋद्धिः, वृद्धिः, शमी च । कालानुसार्यम्-कालीयकं, तगरं शैलेयञ्च । चाम्पेयः—चम्पकः, नागकेसरः पद्मकेसरश्च । नादेयी—गणिकारिका, जलजम्बूः, जलवेतसश्च । पाक्यम्—विडम्, सौवर्चलम्, यवक्षारश्च । विशल्या—लाङ्गली, गुडूची, लघुदन्ती च । इन्द्रद्रुः—ककुभः, देवदारुः, कुटजश्च । काश्मीरं काश्मीरी च—कुङ्कुमम्, पुष्करमूलम्, गम्भारी च । गुन्द्रः—पटेरकः, मुञ्जः शरश्च । गुन्द्रा—प्रियङ्गुः, फलिनी, भद्रमुस्तकश्च । चुक्रम्-शुक्तम्, अम्लवेतसम्, वृक्षाम्लञ्च । पारिभद्रः-निम्बः, पारिजातः, देवदारु च । पीतदारु-हरिद्रा, देवदारु, सरलश्च । वीरः-ककुभः, वीरणं, काकोली च । वीरतरुः-ककुभः, वीरणम्, शरश्च । मयूरः-अपामार्गः अजमोदा, तुत्थञ्च । रक्तसारः-रक्तचन्दनं, पतङ्गः, खदिरश्च । वदरा-सुवर्चला, अश्वगन्धा, वाराही च । वशिरः-रक्तापामार्गः, गजपिप्पली, समुद्रलवणञ्च । सौवीरम्-अञ्जनभेदः, बदरम्, सन्धानभेदश्च । वञ्जुलः—अशोकः, वेतसः, तिनिशश्च । शिला-मनःशिला, शिलाजतु, गैरिकञ्च । सोमवल्ली—बाकुची गुडूची, ब्राह्मी च । अक्षीवः-शोभाञ्जनः, महानिम्बः, समुद्रलवणञ्च । कारवी-कालाजाजी शताह्वा, अजमोदा च । धामार्गवः रक्तापामार्गः, राजकोशातकी, महाकोशातकी च । दुःस्पर्शः—

यवासः, कपिकच्छूः, कण्टकारी च। पलाश-किंशुकः, गन्धपलाशी, पत्रञ्च। कालमेषी-मञ्जिष्ठा, वाकुची, श्यामात्रिवृच्च। पलङ्कषा-गुग्गुलुः, गोक्षुरः, लाक्षा च। मधुरसा-द्राक्षा, मूर्वा, गम्भारी च। रसा-रास्ना, शल्लकी पाठा च। श्रेयसी=हरीतकी, रास्ना, गजपिप्पली च। लोहम्-अयः, कांस्यम्, अगुरु च। सहा-मुद्गपर्णी, बलाभेदः ( ककही इति लोके ), शतपत्री ("सेवती गुलाब" इति लोके)। सुवहा-रास्ना, नाकुली, मोलपुष्पः सिन्दुवारश्च। कठिल्लकः-कारवेल्लम्, रक्तपुनर्नवा, कृष्णबर्बरी च। मधूलिका-मूर्वा, यष्टी, मधूकश्च। वितुन्नकम्-धान्यकम्, तुत्थकम्, गोनर्दश्च। देवी-स्पृक्का, मूर्वा, कर्कोटी च। वसुकः=शिवमल्ली, श्वेतार्कः शोभकं च। गण्डीरः-शाकविशेषः, मञ्जिष्ठा, गण्डदूर्वा च। लाङ्गली-कलिहारी, जलपिप्पली, नारिकेलश्च। पिच्छिला-शिंशपा, शाल्मलिः, भूतवृक्षश्च। महासहा-माषपर्णी, अम्लातकः, कुब्जकश्च। चन्द्रिका-मेथी, चन्द्रशूरः, श्वेतकण्टकारी च। इति।

## अथ चतुरर्थकानि नामान्याह—

श्वेतपुष्पा-इन्द्रवारुणी, सिन्दुवारः, श्वेतार्कः, सैरेयकश्च। कारवी-पृथ्वीका, शतपुष्पा, कालाजाजी, अजमोदा च। अम्बष्ठा-पाठा, चाङ्गेरी, मोचिका, यूथिका च। इति।

## अथ बह्वर्थकानि नामान्याह—

अक्षशब्दः स्मृतोऽष्टासु सौवर्चलविभीतके। कर्षपद्माक्षरुद्राक्षशकटेन्द्रियपाशके ॥ १ ॥

काकाख्यः काकमाची च काकोली काकणन्तिका।

काकजङ्घा काकनासा काकोदुम्बरिकाऽपि च ॥

सप्तस्वर्थेषु कथितः काकशब्दो विचक्षणैः ॥ २ ॥

सर्पद्विरदमेषेषु सीसके नागकेसरे। नागवल्ल्यां नागदन्त्यां नागशब्दः प्रयुज्यते ॥

मांसे द्रवे चेक्षुरसे पारदे मधुरादिषु। बालरोगे विषे नीरे रसो नवसु वर्त्तते ॥ ३ ॥

इति श्रीमिश्रलटकनतनयश्रीमिश्रभावविरचिते भावप्रकाशे वर्गप्रकरणे चतुर्विंशोऽनेकार्थवर्गः समाप्तः ॥२४॥

इति भावप्रकाशे पूर्वखण्डे प्रथमभागे द्रव्यगुणप्रकरणापरनामकं षष्ठं वर्गप्रकरणं समाप्तम् ॥ ६ ॥

समाप्तश्चायं पूर्वखण्डे प्रथमो भागः ॥ १ ॥

---

प्राप्तिस्थानम्—

चौखम्बा-संस्कृत-पुस्तकालय,

बनारस सिटी।

# भावप्रकाशः

## पूर्वखण्डे द्वितीयो भागः ।

### तत्र सप्तमं परिभाषाऽऽदिप्रकरणम् ७ ।

### अथ प्रथमं मानपरिभाषाप्रकरणम् ॥ १ ॥

तत्रादौ मानोक्तौ हेतुमाह—

न मानेन विना युक्तिर्द्रव्याणां जायते क्वचित् । अतः प्रयोगकार्यार्थं मानमत्रोच्यते मया ॥१॥

अथ मागधमानमाह—

चरकस्य मतं वैद्यैराद्यैर्यस्मान्मतं ततः । विहाय सर्वमानानि मागधं मानमुच्यते ॥ २ ॥
त्रसरेणुर्बुधैः प्रोक्तस्त्रिंशता परमाणुभिः । त्रसरेणुस्तु पर्य्यायनाम्ना वंशी निगद्यते ॥ ३ ॥
जालान्तरगतैः सूर्य्यकरैर्वंशी विलोक्यते । षड्वंशीभिर्मरीचिः स्यात्ताभिः षड्भिश्च राजिका ४
तिसृभी राजिकाभिश्च सर्षपः प्रोच्यते बुधैः । यवोऽष्टसर्षपैः प्रोक्तो गुञ्जा स्यात्तच्चतुष्टयम् ॥५॥
षड्भिस्तु रक्तिकाभिः स्यान्माषको हेमधान्यकौ । माषैश्चतुर्भिः शाणः स्याद् धरणः स निगद्यते ६
टङ्कः स एव कथितस्तद्द्वयं कोल उच्यते । क्षुद्रको वटकश्चैव द्रङ्क्षणः स निगद्यते ॥ ७ ॥
कोलद्वयन्तु कर्षः स्यात्स प्रोक्तः पाणिमानिका । अक्षः पिचुः पाणितलं किञ्चित्पाणिश्च तिन्दुकम् ८
बिडालपदकं चैव तथा षोडशिका मता । करमध्यो हंसपदं सुवर्णं कवलग्रहः ॥ ९ ॥
उदुम्बरञ्च पर्य्यायैः कर्षमेव निगद्यते । स्यात्कर्षाभ्यामर्द्धपलं शुक्तिरष्टमिका तथा ॥ १० ॥
शुक्तिभ्याञ्च पलं ज्ञेयं मुष्टिराम्रं चतुर्थिका । प्रकुञ्चः षोडशी बिल्वं पलमेवात्र कीर्त्यते ॥ ११ ॥
पलाभ्यां प्रसृतिर्ज्ञेया प्रसृतञ्च निगद्यते । प्रसृतिभ्यामञ्जलिः स्यात्कुडवोऽर्द्धशरावकः ॥१२॥
अष्टमानञ्च स ज्ञेयः कुडवाभ्याञ्च मानिका । शरावोऽष्टपलं तद्वज्ज्ञेयमत्र विचक्षणैः ॥ १३ ॥
शरावाभ्यां भवेत्प्रस्थश्चतुःप्रस्थस्तथाऽऽढकः । भाजनं कांस्यपात्रं च चतुःषष्टिपलश्च सः ॥१४॥
चतुर्भिराढकैर्द्रोणः कलशो नल्वणोऽर्मणः । उन्मानञ्च घटो राशिर्द्रोणपर्य्यायसंज्ञितः ॥ १५ ॥
द्रोणाभ्यां शूर्पकुम्भौ च चतुःषष्टिशरावकः । शूर्पाभ्याञ्च भवेद् द्रोणी वाहो गोणी च सा स्मृता । १६
द्रोणीचतुष्टयं खारी कथिता सूक्ष्मबुद्धिभिः । चतुःसहस्रपलिका षण्णवत्यधिका च सा ॥ १७ ॥
पलानां द्विसहस्रञ्च भार एकः प्रकीर्त्तितः । तुलापलशतं ज्ञेयं सर्वत्रैवैष निश्चयः ॥ १८ ॥
माषटङ्काक्षबिल्वानि कुडवप्रस्थमाढकम् । राशिगोणी खारिकेति यथोत्तरचतुर्गुणम् ॥ १९ ॥

*मागधपरिभाषायां षड्रत्तिकोमाषश्चतुर्विंशतिरत्तिकष्टङ्कः, षण्णवतिरत्तिकः कर्षः । अयं चरकसम्मतः । सुश्रुतमते तु-पञ्चरत्तिको माषः, विंशतिरत्तिकष्टङ्कः, अशीतिरत्तिकः कर्षः । अयमेव कालिङ्गपरिभाषायामपि । यतस्तत्राष्टरत्तिको माषो द्वात्रिंशद्रत्तिकष्टङ्कः, सार्धं-टङ्कद्वयमितः कर्षः ॥ २-१९ ॥

अथ द्रवार्द्रशुष्कद्रव्याणां मानविषये परिभाषामाह—

गुञ्जादिमानमारभ्य यावत्स्यात्कुडवस्थितिः। द्रवार्द्रशुष्कद्रव्याणां तावन्मानं समं मतम् २०

प्रस्थादिमानमारभ्य द्विगुणं तद् द्रवार्द्रयोः। मानं तथा तुलायास्तु द्विगुणं न क्वचित्स्मृतम् २१

अथ कुडवभाण्डस्य लक्षणमाह—

मृद्वृक्षवेणुलोहादेर्भाण्डं यच्चतुरङ्गुलम्। विस्तीर्णञ्च तथोच्चञ्च तन्मानं कुडवं वदेत् ॥ २२ ॥

अथ कालिङ्गमानमाह—

यतो मन्दाग्नयो ह्रस्वा हीनसत्त्वा नराः कलौ। अतस्तु मात्रा तद्योग्या प्रोच्यते सुज्ञसम्मता२३

यवो द्वादशभिर्गौरसर्षपैः प्रोच्यते बुधैः। यवद्वयेन गुञ्जा स्यात्त्रिगुञ्जो वल्ल उच्यते ॥ २४ ॥

माषो गुञ्जाभिरष्टाभिः सप्तभिर्वा भवेत्क्वचित्। चतुर्भिर्माषकैः शाणः स निष्कष्टङ्क एव च॥२५॥

गद्याणो माषकैः षड्भिः कर्षः स्याद्दशमाषकः। चतुष्कर्षैः पलं प्रोक्तं दशशाणमितं बुधैः॥२६॥

चतुष्पलैश्च कुडवः प्रस्थाद्याः पूर्ववन्मताः। स्थितिर्नास्त्येव मात्रायाः कालमग्निं वयो बलम्॥२७

प्रकृतिं दोषदेशौ च दृष्ट्वा मात्रां प्रकल्पयेत्। नाल्पं हन्त्यौषधं व्याधिं यथाऽम्भोल्पं महानलम्॥

अतिमात्रं च दोषाय यथा शस्ये बहूदकम् ॥ २८ ॥

इति श्रीमिश्रलटकनतनयश्रीमिश्रभावविरचिते भावप्रकाशे परिभाषाऽऽदिप्रकरणे

प्रथमं मानपरिभाषाऽऽख्यं प्रकरणं समाप्तम् ॥ १ ॥

---

# अथ द्वितीयं भेषजविधानप्रकरणम् ॥ २ ॥

## अथ भेषजानां विधानानि।

तत्रादौ कषायभेदानाह—

स्वरसश्च तथा कल्कः क्वाथश्च हिमफाण्टकौ। ज्ञेयाः कषायाः पञ्चैते लघवः स्युर्यथोत्तरम् ॥१॥

अथ स्वरसविधिमाह—

अहतात्तत्क्षणाकृष्टाद् द्रव्यात्क्षुण्णात्समुद्भवेत्। वस्त्रनिष्पीडितो यश्च स्वरसो रस उच्यते ॥२॥

*अहताद् = शीताग्निकीटादिभिरनुपहतात्। क्षुण्णात् = संपिष्टात् ॥ २ ॥

कुडवं चूर्णितं द्रव्यं क्षिप्तञ्च द्विगुणे जले। अहोरात्रं स्थितं तस्माद्भवेद्वा रस उत्तमः ॥ ३ ॥

* चूर्णितं = चूर्णीकृतम् ॥ ३ ॥

आदाय शुष्कद्रव्यं वा स्वरसानामसंभवे। जलेऽष्टगुणिते साध्यं पादशिष्टं च गृह्यते ॥ ४ ॥

स्वरसस्य गुरुत्वाच्च पलमर्द्धं प्रयोजयेत्। निशोषितं चाग्निसिद्धं पलमात्रं रसं पिबेत् ॥ ५ ॥

* निशोषितं=निशायामुषितम् ॥ ५ ॥

सितामधुगुडक्षाराञ्जीरकं लवणं तथा। घृतं तैलञ्च चूर्णादीन्कोलमात्रान् रसे क्षिपेत् ॥ ६ ॥

* कोलः = टङ्कद्वयम् ॥ ६ ॥

अथ तण्डुलजलविधिमाह—

कण्डितं तण्डुलपलं जलेऽष्टगुणिते क्षिपेत्। भावयित्वा जलं ग्राह्यं देयं सर्वत्र कर्मसु ॥ ७ ॥

* भावयित्वा = कोमलीकृत्य ॥ ७ ॥

अथ हिमनिर्माणविधिमाह—

क्षुण्णं द्रव्यपलं सम्यक् षड्भिर्नीरपलैः प्लुतम् । निशोषितं हिमः स स्यात्तथा शीतकषायकः ॥
तस्य मानं मतं पाने पलद्वयमितं बुधैः ॥ ८ ॥

* क्षुण्णं = चूर्णीकृतम् ॥ ८ ॥

अथ मन्थनिर्माणविधिमाह—

जले चतुष्पले शीते क्षुण्णं द्रव्यपलं क्षिपेत् । मृत्पात्रे मन्थयेत् सम्यक् तस्माच्च द्विपलं पिबेत् ९

* क्षुण्णं = चूर्णीकृतम् । मन्थयेत् = मथ्नीयात् ॥ ९ ॥

अथ फाण्टनिर्माणविधिमाह—

क्षुण्णे द्रव्यपले सम्यग्जलमुष्णं विनिक्षिपेत् । मृत्पात्रे कुडवोन्मानं ततस्तु स्रावयेत्पटात् ॥१०॥
स स्याच्चूर्णद्रवः फाण्टस्तन्मानं द्विपलोन्मितम् । क्षौद्रं सितागुडादींस्तु कर्षमात्रान्विनिक्षिपेत्

* क्षुण्णे = चूर्णीकृते, स चूर्णद्रवः फाण्टः स्यादित्यन्वयः ॥ १०–११ ॥

अथ कल्कविधिमाह—

द्रव्यमार्द्रं शिलापिष्टं शुष्कं वा सजलं भवेत् । तदेव कल्को विज्ञेयस्तन्मानं कर्षसम्मितम् ॥१२॥
कल्के मधु घृतं तैलं देयं द्विगुणमात्रया । सितां गुडं समं दद्यात् द्रवो देयश्चतुर्गुणः ॥ १३ ॥

अथ चूर्णविधिमाह—

अत्यन्तशुष्कं यद् द्रव्यं सुपिष्टं वस्त्रगालितम् । तत्स्याच्चूर्णं रजः क्षोदस्तन्मात्रा कर्षसम्मता १४
चूर्णे गुडः समो देयः शर्करा द्विगुणा मता । चूर्णेषु भर्जितं हिङ्गु देयं नोत्क्लेदकृद्भवेत् ॥ १५ ॥
लिहेच्चूर्णं द्रवैः सर्वघृताद्यैर्द्विगुणोन्मितैः । पिबेच्चतुर्गुणैरेवं चूर्णमालोडितं द्रवैः ॥ १६ ॥

अथानुपानमाह—

चूर्णावलेहगुटिकाकल्कानामनुपानकम् । पित्तवातकफातङ्के त्रिद्व्येकपलमाहरेत् ॥ १७ ॥
यथा तैलं जले क्षिप्तं क्षणेनैव विसर्पति । अनुपानबलादङ्गे तथा सर्पति भेषजम् ॥ १८ ॥

अथ भावनाविधिमाह—

द्रवेण यावता सम्यक् चूर्णं सर्वं प्लुतं भवेत् । भावनायाः प्रमाणं तु चूर्णं प्रोक्तं भिषग्वरैः १९

अथ पुटपाकविधिमाह—

पुटपाकस्य कल्कस्य स्वरसो गृह्यते यतः । अतस्तु पुटपाकानां युक्तिरप्रोच्यते मया ॥२०॥
पुटपाकस्य पाकोऽयं लेपस्याङ्गारवर्णता । लेपञ्च द्व्यङ्गुलं स्थूलं कुर्याद् द्व्यङ्गुलमात्रकम् ॥२१॥
काश्मरीवटजम्ब्वादिपत्रैर्वेष्टनमुत्तमम् ॥ २२ ॥
पलमात्रो रसो ग्राह्यः कर्षमात्रं मधु क्षिपेत् । कल्कचूर्णद्रवाद्यास्तु देयाः कोलमिता बुधैः ॥२३॥

अथोष्णोदकविधिमाह—

अष्टमेनांशशेषेण चतुर्थेनार्द्धकेन वा । अथ वा क्वथनेनैव सिद्धमुष्णोदकं भवेत् ॥ २४ ॥
श्लेष्मामवातमेदोघ्नं वस्तिशोधनदीपनम् । कासश्वासज्वरान् हन्ति पीतमुष्णोदकं निशि ॥२५॥

अथ क्षीरपाकविधिमाह—

क्षीरमष्टगुणं द्रव्यात्क्षीरात्नीरं चतुर्गुणम् । क्षीरावशेषं तत्पीतं शूलमामोद्भवं जयेत् ॥ २६ ॥

अथ क्वाथविधिमाह—

पानीयं षोडशगुणं क्षुण्णे द्रव्यपले क्षिपेत् । मृत्पात्रे क्वाथयेद्ग्राह्यमष्टमांशावशेषितम् ॥ २७ ॥
कर्षादौ तु पलं यावद् दद्यात्षोडशिकं जलम् । ततस्तु कुडवं यावत्तोयमष्टगुणं भवेत् ॥
चतुर्गुणमतश्चोर्ध्वं यावत् प्रस्थादिकं जलम् ॥ २८ ॥

*षोडशिकं = षोडशगुणम् ॥ २८ ॥

तज्जलं पाययेद् धीमान्कोष्णं मृद्वग्निसाधितम् । शृतः क्वाथः कषायश्च निर्यूहः स निगद्यते २९

अथ क्वाथपानमात्रामाह—

मात्रोत्तमा पलेन स्यात्त्रिभिरक्षैस्तु मध्यमा । जघन्या च पलार्द्धेन स्नेहक्वाथौषधेषु च ॥३०॥

तन्त्रान्तरे—

क्वाथ्यद्रव्यपले वारि द्विरष्टगुणमिष्यते । चतुर्भागावशिष्टन्तु पेयं पलचतुष्टयम् ॥ ३१ ॥
दीप्तानलं महाकायं पाययेदञ्जलिं जलम् । अन्ये त्वर्द्धं परित्यज्य प्रसृतिं तु चिकित्सकाः ॥३२॥
क्वाथस्यागमनिच्छन्तस्त्वष्टभागावशेषितम् । पारम्पर्य्योपदेशेन वृद्धवैद्याः पलद्वयम् ॥ ३३ ॥

* अष्टभागावशेषितस्य चतुर्भागावशिष्टापेक्षया गुरुत्वाद् दीप्तानलं महाकायं पलद्वयं पाययेत् । मध्यमाग्निमल्पकायं पलमात्रं पाययेत् । "मात्रोत्तमा पलेन स्याद्" इत्यादिवचनात् ॥ ३१-३३ ॥

अथ क्वाथे सिताऽऽदीनां प्रक्षेपमानमाह—

क्वाथे क्षिपेत्सितामंशैश्चतुर्थाष्टमषोडशैः । वातपित्तकफातङ्के विपरीतं मधु स्मृतम् ॥ ३४ ॥
जीरकं गुग्गुलं क्षारं लवणं च शिलाजतु । हिङ्गु त्रिकटुकञ्चैव क्वाथे शाणोन्मितं क्षिपेत् ॥३५॥
क्षीरं घृतं गुडं तैलं मूत्रं चान्यद् द्रवं तथा । कल्कं चूर्णादिकं क्वाथे निक्षिपेत् कर्षसम्मितम्३६

अथौषधभक्षणविधिमाह—

तत्रोपविश्य विश्रान्तः प्रसन्नवदनेक्षणः । औषधं हेमरजतमृद्भाजनपरिस्थितम् ॥ ३७ ॥
पिबेत् प्रसन्नहृदयः पीत्वा पात्रमधोमुखम् । विधायाचम्य सलिलं ताम्बूलाद्युपयोजयेत् ॥ ३८ ॥

अथावलेहविधिमाह—

क्वाथादेर्यत्पुनः पाकाद् घनत्वं सा रसक्रिया । सोऽवलेहश्च लेहश्च तन्मात्रा स्यात्पलोन्मिता३९
सिता चतुर्गुणा कार्या चूर्णाच्च द्विगुणो गुडः । द्रवं चतुर्गुणं दद्यादिति सर्वत्र निश्चयः ॥ ४० ॥
सुपक्वे तन्तुमत्त्वं स्यादवलेहेऽप्सु मज्जनम् । स्थिरत्वं पीडिते मुद्रा गन्धवर्णरसोद्भवः ॥४१॥
दुग्धमिक्षुरसं यूषं पञ्चमूलकषायकम् । वासाक्वाथं यथायोग्यमनुपानं प्रशस्यते ॥ ४२ ॥

अथ गुटिकानिर्माणविधिमाह—

वटका अथ कथ्यन्ते तन्नाम गुटिका वटी । मोदको वटिका पिण्डी गुडो वर्त्तिस्तथोच्यते ॥४३॥
लेहवत्साध्यते वह्नौ गुडो वा शर्कराऽथ वा । गुग्गुलुर्वा क्षिपेत्तत्र चूर्णं तन्निर्मिता वटी ॥ ४४

* तत्र = वह्निसिद्धे गुडादौ ॥ ४४ ॥

कुर्यादवह्निसिद्धेन क्वचिद् गुग्गुलुना वटीम् । द्रवेण मधुना वाऽपि गुटिकां कारयेद् बुधः ॥४५॥
सिता चतुर्गुणा देया वटीषु द्विगुणो गुडः । चूर्णे चूर्णसमः कार्यो गुग्गुलुर्मधु तत्समम् ॥ ४६ ॥

* तत्समं = चूर्णसमम् ॥ ४६ ॥

द्रवं तु द्विगुणं देयं मोदकेषु भिषग्वरैः ॥ ४७ ॥

* द्रवं = द्रवरूपं द्रव्यम् ॥ ४७ ॥

कर्षप्रमाणं तन्मात्रा बलं दृष्ट्वा प्रयुज्यते ॥ ४८ ॥

* बलमिति कालादेरप्युपलक्षणम् ॥ ४८ ॥

अथ घृततैलयोर्विधिमाह—

कल्काच्चतुर्गुणीकृत्य घृतं वा तैलमेव च । चतुर्गुणद्रवे साध्यं तस्य मात्रा पलोन्मिता ॥४९॥

* मात्रा पलोन्मिता भक्षणाय ॥ ४९ ॥

निक्षिप्य क्वाथयेत्तोयं क्वाथ्यद्रव्याच्चतुर्गुणम् । पादशिष्टं गृहीत्वा तु स्नेहं तेनैव साधयेत् ॥५०॥
चतुर्गुणं मृदुद्रव्ये कठिनेऽष्टगुणं जलम् । मृद्वादिक्वाथ्यसङ्घाते दद्यादष्टगुणं पयः ।

अत्यन्तकठिने द्रव्ये नीरं षोडशिकं मतम् ॥ ५१ ॥

मृदुद्रव्ये = आर्द्रद्रव्ये गुडूच्यादौ । कठिने = शुष्कद्रव्ये शुण्ठ्यादौ । अत्यन्तकठिने = चिरशुष्के देवदार्वादौ ॥ ५१ ॥

कर्षादितः पलं यावत्क्षिपेत्षोडशिकं जलम् । तदूर्ध्वं कुडवं यावद् भवेदष्टगुणं पयः ॥

प्रस्थादितः क्षिपेन्नीरं खारी यावच्चतुर्गुणम् ॥ ५२ ॥

* पूर्वं "चतुर्गुणं मृदुद्रव्य" इत्यादिना क्वाथ्यद्रव्यगतमृदुत्वादिगुणभेदेन जलगतपरिमाणमुक्तम् । इदानीं केचिदाचार्याः "कर्षादितः पलं यावदि" त्यादिवचने क्वाथ्यद्रव्यगतपरिमाणभेदेन जलगतपरिमाणं मन्यन्ते ॥ ५२ ॥

अम्बुक्वाथरसैर्यत्र पृथक् स्नेहस्य साधनम् । कल्कस्यांशं तत्र दद्याच्चतुर्थं षष्ठमष्टमम् ॥५३॥

* अस्यायमर्थः—अम्बुना स्नेहसाधने कल्कं स्नेहस्य चतुर्थमंशं दद्यात् क्वाथेन स्नेहसाधने स्नेहस्य षष्ठभागं कल्कं दद्यात् । स्वरसैः स्नेहसाधने स्नेहस्याष्टमभागं कल्कं दद्यात् ॥ ५३ ॥

पुनर्विशेषमाह—

दुग्धे दधिरसे तक्रे कल्को देयोऽष्टमांशकः । कल्काच्च सम्यक् पाकार्थं तोयमत्र चतुर्गुणम् ५४

* कल्कात् = कल्कद्रव्यात् । चतुर्गुणं तोयं पोषणार्थम् ॥ ५४ ॥

द्रवाणि यत्र स्नेहेषु पञ्चादीनि भवन्ति हि । तत्र स्नेहसमान्याहुर्यथापूर्वं चतुर्गुणम् ॥ ५५ ॥

* अस्यायमर्थः—यत्र स्नेहेषु आदीनि पञ्चद्रवाणि दुग्धदधिस्वरसतक्रकल्कोपयुक्तजलानि प्रत्येकं स्नेहसमानि बोद्धव्यानि । यथापूर्वं दुग्धदधिस्वरसतक्रं समुदितं स्नेहाच्चतु भवति ॥ ५५ ॥

द्रव्येण केवलेनैव स्नेहपाको भवेद् यदि । तत्राम्बुपिष्टः कल्कः स्याज्जलं चात्र चतुर्गुणम् ५६
क्वाथेन केवलेनैव पाको यत्रोदितः क्वचित् । क्वाथ्यद्रव्यस्य कल्कोऽपि तत्र स्नेहे प्रयुज्यते ॥

कल्कहीनस्तु यः स्नेहः स साध्यः केवले द्रवे ॥ ५८ ॥

* केवले द्रवे=क्वाथेतरस्मिन् स्वरसादिरूपे ॥ ५८ ॥

पुष्पकल्कस्तु यः स्नेहस्तत्र तोयं चतुर्गुणम् । स्नेहात्स्नेहाष्टमांशश्च पुष्पकल्कः प्रयुज्यते ॥५९॥

अथ सिद्धस्नेहस्य लक्षणान्याह—

वर्त्तिवत्स्नेहकल्कः स्याद् यदाऽङ्गुल्या विवर्त्तितः ।

शब्दहीनोऽग्निनिक्षिप्तः स्नेहः सिद्धो भवेत्तदा ॥ ६० ॥

यदा फेनोद्गमस्तैले फेनशान्तिश्च सर्पिषि । वर्णगन्धरसोत्पत्तिः स्नेहः सिद्धो भवेत्तदा ॥६१॥

अथ स्नेहपाकस्य लक्षणपूर्वकं त्रैविध्यमाह—

स्नेहपाकस्त्रिधा प्रोक्तो मृदुर्मध्यः खरस्तथा । ईषत्सरसकल्कस्तु स्नेहपाको मृदुर्भवेत् ॥ ६२ ॥

मध्यपाकस्य सिद्धिश्च कल्के नीरसकोमले । ईषत्कठिनकल्कश्च स्नेहपाको भवेत्खरः ॥ ६३ ॥

अथ दग्धपाकस्य निष्प्रयोजनत्वं तथाऽऽमपाकस्य दोषानाह—

तदूर्ध्वं दग्धपाकः स्याद्दाहकृन्निष्प्रयोजनः । आमपाकश्च निर्वीर्यो वह्निमान्द्यकरो गुरुः ॥६४॥

अथ मृद्वादिपाकानां विषयानाह—

नस्यार्थं स्यान्मृदुः पाको मध्यमः सर्वकर्मसु । अभ्यङ्गार्थः खरः प्रोक्तो युञ्ज्यादेवं यथोचितम् ॥

अथ घृततैलादीनामुषितत्वं गुणकारकमित्याह—

घृततैलगुडादींश्च साधयेन्नैकवासरे । प्रकुर्वन्त्युषितास्त्वेते विशेषाद् गुणसञ्चयम् ॥ ६६ ॥

अथ सन्धानविधिमाह—

द्रवेषु चिरकालस्थं द्रव्यं यत्सन्धितं भवेत् । आसवारिष्टभेदैस्तु प्रोच्यते भेषजोचितम् ॥ ६७ ॥

* भेषजेषु यदुचितं तद्भेषजोचितम् ॥ ६७ ॥

अथासवारिष्टलक्षणमाह—

यदपक्वौषधाम्बुभ्यां सिद्धं मद्यं स आसवः । अरिष्टः क्वाथसाध्यः स्यात्तयोर्मानं पलोन्मितम् ६८

अथ सामान्यतोऽरिष्टविधिमाह—

अनुक्तमानारिष्टेषु द्रवाद् द्रोणं गुडात्तुलाम् । क्षौद्रं क्षिपेद् गुडादर्द्धं प्रक्षेपं दशमांशकम् ॥ ६९ ॥

* दशमांशकं=गुडस्यैव दशमांशकम् ॥ ६९ ॥

अथ द्विविधसीधुमाह—

ज्ञेयः शीतरसः सीधुरपक्वमधुरद्रवैः । सिद्धः पक्वरसः सीधुः सम्पक्वमधुरद्रवैः ॥ ७० ॥

* मधुरद्रवैः=इक्षुरसादिभिः ॥ ७० ॥

अथ सुरां सुराजातिं चाह—

परिपक्वान्नसंधानात्समुत्पन्नां सुरां जगुः । सुरामण्डः प्रसन्ना स्यात्ततः कादम्बरी घना ॥७१॥

तदधो जगलो ज्ञेयो मेदको जगलाद् घनः । वक्कसो हृतसारः स्यात्सुराबीजं किण्वकम् ॥७२॥

* सुराबीजं=यवगोधूमतण्डुलादि ॥ ७२ ॥

अथ वारुणीमाह—

यत्तालखर्जूररसैः सन्धिता सा हि वारुणी ॥ ७३ ॥

अथ शुक्तलक्षणमाह—

कन्दमूलफलादीनि सस्नेहलवणानि च । यत्र द्रवेऽभिषूयन्ते तच्छुक्तमभिधीयते ॥ ७४ ॥

* अभिषूयन्ते = द्रवेणाप्लाव्य सन्धीयन्ते ॥ ७४ ॥

अथ चुक्रलक्षणमाह—

विनष्टमम्लतां यातं मद्यं वा मधुरद्रवः । विनष्टः सन्धितो यस्तु तच्चुक्रमभिधीयते ॥ ७५ ॥

गुडाम्बुना सतैलेन कन्दशाकफलैस्तथा । सन्धितं चाम्लतां यातं गुडचुक्रं प्रचक्षते ॥

एवमेव हि शुक्तं स्यान्मृद्वीकासम्भवं तथा ॥ ७६ ॥

अथ तुषोदकसौवीरारनालकाञ्जिकशिण्डाकीलक्षणान्याह—

तुषाम्बु सन्धितं ज्ञेयमामैर्विदलितैर्यवैः । यवैस्तु निस्तुषैः पक्वैः सौवीरं सन्धितं भवेत् ७७

आरनालन्तु गोधूमैरामैः स्यान्निस्तुषीकृतैः । पक्वैर्वा सन्धितैस्तत्तु सौवीरसदृशं गुणैः ॥ ७८ ॥

कुल्माषधान्यमण्डादि सन्धितं काञ्जिकं विदुः । शिण्डाकी संहिता ज्ञेया मूलकैः सर्षपादिभिः ७९

इति श्रीमिश्रलटकनतनयश्रीमिश्रभावविरचिते भावप्रकाशे परिभाषाऽऽदिप्रकरणे द्वितीयं भेषजविधानप्रकरणं समाप्तम् ॥ २ ॥

---

## अथ तृतीयं धात्वादिशोधनमारणादिविधिप्रकरणम् ॥ ३ ॥

अथ धातूनां शोधनमारणविधिः, तत्र मारणयोग्यसुवर्णस्य लक्षणमाह—

दाहे रक्तं सितं छेदे निकषे कुङ्कुमप्रभम् । तारशुल्वोज्झितं स्निग्धं कोमलं गुरु हेम सत् ॥ १ ॥

* सत् = उत्तमम् ॥ १ ॥

अथ मारणायोग्यसुवर्णस्य लक्षणमाह—

तच्छेदे कठिनं रूक्षं विवर्णं समलं दलम् । दाहे छेदे सितं श्वेतं कषे स्फुटं लघु त्यजेत् ॥ २ ॥

अथ सुवर्णस्य शोधनविधिमाह—

पत्तलीकृतपत्राणि हेम्नो वह्नौ प्रतापयेत् । निषिञ्चेत्तत्तप्तानि तैले तक्रे च काञ्जिके ॥ ३ ॥

गोमूत्रे च कुलत्थानां कषाये तु त्रिधा त्रिधा । एवं हेम्नः परेषाञ्च धातूनां शोधनं भवेत् ॥४॥

अथ शुद्धसुवर्णस्य दोषानाह—

बलं सवीर्य्यं हरते नराणां रोगव्रजं पोषयतीह काये ।

असौख्यकार्य्यैव सदा सुवर्णमशुद्धमेतन्मरणञ्च कुर्यात् ॥ ५ ॥

अथ सुवर्णस्य मारणविधिमाह—

स्वर्णस्य द्विगुणं सूतमम्लेन सह मर्दयेत् । तद्गोलकसमं गन्धं निदध्यादधरोत्तरम् ॥ ६ ॥

* स्वर्णस्य = अतितनूकृतपत्रस्य । गन्धं = गन्धकचूर्णम् ॥ ६ ॥

गोलकञ्च ततो रुद्ध्वा शरावदृढसम्पुटे । त्रिंशद्वनोपलैर्दद्यात्पुटान्येवं चतुर्दश ॥

निरुत्थं जायते भस्म गन्धो देयः पुनः पुनः ॥ ७ ॥

* रुद्ध्वा = सवस्त्रकुट्टितचिक्कणमृत्तिकया । वनोपलः "गोइठा" इति लोके । निरुत्थं = यत्पुनर्न जीवति ॥ ७ ॥

अथ सुवर्णमारणस्य द्वितीयं विधिमाह—

काञ्चने गलिते नागं षोडशांशेन निक्षिपेत् । चूर्णयित्वा तथाऽम्लेन घृष्ट्वा कृत्वा तु गोलकम् ॥ ८ ॥
गोलकेन समं गन्धं दत्त्वा चैवाधरोत्तरम् ॥ ९ ॥
शरावसम्पुटे धृत्वा पुटेत् त्रिंशद्वनोपलैः । एवं सप्तपुटैर्हेम निरुत्थं भस्म जायते ॥ १० ॥

* अत्रापि पूर्ववद्गन्धः प्रदातव्यः ॥ १० ॥

अथ सुवर्णमारणस्य तृतीयं विधिमाह—

काञ्चनाररसैर्घृष्ट्वा समसूतकगन्धयोः । कज्जलीं हेमपत्राणि लेपयेत्समया तया ॥ ११ ॥

* तया समया = हेमपत्रसमया ॥ ११ ॥

काञ्चनारत्वचः कल्कैर्मूषायुग्मं प्रकल्पयेत् । धृत्वा तत्संपुटे गोलं मृण्मूषासम्पुटे च तत् ॥१२॥
निधाय सन्धिरोधं च कृत्वा संशोष्य गोलकम् । वह्निं खरतरं कुर्यादेवं दत्त्वा पुटत्रयम् ॥१३॥
निरुत्थं जायते भस्म सर्वकर्मसु योजयेत् । काञ्चनारप्रकारेण लाङ्गली हन्ति काञ्चनम् ॥ १४ ॥

* लाङ्गली = करिहारी ॥ १४ ॥

ज्वालामुखी तथा हन्याद् यथा हन्ति मनःशिला ॥ १५ ॥

अथ सुवर्णमारणस्य चतुर्थं विधिमाह—

शिलासिन्दूरयोश्चूर्णं समयोरर्कदुग्धकैः । सप्तधा भावनां दद्याच्छोषयेच्च पुनः पुनः ॥ १६ ॥
ततस्तु गलिते हेम्नि कल्कोऽयं दीयते समः । पुनर्धमेदतितरां यथा कल्को विलीयते ॥
एवं वेलात्रयं दद्यात्कल्कं हेममृतिर्भवेत् ॥ १७ ॥

अथ मारितसुवर्णस्य गुणानाह—

सुवर्णं शीतलं वृष्यं बल्यं गुरु रसायनम् । स्वादु तिक्तं च तुवरं पाके च स्वादु पिच्छिलम्॥१८
पवित्रं बृंहणं नेत्र्यं मेधास्मृतिमतिप्रदम् । हृद्यमायुष्करं कान्तिवाग्विशुद्धिस्थिरत्वकृत् ॥
विषद्वयक्षयोन्मादत्रिदोषज्वरशोषजित् ॥ १९ ॥

* वृष्यं = वृषाय कामुकाय हितम् ॥ १८-१९ ॥

अथासम्यङ्मारितसुवर्णस्य दोषानाह—

असम्यङ्मारितं स्वर्णं बलं वीर्यं च नाशयेत् । करोति रोगान् मृत्युं च तद्धन्याद् यत्नतस्ततः॥२०

## अथ धात्वादिमारणोपयुक्तान् पुटप्रकारानाह-रसप्रदीपे--

तत्र महापुटस्य प्रकारमाह—

लोहादेरपुनर्भावस्तद्गुणत्वं गुणाढ्यता । सलिले तरणं चापि तत्सिद्धिः पुटनाद्भवेत् ॥ २१ ॥
गम्भीरे विस्तृते कुण्डे द्विहस्ते चतुरस्रके । वनोपलसहस्रेण पूरिते पुटनौषधम् ॥ २२ ॥
कोष्ठे रुद्धं प्रयत्नेन गोविष्ठोपरि धारयेत् । वनोपलसहस्रार्द्धं कोष्ठिकोपरि निक्षिपेत् ॥ २३ ॥
वह्निं विनिक्षिपेत्तत्र महापुटमिति स्मृतम् ॥ २४ ॥

* कोष्ठं = मृण्मूषा । गोविष्ठा="गोबर" इति लोके ॥ २१-२४ ॥

अथ गजपुटस्य प्रकारमाह—

सपादहस्तमानेन कुण्डे निम्ने तथाऽऽयते । वनोपलसहस्रेण पूर्णे मध्ये विधापयेत् ॥ २५ ॥
पुटमद्रव्यसंयुक्तां कोष्ठिकां मुद्रितां मुखे । अधोऽर्धानि करण्डानि अर्धान्युपरि निक्षिपेत् ॥
एतद्गजपुटं प्रोक्तं ख्यातं सर्वपुटोत्तमम् ॥ २६ ॥

* हस्तश्चतुर्विंशत्यङ्गुलप्रमाणः स सपादस्तेन त्रिंशदङ्गुलप्रमाणेनेत्यर्थः । अत एवोक्तम्—
साधारणनराङ्गुल्या त्रिंशदङ्गुलको गजः ॥ २५-२६ ॥

॥ इति गजपुटम् ॥

अथ वाराहकौक्कुटपुटयोः प्रकारमाह—

अरत्निमात्रके कुण्डे पुटं वाराहमुच्यते । वितस्तिमात्रके खाते कथितं कौक्कुटं पुटम् ॥ २७ ॥
* "अरत्निस्तु निष्कनिष्ठेन मुष्टिना" इत्यमरः । निःसृतकनिष्ठया मुष्ट्योपलक्षितो हस्तोऽरत्निरित्यर्थः ॥ २७ ॥

अथ प्रकारान्तरेण पुनः कौक्कुटस्य प्रकारमाह—

षोडशाङ्गुलके खाते कश्च चित्कौक्कुटं पुटम् ॥ २८ ॥

अथ कपोतपुटप्रकारमाह—

यत्पुटं दीयते खाते ह्यष्टसङ्ख्यैर्वनोपलैः । कपोतपुटमेतत्तु कथितं पुटपण्डितैः ॥ २९ ॥

अथ गोबरस्य लक्षणमाह—

गोष्ठान्तर्गोखुरक्षुण्णं शुष्कं चूर्णितगोमयम् । गोवरं तत्समाख्यातं वरिष्ठं रससाधने ॥ ३० ॥

अथ गोबरपुटप्रकारमाह—

बृहद्भाण्डस्थितैर्यत्र गोबरैर्दीयते पुटम् । तद्गोबरपुटं प्रोक्तं भिषग्भिः सूतभस्मनि ॥ ३१ ॥

अथ भाण्डपुटस्य प्रकारमाह—

बृहद्भाण्डे तुषैः पूर्णे मध्ये मूषां विधारयेत् । क्षिप्त्वाऽग्निं मुद्रयेद्भाण्डं तद्भाण्डपुटमुच्यते ॥३२॥

अथ यन्त्रप्रकारानाह, तत्र वालुकायन्त्रमाह—

भाण्डे वितस्तिगम्भीरे मध्ये निहितकूपिके । कूपिकाकण्ठपर्यन्तं वालुकाभिश्च पूरिते ॥ ३३ ॥
भेषजं कूपिकासंस्थं वह्निना यत्र पच्यते । वालुकायन्त्रमेतद्धि यन्त्रं तत्र बुधैः स्मृतम् ॥ ३४ ॥

अथ दोलायन्त्रमाह—

निबद्धमौषधं सूतं भूर्जे तत्त्रिगुणे वरे । रसपोटलिकां काष्ठे दृढं बद्ध्वा गुणेन हि ॥ ३५ ॥
सन्धानपूर्णकुम्भान्तः स्वावलम्बनसन्धितम् । अधस्ताज्ज्वालयेदग्निं तं तदुक्तक्रमेण हि ॥
दोलायन्त्रमिदं प्रोक्तं स्वेदनाख्यं तदेव हि ॥ ३६ ॥

अथ स्वेदनयन्त्रमाह—

साम्बुस्थालीमुखे बद्धे वस्त्रे स्वेद्यं निधाय च । पिधाय पच्यते यत्र तद् यन्त्रं स्वेदनं स्मृतम् ॥

अथ विद्याधरयन्त्रमाह—

अधः स्थाल्यां रसं क्षिप्त्वा निदध्यात्तन्मुखोपरि ।
स्थालीमूर्ध्वमुखीं सम्यङ् निरुध्य मृदुमृत्स्नया ॥ ३८ ॥

ऊर्ध्वस्थाल्यां जलं क्षिप्त्वा चुल्ल्यामारोप्य यत्नतः ।
अधस्ताज्ज्वालयेदग्निं यावत्प्रहरपञ्चकम् ॥ ३९ ॥
स्वाङ्गशीतं ततो यन्त्राद् गृह्णीयाद्रसमुत्तमम् । विद्याधराभिधं यन्त्रमेतत्तज्ज्ञैरुदाहृतम् ॥ ४० ॥

अथ भूधरयन्त्रमाह—

वालुकाभिः समस्ताङ्गं गर्ते मूषां रसान्विताम् । दीप्तोपलैः संवृणुयाद् यन्त्रं भूधरनामकम् ४१

अथ डमरुयन्त्रमाह—

यन्त्रं डमरुसंज्ञं स्यात्तत्स्थाल्या मुद्रिते मुखे ॥ ४२ ॥

अथ मारणयोग्यरजतस्य लक्षणमाह—

गुरु स्निग्धं मृदु श्वेतं दाहे च्छेदे घनक्षमम् । वर्णाढ्यं चन्द्रवत् स्वच्छं तारं नवगुणं शुभम् ॥४३॥

अथायोग्यरजतस्य लक्षणमाह—

कठिनं कृत्रिमं रूक्षं रक्तं पीतदलं लघु । दाहच्छेदघनैर्नष्टं रूप्यं दुष्टं प्रकीर्त्तितम् ॥ ४४ ॥

अथ रजतस्य शोधनमाह—

पत्तलीकृतपत्राणि तारस्याग्नौ प्रतापयेत् । निषिञ्चेत्तप्ततप्तानि तैले तक्रे च काञ्जिके ॥ ४५ ॥
गोमूत्रे च कुलत्थानां कषाये च त्रिधा त्रिधा । एवं रजतपत्राणां विशुद्धिः संप्रजायते ॥ ४६ ॥

अथाशुद्धरजतस्य दोषमाह—

रूप्यं त्वशुद्धं प्रकरोति तापं विबन्धकं वीर्यबलक्षयं च ।
देहस्य पुष्टिं हरते तनोति रोगांस्ततः शोधनमस्य कुर्यात् ॥ ४७ ॥

अथ रजतस्य मारणविधिमाह—

भागैकं तालकं मर्द्यं याममम्लेन केन चित् । तेन भागत्रयं तारपत्राणि परिलेपयेत् ॥ ४८ ॥
धृत्वा मूषापुटे रुद्ध्वा पुटे त्रिंशद्वनोपलैः । समुद्धृत्य पुनस्तालं दत्त्वा रुद्ध्वा पुटे पचेत् ।
एवं चतुर्दशपुटैस्तारं भस्म प्रजायते ॥ ४९ ॥

अथ रजतमारणस्यापरं विधिमाह—

स्नुहीक्षीरेण सम्पिष्टं माक्षिकं तेन लेपयेत् ॥ ५० ॥
तालकस्य प्रकारेण तारपत्राणि बुद्धिमान् । पुटेच्चतुर्दशपुटैस्तारं भस्म प्रजायते ॥ ५१ ॥

अथ मारितरजतस्य गुणानाह—

रौप्यं शीतं कषायं च स्वादुपाकरसं सरम् । वयसः स्थापनं स्निग्धं लेखनं वातपित्तजित् ।
प्रमेहादिकरोगांश्च नाशयत्यचिराद् ध्रुवम् ॥ ५२ ॥

अथ मारणयोग्यताम्रस्य लक्षणमाह—

जपाकुसुमसङ्काशं स्निग्धं गुरु घनक्षमम् । लोहनागोज्झितं ताम्रं मारणाय प्रशस्यते ॥ ५३ ॥

अथायोग्यताम्रस्य लक्षणमाह—

कृष्णं रूक्षमतिस्वच्छं श्वेतं चापि घनासहम् । लोहनागयुतं चेति शुल्वं दुष्टं प्रकीर्त्तितम् ॥५४॥

अथ ताम्रस्य शोधनविधिमाह—

पत्तलीकृतपत्राणि ताम्रस्याग्नौ प्रतापयेत् । निषिञ्चेत्तप्ततप्तानि तैले तक्रे च काञ्जिके ॥५५॥

गोमूत्रे च कुलत्थानां कषाये च त्रिधा त्रिधा । एवं ताम्रस्य पत्राणां विशुद्धिः संप्रजायते ॥५६॥

अथ ताम्रगतं दोषाष्टकमाह—

एको दोषो विषे ताम्रे त्वशुद्धेऽष्टौ भ्रमो वमिः । विरेकः स्वेद उत्क्लेदो मूर्च्छा दाहोऽरुचिस्तथा
न विषं विषमित्याहुस्ताम्रन्तु विषमुच्यते । एको दोषो विषे ताम्रे त्वष्टौ दोषाः प्रकीर्त्तिताः

अथ ताम्रस्य मारणविधिमाह—

सूक्ष्माणि ताम्रपत्राणि कृत्वा संस्वेदयेद् बुधः । वासरत्रयमम्लेन ततः खल्वे विनिक्षिपेत् ॥५९॥
पादांशं सूतकं दत्त्वा याममम्लेन मर्दयेत् । तत उद्धृत्य पत्राणि लेपयेद् द्विगुणेन च ॥ ६० ॥
गन्धकेनाम्लघृष्टेन तस्य कुर्याच्च गोलकम् । ततः पिष्ट्वा च मीनाक्षीं चाङ्गेरीं वा पुनर्नवाम्* ।

* चांगेरी=चतुष्पत्राम्ला लोनिकाभेदः ॥ ६१ ॥

तत्कल्केन बहिर्गोलं लेपयेद् ह्यङ्गुलोन्मितम् । धृत्वा तद् गोलकं भाण्डे शरावेण च रोधयेत्
वालुकाभिः प्रपूर्याथ विभूतिलवणाम्बुभिः । दत्त्वा भाण्डमुखे मुद्रां ततश्चुल्ल्यां विपाचयेत्
क्रमवृद्ध्याऽग्निना सम्यग् यावद्यामचतुष्टयम् स्वाङ्गशीतं समुद्धृत्य मर्दयेच्छूरणद्रवैः ॥ ६४ ॥
यामैकं गोलकं तच्च निक्षिपेच्छूरणोदरे । मृदा लेपस्तु कर्त्तव्यः सर्वतोऽङ्गुष्ठमात्रकः ॥ ६५ ॥
पाच्यं गजपुटे क्षिप्तं मृतं भवति निश्चितम् ॥ ६६ ॥
वमनं च विरेकं च भ्रमं क्लममथारुचिम् । विदाहं स्वेदमुत्क्लेदं न करोति कदा चन ॥ ६७ ॥

अथ मारिततात्रस्य गुणानाह—

ताम्रं कषायं मधुरं सतिक्तमम्लञ्च पाके कटु सारकं च ।
पित्तापहं श्लेष्महरं च शीतं तद्रोपणं स्याल्लघु लेखनं च ॥ ६८ ॥
पाण्डूदरार्शोज्वरकुष्ठकासश्वासक्षयान्पीनसमम्लपित्तम् ।
शोथं कृमीञ्शूलमपाकरोति प्राहुर्बुधा बृंहणमल्पमेतत् ॥ ६९ ॥
एको दोषो विषे ताम्रे त्वसम्यङ्मारिते पुनः । दाहः स्वेदोऽरुचिर्मूर्च्छा क्लेदो रेको वमिर्भ्रमः

अथ वङ्गस्य स्वरूपमाह—

वङ्गं च गिरिजं तच्च खुरकं मिश्रकं द्विधा । तयोस्तु खुरकं श्रेष्ठं मिश्रकं त्वहितं मतम् ॥७१॥

अथाशुद्धवङ्गस्य दोषानाह—

वङ्गं विधत्ते खलु शुद्धिहीनमाक्षेपकम्पौ च किलासगुल्मौ ।
कुष्ठानि शूलं किल वातशोथं पाण्डुं प्रमेहञ्च भगन्दरञ्च ॥ ७२ ॥
विषोपमं रक्तविकारवृन्दं क्षयञ्च कृच्छ्राणि कफज्वरञ्च ।
मेहाश्मरीविद्रधिमुष्करोगान् नागोऽपि कुर्यात्कथितान्विकारान् ॥ ७३ ॥

अथ वङ्गस्य शोधनविधिमाह—

वङ्गनागौ प्रतप्तौ च गलितौ तौ निषेचयेत् ।
त्रिधा त्रिधा विशुद्धिः स्याद् रविदुग्धेऽपि च त्रिधा ॥ ७४ ॥

अथ वङ्गस्य मारणविधिमाह—

मृत्पात्रे द्राविते वङ्गे चिञ्चाऽश्वत्थत्वचो रजः । पिष्ट्वा वङ्गचतुर्थांशमयोदर्व्या प्रचालयेत् ॥ ७५ ॥

ततो द्विधासमाङ्गेण वङ्गं भस्म प्रजायते । अथ भस्मसमं तालं क्षिप्त्वाऽम्लेन विमर्दयेत् ॥७६॥
ततो गजपुटे पक्त्वा पुनरम्लेन मर्दयेत् । तालेन दशमांशेन याममेकं ततः पुटेत् ॥
एवं दशपुटैः पक्वं वङ्गं भवति मारितम् ॥ ७७ ॥

अथ मारितवङ्गस्य गुणानाह—

वङ्गं लघु सरं रूक्षं कुष्टं मेहकफक्रिमीन् ।
निहन्ति पाण्डुं सश्वासं नेत्र्यमोषत्तु पित्तलम् ॥ ७८ ॥
सिंहो गजौघं तु यथा निहन्ति तथैव वङ्गोऽखिलमेहवर्गम् ।
देहस्य सौख्यं प्रबलेन्द्रियत्वं नरस्य पुष्टिं विदधाति नूनम् ॥ ७९ ॥

अथ यशदस्य स्वरूपं गुणांश्चाह—

यशदं गिरिजं तस्य दोषाः शोधनमारणे । वङ्गस्येव हि बोद्धव्या गुणांस्तु गणयाम्यथ ॥८०॥
यशदं च सरं तिक्तं शीतलं कफपित्तहृत् । चक्षुष्यं परमं मेहान् पाण्डुं श्वासञ्च नाशयेत् ॥८१॥

अथ सीसकस्य शोधनविधिमाह—

तस्य साहजिका दोषा वङ्गस्येव निदर्शिताः । शोधनञ्चापि तस्यैव भिषग्भिसंदितं पुरा॥८२॥

अथ सीसकस्य मारणविधिमाह—

ताम्बूलरससम्पिष्टशिलालेपात् पुनः पुनः । द्वात्रिंशद्भिः पुटैर्नागो निरुत्थं भस्म जायते ॥८३॥
* शिला=मनःशिला ॥ ८३ ॥

अथापरं सीसकमारणविधिमाह—

अश्वत्थचिञ्चात्वक्चूर्णं चतुर्थांशेन निक्षिपेत् । मृत्पात्रे विद्रुतो नागो लोहदर्व्या प्रचालितः ॥
यामैकेन भवेद्भस्म तत्तुल्या स्यान्मनःशिला । काञ्जिकेन द्वयं पिष्ट्वा पचेद्गजपुटेन च ॥ ८९ ॥
स्वाङ्गशीतं पुनः पिष्ट्वा शिलया काञ्जिकेन च । पुनः पचेच्छरावाभ्यामेवं षष्टिपुटैर्मृतिः ॥८५॥

अथ मारितसीसकस्य गुणानाह—

सीसं रङ्गगुणं ज्ञेयं विशेषान्मेहनाशनम् ॥ ८७ ॥
नागस्तु नागशततुल्यबलं ददाति व्याधिं च नाशयति जीवनमातनोति ।
वह्निं प्रदीपयति कामबलं करोति मृत्युञ्च नाशयति सन्ततसेवितः सः ॥ ८८ ॥

अथाशुद्धलौहस्य दोषानाह—

षण्ढत्वकुष्ठामयमृत्युकारी हृद्रोगशूलौ कुरुतेऽश्मरीञ्च ।
नानारुजानां च तथा प्रकोपं कुर्याच्च हृल्लासमशुद्धलौहम् ॥ ८९ ॥

अथ लौहस्य दोषशान्तये शोधनविधिमाह—

पत्तलीकृतपत्राणि लौहस्याग्नौ प्रतापयेत् । निषिञ्चेत्तप्ततप्तानि तैले तक्रे च काञ्जिके ॥ ९० ॥
गोमूत्रे च कुलत्थानां कषाये चत्रिधा त्रिधा । एवं लौहस्य पत्राणां विशुद्धिः सम्प्रजायते ॥९१॥

अथ लौहस्य मारणविधिमाह—

शुद्धं लौहभवं चूर्णं पातालगरुडीरसैः । मर्दयित्वा पुटेद्वह्नौ दद्यादेवं पुटत्रयम् ॥ ९२ ॥
पुटत्रयं कुमार्याश्च कुठारच्छिन्निकारसैः । पुटषट्कं ततो दद्यादेवं तीक्ष्णमृतिर्भवेत् ॥ ९३ ॥

अन्यच्च—

क्षिपेच्च द्वादशांशेन दरदं तीक्ष्णचूर्णतः । मर्दयेत्कन्यकाद्रावैर्यामयुग्मं ततः पुटेत् ॥
एवं सप्तपुटैर्मृत्युं लोहचूर्णमवाप्नुयात् ॥ ९४ ॥

अथ लोहमारणस्य तृतीयं विधिमाह—

सत्योऽनुभूतो योगेन्द्रैः क्रमोऽयं लोहमारणे ॥ ९५ ॥
कथ्यते रामराजेन कौतूहलधियाऽधुना । सूतकाद् द्विगुणं गन्धं दत्वा कुर्याच्च कज्जलीम् ॥ ९६
द्वयोः समं लौहचूर्णं मर्दयेत्कन्यकाद्रवैः । यामयुग्मं ततः पिण्डं कृत्वा तं ताम्रपात्रके ॥ ९७ ॥
घर्मे धृत्वा रुबूकस्य पत्रैराच्छादयेद् बुधः । यामद्वयाद्भवेदुष्णं धान्यराशौ न्यसेत्ततः ॥ ९८ ॥
दत्त्वोपरि शरावं तु त्रिदिनान्ते समुद्धरेत् । पिष्ट्वा च गालयेद्वस्त्रादेवं वारितरं भवेत् ॥ ९९ ॥

अपरञ्च—

दाडिमस्य दलं पिष्ट्वा तच्चतुर्गुणवारिणा । तद्रसेनायसं चूर्णं सम्यक् प्रक्षालयेदिति ॥ १०० ॥
आतपे शोषयेत्तच्च पुटेदेवं पुनः पुनः । एकविंशतिवारैस्तन्म्रियते नात्र संशयः ॥
एवं सर्वाणि लोहानि स्वर्णादीन्यपि मारयेत् ॥ १०१ ॥

अथ मारितलौहस्य गुणानाह—

लौहं तिक्तं सरं शीतं कषायं मधुरं गुरु । रूक्षं वयस्यं चक्षुष्यं लेखनं वातलं जयेत् ॥ १०२ ॥
कफं पित्तं गरं शूलं शोथार्शः प्लीहपाण्डुताः मेदोमेहकृमीन् कुष्ठं हरेत्कष्टं तथैव हि ॥१०३॥

अथ लौहभस्मभक्षणे मात्रामाह—

गुञ्जामेकां समारभ्य यावत्स्युर्नववल्लिकाः । तावल्लोहं समश्नीयाद्यथादोषानलं नरः ॥१०४॥
कूष्माण्डं तिलतैलं च माषान्नं राजिकां तथा । मद्यमम्लरसञ्चैव वर्जयेल्लौहसेवकः ॥१०५॥

अथ सर्वधातूनां मारणे साधारणविधिमाह—

शिलागन्धार्कदुग्धाक्ताः स्वर्णाद्याः सर्वधातवः । म्रियन्ते द्वादशपुटैः सत्यं गुरुवचो यथा ॥१०६॥

अथोपधातूनां मारणप्रकारमाह, तत्राशुद्धस्वर्णमाक्षिकस्य दोषानाह—

मन्दानलत्वं बलहानिमुग्रां विष्टम्भितां नेत्रगदान् सकुष्ठान् ।
मालां तथैव व्रणपूर्विकां च कुर्यादशुद्धं खलु माक्षिकञ्च ॥ १०७ ॥

अथ स्वर्णमाक्षिकस्य शोधनविधिमाह—

माक्षिकस्य त्रयो भागा भागैकं सैन्धवस्य च । मातुलुङ्गद्रवैर्वाऽथ जम्बीरस्य द्रवैः पचेत् १०८
चालयेल्लौहजे पात्रे यावत्पात्रं सुलोहितम् । भवेत्ततस्तु संशुद्धिः स्वर्णमाक्षिकमृच्छति ॥१०९॥

अथ स्वर्णमाक्षिकस्य मारणविधिमाह—

कुलत्थस्य कषायेण घृष्ट्वा तैलेन वा पुटेत् । तक्रेण वाऽऽजमूत्रेण म्रियते स्वर्णमाक्षिकम् ॥११०॥

अथ तारमाक्षिकस्य शोधनविधिमाह—

स्वर्णमाक्षिकवद्दोषा विज्ञेयास्तारमाक्षिके । अतस्तद्दोषशान्त्यर्थं शोधनं तस्य कथ्यते ॥१११॥
कर्कोटीमेषशृङ्ग्युत्थैर्द्रवैर्जम्बीरजैर्दिनम् । भावयेदातपे तीव्रे विमला शुद्ध्यति ध्रुवम् ॥ ११२ ॥

* कर्कोटी = खेखसा, मेषशृङ्गी = मेढाशृङ्गी, विमला = तारमाक्षिकम् ॥ ११२ ॥

अथ तारमाक्षिकस्य मारणविधिमाह—

कुलत्थस्य कषायेण घृष्ट्वा तैलेन वा पुटेत् । मारणं वाऽऽजमूत्रेण तारमाक्षिकमृच्छति ॥११३॥

अथ स्वर्णमाक्षिकरूप्यमाक्षिकयोर्विशेषगुणानाह—

न केवलं स्वर्णरूप्यगुणास्तापीजयोर्मताः । द्रव्यान्तरस्य संसर्गात्सन्त्यन्येऽपि गुणास्तयोः ११४

माक्षिकं मधुरं तिक्तं स्वर्यं वृष्यं रसायनम् ॥ ११५ ॥

चक्षुष्यं बस्तिरुक्कुष्ठं पाण्डुमेहविषोदरम् । अर्शः शोफं क्षयं कण्डूं त्रिदोषञ्च नियच्छति ११६

अथाशुद्धतुत्थस्य शोधनविधिमाह—

विष्ठया मर्दयेत्तुत्थं मार्जारककपोतयाः । दशांशं टङ्कणं दत्वा पचेल्लघुपुटे ततः ॥

पुटं दध्ना पुटं क्षौद्रैर्देयं तुत्थविशुद्धये ॥ ११७ ॥

अथ शुद्धतुत्थस्य गुणानाह—

तुत्थकं कटुकं क्षारं कषायं वामकं लघु ॥ ११८ ॥

लेखनं भेदनं शीतं चक्षुष्यं कफपित्तहृत् । विषाश्मकुष्टकण्डूघ्नं तद्गुणं खर्परं मतम् ॥ ११९ ॥

अथ कांस्यपित्तलयोः शोधनविधिमाह—

पत्तलीकृतपत्राणि कांस्यस्याग्नौ प्रतापयेत् । निषिञ्चेत्तप्ततप्तानि तैले चक्रे च काञ्जिके ॥१२०॥

गोमूत्रे च कुलत्थानां कषायेऽत्र त्रिधा त्रिधा । एवं कांस्यस्य रीतेश्च विशुद्धिः सम्प्रजायते १२१

अथ तयोर्मारणविधिमाह—

अर्कक्षीरेण सम्पिष्टो गन्धकस्तेन लेपयेत् । समेन कांस्यपत्राणि शुद्धान्यम्लद्रवैर्मुहुः ॥ १२२ ॥

ततो मूषापुटे धृत्वा पचेद्गजपुटेन च । एवं पुटद्वयात् कांस्यं रीतिश्च म्रियते ध्रुवम् ॥ १२३ ॥

अथ मारितकांस्यरीत्योर्गुणानाह—

कांस्यं कषायं तीक्ष्णोष्णं लेखनं विशदं सरम् । गुरु नेत्रहितं रूक्षं कफपित्तहरं परम् ॥ १२४ ॥

रीतिका तु भवेद् रूक्षा सतिक्ता लवणा रसे । शोधिनी पाण्डुरोगघ्नी कृमिहृन्नातिलेखनी १२५

अथ सिन्दूरस्य शोधनविधिमाह—

दुग्धाम्लयोगस्तस्य विशुद्धिर्गदिता बुधैः ॥ १२६ ॥

अथ सिन्दूरस्य गुणानाह—

सिन्दूर उष्णो वीसर्पकुष्ठकण्डूविषापहः । भग्नसन्धानजननो व्रणशोधनरोपणः ॥ १२७ ॥

अथ शिलाजतुनो लक्षणं शोधनविधिञ्चाह—

गोमूत्रगन्धवत्कृष्णं स्निग्धं मृदु तथा गुरु । तिक्तं कषायं शीतञ्च सर्वश्रेष्ठं तदायसम् ॥१२८॥

* आयसम् = अय उपधातुसम्बन्धि ॥ १२८ ॥

विन्ध्यादौ बहुलं तत्तु तत्र लोहं यतोऽधिकम् । तच्छोधनमृते व्यर्थमनेकमलमेलनात् ॥१२९॥

शिलाजतु समानीय सूक्ष्मं खण्डं विधाय च । निक्षिप्यात्युष्णपानीये यामैकं स्थापयेत्सुधीः ॥

मर्दयित्वा ततो नीरं गृह्णीयाद्वस्त्रगालितम् । स्थापयित्वा च मृत्पात्रे धारयेदातपे बुधः ॥१३१॥

उपरिस्थं घनं यत्स्यात्तत्क्षिपेदन्यपात्रके । एवं पुनःपुनर्नीतं द्विमासाभ्यां शिलाजतु ॥ १३२॥

अथ तारमाक्षिकस्य मारणविधिमाह—

कुलत्थस्य कषायेण घृष्ट्वा तैलेन वा पुटेत् । मारणं वाऽऽजमूत्रेण तारमाक्षिकमृच्छति ॥११३॥

अथ स्वर्णमाक्षिकरूप्यमाक्षिकयोर्विशेषगुणानाह—

न केवलं स्वर्णरूप्यगुणास्तापीजयोर्मताः । द्रव्यान्तरस्य संसर्गात्सन्त्यन्येऽपि गुणास्तयोः ११४

माक्षिकं मधुरं तिक्तं स्वर्यं वृष्यं रसायनम् ॥ ११५ ॥

चक्षुष्यं वस्तिरुक्कुष्ठं पाण्डुमेहविषोदरम् । अर्शः शोफं क्षयं कण्डूं त्रिदोषञ्च नियच्छति ११६

अथाशुद्धतुत्थस्य शोधनविधिमाह—

विष्ठया मर्दयेत्तुत्थं मार्जारककपोतयाः । दशांशं टङ्कणं दत्त्वा पचेल्लघुपुटे ततः ॥

पुटं दध्ना पुटं क्षौद्रैर्देयं तुत्थविशुद्धये ॥ ११७ ॥

अथ शुद्धतुत्थस्य गुणानाह—

तुत्थकं कटुकं क्षारं कषायं वामकं लघु ॥ ११८ ॥

लेखनं भेदनं शीतं चक्षुष्यं कफपित्तहृत् । विषाश्मकुष्टकण्डूघ्नं तद्गुणं खर्परं मतम् ॥ ११९ ॥

अथ कांस्यपित्तलयोः शोधनविधिमाह—

पत्तलीकृतपत्राणि कांस्यस्याग्नौ प्रतापयेत् । निषिञ्चेत्तत्तप्तानि तैले तक्रे च काञ्जिके ॥१२०॥

गोमूत्रे च कुलत्थानां कषायेऽत्र त्रिधा त्रिधा । एवं कांस्यस्य रीतेश्च विशुद्धिः सम्प्रजायते १२१

अथ तयोर्मारणविधिमाह—

अर्कक्षीरेण सम्पिष्टो गन्धकस्तेन लेपयेत् । समेन कांस्यपत्राणि शुद्धान्यम्लद्रवैर्मुहुः ॥ १२२ ॥

ततो मूषापुटे धृत्वा पचेद्गजपुटेन च । एवं पुटद्वयात् कांस्यं रीतिश्च म्रियते ध्रुवम् ॥ १२३ ॥

अथ मारितकांस्यरीत्योर्गुणानाह—

कांस्यं कषायं तीक्ष्णोष्णं लेखनं विशदं सरम् । गुरु नेत्रहितं रूक्षं कफपित्तहरं परम् ॥ १२४ ॥

रीतिका तु भवेद् रूक्षा सतिक्ता लवणा रसे । शोधिनी पाण्डुरोगघ्नी कृमिहृन्नातिलेखनी १२५

अथ सिन्दूरस्य शोधनविधिमाह—

दुग्धाम्लयोगस्तस्य विशुद्धिर्गदिता बुधैः ॥ १२६ ॥

अथ सिन्दूरस्य गुणानाह—

सिन्दूर उष्णो वीसर्पकुष्ठकण्डूविषापहः । भग्नसन्धानजननो व्रणशोधनरोपणः ॥ १२७ ॥

अथ शिलाजतुनो लक्षणं शोधनविधिञ्चाह—

गोमूत्रगन्धवत्कृष्णं स्निग्धं मृदु तथा गुरु । तिक्तं कषायं शीतञ्च सर्वश्रेष्ठं तदायसम् ॥१२८॥

* आयसम् = अय उपधातुसम्बन्धि ॥ १२८ ॥

विन्ध्यादौ बहुलं तत्तु तत्र लोहं यतोऽधिकम् । तच्छोधनमृते व्यर्थमनेकमलमेलनात् ॥१२९॥

शिलाजतु समानीय सूक्ष्मं खण्डं विधाय च । निक्षिप्यात्युष्णपानीये यामैकं स्थापयेत्सुधीः ॥

मर्दयित्वा ततो नीरं गृह्णीयाद्वस्त्रगालितम् । स्थापयित्वा च मृत्पात्रे धारयेदातपे बुधः ॥१३१॥

उपरिस्थं घनं यत्स्यात्तत्क्षिपेदन्यपात्रके । एवं पुनःपुनर्नीतं द्विमासाभ्यां शिलाजतु ॥ १३२॥

* विष्णुक्रान्ता गिरिकर्णी चापराजितेव श्वेतनीलपुष्पभेदात् ॥ १४७-१४८ ॥

पूर्वोक्तभाण्डकाभावे तु धान्याम्लकमिदं स्मृतम् । स्वेदनादिषु सर्वत्र रसराजस्य योजयेत् ॥
अत्यम्लमारनालं वा तदभावे प्रयोजयेत् ॥ १४९ ॥

* तदभावे=धान्याम्लाभावे ॥ १४९ ॥

त्र्यूषणं लवणं राजी रजनी त्रिफलाऽऽर्द्रकम् । महाबला नागबला मेघनादः पुनर्नवा ॥ १५० ॥
मेषशृङ्गी चित्रकश्च नवसारं समं समम् । एतत्समस्तं व्यस्तं वा पूर्वोक्तेनैव पेषयेत् ॥ १५१ ॥
प्रलिम्पेत्तेन कल्केन वस्त्रमङ्गुलमात्रकम् ॥ १५२ ॥
तन्मध्ये निक्षिपेत्सूतं बद्ध्वा तत्त्रिदिनं पचेत् । दोलायन्त्रेऽम्लसंयुक्ते भाण्डे स्वेदितो रसः ॥

* मेघनादः='चौलाई' इति शाकविशेषः । मेषशृंगी (मेढाशृङ्गी) तदलाभे "कर्कटशृङ्गी" ग्राह्या । नवसारं = नवसादरम् ॥ १५०-१५३ ॥

अन्यच्च—

मूलकानलसिन्धूत्थत्र्यूषणार्द्रकराजिकाः । रसस्य षोडशांशेन द्रव्यं युञ्ज्यात् पृथक्पृथक् १५४
द्रव्येष्वनुक्तमानेषु मतं मानमिदं बुधैः । पट्टाकृतेषु चैतेषु सूतं प्रक्षिप्य काञ्जिके ॥ १५५ ॥
स्वेदयेद्दिनमेकञ्च दोलायन्त्रेण बुद्धिमान् । स्वेदात्तीव्रो भवेत्सूतो मर्दनाच्च सुनिर्मलः ॥१५६॥

* मूलकम् "मुरई, मूली" वा इति लोके । अनलः=चित्रकम् । त्र्यूषणं=त्रिकटु । राजिका ( राई ) ॥ १५४-१५६ ॥

अथ मर्दनविधिमाह—

इष्टिकाचूर्णचूर्णाभ्यामादौ मर्द्यो रसस्ततः । दध्ना गुडेन सिन्धूत्थराजिकागृहधूमकैः ॥१५७॥

अन्यच्च—

कुमारिकाचित्रकरक्तसर्षपैः कृतैः कषायैर्बृहतीविमिश्रितैः ।
फलत्रिकेणापि विमर्दितो रसो दिनत्रयं सर्वमलैर्विमुच्यते ॥ १५८ ॥

अथ मूर्च्छनविधिमाह—

त्र्यूषणत्रिफलावन्ध्याकन्दैः क्षुद्राद्वयान्वितैः चित्रकोर्णानिशाक्षारकन्याऽर्ककनकद्रवैः ॥१९९॥
सूतं कृतेन यूषेण वारान्सप्त विमर्दयेत् । इत्थं सम्मूर्च्छितः सूतस्त्यजेत्सप्तापि कञ्चुकान् ॥

* वन्ध्याकन्दः=वान्दुखेखसाकन्दः ( बांझ कांकुड )। क्षुद्राद्वयम् ( छोटी कटाई, बडी कटाई )। ऊर्णा ( मेषकी ऊन )। निशा=हरिद्रा । क्षारः=यवक्षारः । कन्या=कुमारिका । अर्कः=अर्कपत्ररसः । कनकद्रवः=धत्तूरपत्ररसः ॥ १९९-१६० ॥

अथोर्ध्वपातनविधिमाह—

मयूरग्रीवताप्याभ्यां नष्टपिष्टीकृतस्य च । यन्त्रे विद्याधरे कुर्याद्रसेन्द्रस्योर्ध्वपातनम् ॥ १६१ ॥

* ताप्यम्=सुवर्णमाक्षिकम् । नष्टपिष्टीकृतस्य=कुमारिकाद्रवयोगेन तावन्मर्दनं कर्तव्यं यावत् पारदः पृथङ् न दृश्यत इत्यर्थः । विद्याधरयन्त्रे=डमरुयन्त्रे ॥ १६१ ॥

अथाधःपातनविधिमाह—

त्रिफलाशिग्रुशिखिभिर्लवणासुरिसंयुतैः । नष्टपिष्टं रसं कृत्वा लेपयेदूर्ध्वभाजनम् ॥ १६२ ॥

ततो दीप्तैरधः पातमुपलैस्तस्य कारयेत् । यन्त्रे भूधरसंज्ञे तु ततः सूतो विशुध्यति ॥ १६२ ॥
स्वेदनादिक्रियाभिस्तु शोधितोऽसौ यदा भवेत् । तदा कार्याणि कुरुते प्रयोज्यः सर्वकर्मसु ॥ १६३ ॥

अथ मुखदोषहरणार्थं शोधनविधिमाह—

गृहकन्या हरति मलं त्रिफलाऽग्निं चित्रको विषं हन्ति । तस्मादेभिर्मिश्रैः पातात् संमूर्छयेत्सूतम् ॥ १६४ ॥

अथ सर्वदोषहरसंक्षिप्तशोधनविधिमाह—

कुमारिकाचित्रकरक्तसर्षपैः कृतैः कषायैर्बृहतीत्रिमिश्रितैः ।
फलत्रिकेणापि विमर्दितो रसो दिनत्रयं सर्वमलैर्विमुच्यते ॥ १६५ ॥

कुमार्या च शिलाचूर्णैर्दिनं सूतं विमर्दयेत् । एवं कदर्थितः सूतो षण्ढो भवति निश्चितम् ॥ १६६ ॥
बह्वौषधिकषायेण स्वेदितः स बली भवेत् । सर्पाक्षीचिञ्चिकावन्ध्याभृङ्गाब्दैः स्वेदितो बली ॥
ततः स पावकद्रावैः स्विन्नः स्याद्द्युतिदीप्तिमान् ॥ १६८ ॥

*सर्पाक्षी ( नागफनी ), चिञ्चिका (इमली), वन्ध्या (बांझ ककोड़ा), भृङ्गः = भृङ्गराजः । अब्दः = मुस्ता । पावकः = चित्रकम् ॥ १६७—१६८ ॥

अथ पारदस्य मारणविधिमाह—

धूमसारं रसं तोरीं गन्धकं नवसादरम् । यामैकं मर्दयेदम्लभागं कृत्वा समं समम् ॥ १६९ ॥
काचकूप्यां विनिक्षिप्य तां च मृद्वस्त्रमुद्रया । विलिप्य परितो वक्त्रे मुद्रां दत्त्वा विशोषयेत् ॥ १७० ॥
अधः सच्छिद्रपिठरीमध्ये कूपीं निवेशयेत् । पिठरीं वालुकापूरैर्भृत्वा चाकूपिकागलम् ॥ १७१ ॥
निवेश्य चुल्ल्यां तदधो वह्निं कुर्याच्छनैः शनैः । तस्मादत्यधिकं किञ्चित्पावकं ज्वालयेत्क्रमात् ॥ १७२ ॥
एवं द्वादशभिर्यामैर्म्रियते रस उत्तमः । स्फोटयेत्स्वाङ्गशीतं तमूर्ध्वगं गन्धकं त्यजेत् ॥ १७३ ॥
अधस्थञ्च मृतं सूतं गृह्णीयात्तं तु मात्रया । यथोचितानुपानेन सर्वकर्मसु योजयेत् ॥ १७४ ॥

अथ पारदमारणेऽपरं विधिमाह—

अपामार्गस्य बीजानां मूषायुग्मं प्रकल्पयेत् । तत्सम्पुटे क्षिपेत्सूतं मलयूदुग्धमिश्रितम् ॥ १७५ ॥
*मलयूः = काकोदुम्बरिका ॥ १७५ ॥

द्रोणपुष्पीप्रसूनानि विडङ्गमरिमेदकः । एतच्चूर्णमधश्चोर्ध्वं दत्त्वा मुद्रा प्रदीयते ॥ १७६ ॥
तद्गोलं स्थापयेत्तस्यश्च मृन्मूषासम्पुटे पचेत् ॥ १७७ ॥
एवमेकपुटेनैव सूतकं भस्म जायते । तत्प्रयोज्यं यथास्थाने यथामात्रं यथाविधि ॥ १७८ ॥

अथ पारदमारणे तृतीयं विधिमाह—

काकोदुम्बरिकादुग्धे रसं किञ्चिद्विमर्दयेत् । तद्दुग्धघृष्टहिङ्गोश्च मूषायुग्मं प्रकल्पयेत् ॥ १७९ ॥
क्षिप्त्वा तत्सम्पुटे सूतं तत्र मुद्रां प्रदापयेत् । धृत्वा तद् गोलकं प्राज्ञो मृन्मूषासम्पुटेऽपि च ॥
पचेद् गजपुटेनैव सूतकं याति भस्मताम् ॥ १८० ॥

अथान्यप्रकारमाह—

नागवल्लीरसैर्घृष्टः कर्कोटीकन्दगर्भितः । मृन्मूषासम्पुटे पक्वः सूतो यात्येव भस्मताम् ॥ १८१ ॥

अथ रसकर्पूरनिर्माणविधिमाह—*
( तत्र पारदस्य संक्षिप्तं शोधनं कर्तव्यम् )

शुद्धसूतसमं कुर्यात्प्रत्येकं गैरिकं सुधीः । इष्टिकां खटिकां तद्वत्स्फटिकां सिन्धुजन्म च ॥ १८२ ॥

वल्मीकं क्षारलवणं भाण्डरञ्जकमृत्तिकाम् । सर्वाण्येतानि संचूर्ण्य वाससा चापि शोधयेत् ॥१८३॥

* खटिका ( खड़ी )। स्फटिका ( फटकिरी )। सिन्धुजन्म = सैन्धवम् । वल्मीकम् = "बमई" इति लोके । क्षारलवणम् (खारीनोन) । भाण्डरञ्जकमृत्तिका (काविस) ॥१८२-१८३॥

एभिश्चूर्णैर्युतं सूतं यामद्वयं विमर्दयेत् । तच्चूर्णसहितं सूतं स्थालीमध्ये परिक्षिपेत् ॥ १८४ ॥
तस्याः स्थाल्या मुखे स्थालीमपरां धारयेत्समाम् । सवस्त्रकुट्टितमृदा मुद्रयेदनयोर्मुखम् ॥१८५॥
संशोष्य मुद्रयेद्भूयो भूयः संशोष्य मुद्रयेत् । सम्यग्विशोष्य मुद्रां तां स्थालीं चुल्ल्यां विधारयेत् ॥
अग्निं निरन्तरं दद्याद्यावद्दिनचतुष्टयम् । अङ्गारोपरि तद्यन्त्रं रक्षेद्यत्नादहर्निशम् ॥ १८७ ॥
शनैरुद्घाटयेद्यन्त्रमूर्ध्वं स्थालीगतं रसम् । कर्पूरवत्सुविमलं गृह्णीयाद् गुणवत्तरम् ॥ १८८ ॥
तद्देवकुसुमचन्दनकस्तूरीकुङ्कुमैर्युक्तम् । खादन् हरति फिरङ्गव्याधिं सोपद्रवं सपदि ॥१८९॥
विन्दति वह्नेर्दीप्तिं पुष्टिं वीर्यं बलं विपुलम् । रमयति रमणीशतकं रसकर्पूरस्य सेवकः सततम् ॥

अथ सिन्दूररसविधिमाह—

शुद्धसूतस्य गृह्णीयाद्द्विपरभागचतुष्टयम् । शुद्धगन्धस्य भागैकं तावत्कृत्रिमगन्धकम् ॥१९१॥
अथ वा पारदस्यार्द्धं शुद्धगन्धकमेव हि । तयोः कज्जलिकां कुर्याद्दिनमेकं विमर्दयेत् ॥ १९२ ॥
मृत्तिकां वाससा सार्द्धं कुट्टयेदतियत्नतः । तया वारत्रयं सम्यक्काचकूपीं प्रलेपयेत् ॥ १९३ ॥
मृत्तिकां शोषयित्वा तु कूप्यां कज्जलिकां क्षिपेत् । तां कूपीं वालुकायन्त्रे स्थापयित्वा रसं पचेत्
अग्निं निरन्तरं दद्याद्यावद्दिनचतुष्टयम् । गृह्णीयादूर्ध्वसंलग्नं सिन्दूरसदृशं रसम् ॥ १९५ ॥

॥ इति सिन्दूररसः ॥

अथ मारितमूर्छितपारदयोर्गुणानाह—

पारदः कृमिकुष्ठघ्नो जयदो दृष्टिकृत्सरः । मृत्युहच्च महावीर्यो योगवाही ज्वरापहः ॥ १९६ ॥
स्मृत्योजोरूपदो वृष्यो वृद्धिकृद्धातुवर्द्धनः । षण्ढत्वनाशनः शूरः खेचरः सिद्धिदः परः ॥ १९७ ॥
पारदः सकलरोगहा स्मृतः षड्रसो निखिलयोगवाहकः ।
पञ्चभूतमय एष कीर्तितस्तेन तद्गुणगणैर्विराजते ॥ १९८ ॥

उक्तञ्च रसामृते—

यस्य रोगस्य यो योगस्तेनैव सह योजितः । रसेन्द्रो हन्ति तं रोगं नरकुञ्जरवाजिनाम् ॥१९९॥

## अथोपरसानां शोधनविधिमाह—

तत्र हिङ्गुलस्य शोधनविधिमाह—

मेषीक्षीरेण दरदमम्लवर्गैश्च भावितम् । सप्तवारान्प्रयत्नेन शुद्धिमायाति निश्चितम् ॥ २०० ॥

अथ शोधितहिङ्गुलस्य गुणानाह—

तिक्तं कषायं कटु हिङ्गुलं स्यान्नेत्रामयघ्नं कफपित्तहारि ।
हृल्लासकण्डूज्वरकामलांश्च प्लीहामवातौ च गरं निहन्ति ॥ २०१ ॥

अथ हिंगुलात्पारदनिष्कर्षणविधिमाह—

निम्बूरसनिम्बपत्ररसैर्वा याममात्रकम् । घृष्ट्वा दरदमूर्ध्वन्तु पातयेत्सूतयुक्तिवत् ॥ २०२ ॥
तत्रोर्ध्वपिठरीलग्नं गृह्णीयाद्रसमुत्तमम् । शुद्धमेव हि तं सूतं सर्वकर्मसु योजयेत् ॥ २०३ ॥

अथाशुद्धगन्धकस्य दोषानाह—

अशुद्धो गन्धकः कुर्यात्कुष्ठं पित्तरुजां भ्रमम् । हन्ति वीर्य्यं बलं रूपं तस्माच्छुद्धः प्रयुज्यते ॥

अथ गन्धकस्य शोधनविधिमाह—

लोहपात्रे विनिक्षिप्य घृतमग्नौ प्रतापयेत् । तप्ते घृते तत्समानं क्षिपेद्गन्धकजं रजः ॥ २०५ ॥

विद्रुतं गन्धकं दृष्ट्वा तनुवस्त्रे विनिक्षिपेत् । यथा वस्त्राद्विनिःसृत्य दुग्धमध्येऽखिलं पतेत् ॥

एवं स गन्धकः शुद्धः सर्वकर्मोचितो भवेत् ॥ २०६ ॥

अथ शुद्धगन्धकस्य गुणानाह—

गन्धकः कटुकस्तिक्तो वीर्योष्णस्तुवरः सरः ॥ २०७ ॥

पित्तलः कटुकः पाके कण्डूवीसर्पजन्तुजित् । हन्ति कुष्ठक्षयप्लीहकफवातान् रसायनः ॥ २०८ ॥

अथाशुद्धाभ्रकस्य दोषानाह—

पीडां विधत्ते विविधां नराणां कुष्ठं क्षयं पाण्डुगदञ्च कुर्यात् ।

हृत्पार्श्वपीडां च करोत्यसह्यामशुद्धमभ्रं गुरु वह्निहृत्स्यात् ॥ २०९ ॥

अथाभ्रकस्य शोधनविधिमाह—

कृष्णाभ्रकं धमेद्वह्नौ ततः क्षीरे विनिक्षिपेत् । भिन्नपत्रं तु तत्कृत्वा तण्डुलीयाम्लयाद्रवैः ॥

भावयेदष्टयामं तदेवमभ्रं विशुद्ध्यति ॥ २१० ॥

अथाभ्रकस्य मारणविधिमाह—

कृत्वा धान्याभ्रकं तच्च शोषयित्वाऽथ मर्दयेत् । अर्कक्षीरैर्दिनं खल्वे चक्राकारं च कारयेत् २११

वेष्टयेदर्कपत्रैश्च सम्यग्गजपुटे पचेत् । पुनर्मर्द्यं पुनः पाच्यं सप्तवारान् पुनः पुनः ॥ २१२ ॥

ततो वटजटाक्वाथैस्तद्वद्देयं पुटत्रयम् । म्रियते नात्र सन्देहः प्रयोज्यं सर्वकर्मसु ॥ २१३ ॥

तुल्यं घृतं मृताभ्रेण लोहपात्रे विपाचयेत् । घृते जीर्णे तदभ्रन्तु सर्वयोगेषु योजयेत् ॥ २१४ ॥

अथ धान्याभ्रकस्य विधिमाह—

पादांशशालिसंयुक्तमभ्रं बद्ध्वाऽथ कम्बले । त्रिरात्रं स्थापयेन्नीरे तत्क्लिन्नं मर्दयेत्करैः ॥२१५॥

कम्बलाद्गलितं सूक्ष्मं वालुकारहितञ्च यत् । तद् धान्याभ्रमिति प्रोक्तमभ्रमारणसिद्धये ॥२१६॥

अथ मारिताभ्रकस्य गुणानाह—

अभ्रं कषायं मधुरं सुशीतमायुष्करं धातुविवर्द्धनञ्च ।

हन्यात्त्रिदोषं व्रणमेहकुष्ठं प्लीहोदरं ग्रन्थिविषक्रिमींश्च ॥ २१७ ॥

रोगान् हन्ति द्रढयति वपुर्वीर्यवृद्धिं विधत्ते तारुण्याढ्यं रमयति शतं योषितां नित्यमेव ।

दीर्घायुष्काञ्जनयति सुतान् सिंहतुल्यप्रभावान् मृत्योर्भीतिं हरति सुतरां सेव्यमानं मृताभ्रम् ॥

अथाशुद्धहरितालस्य दोषानाह—

अशुद्धं तालमायुर्हृत्कफमारुतमेहकृत् । तापस्फोटाङ्गसंकोचं कुरुते तेन शोधयेत् ॥ २१९ ॥

अथ हरितालस्य शोधनविधिमाह—

तालकं कणशः कृत्वा तच्चूर्णं काञ्जिके पचेत् । दोलायन्त्रेण यामैकं ततः कूष्माण्डजद्रवैः २२०

तिलतैले पचेद्यामं यामञ्च त्रिफलाजले । एवं यन्त्रे चतुर्यामं पक्वं शुद्ध्यति तालकम् ॥ २२१॥

अथ हरितालस्य मारणविधिमाह —

तदलं तालकं शुद्धं पौनर्नवरसेन तु । खल्वे विमर्दयेदेकं दिनं पश्चाद्विशोषयेत् ॥ २२२ ॥
ततः पुनर्नवाक्षारैः स्थाल्यामर्धं प्रपूरयेत् । तत्र तद्गोलकं धृत्वा पुनस्तेनैव पूरयेत् ॥२२३॥
आकण्ठं पिठरं तस्य पिधानं धारयेन्मुखे । स्थालीं चुल्ल्यां समारोप्य क्रमाद्वह्निं विवर्धयेत् ॥
दिनान्यन्तरशून्यानि पञ्च वह्निं प्रदापयेत् ॥ २२५ ॥
एवं तन्म्रियते तालं मात्रा तस्यैकरक्तिका । अनुपानान्यनेकानि यथायोग्यं प्रयोजयेत् ॥२२६॥

अथ शोधितमारितहरितालयोर्गुणानाह—

हरितालं कटु स्निग्धं कषायोष्णं हरेद्विषम् । कण्डूकुष्ठास्यरोगास्रकफपित्तकचव्रणान् ॥ २२७ ॥

अन्यच्च—

तालकं हरते रोगान्कुष्ठमृत्युज्वरापहम् । शोधितं कुरुते कान्तिं वीर्यवृद्धिं तथाऽऽयुषम् ॥२२८॥

अथाशुद्धमनःशिलाया दोषानाह—

तालकस्यैव भेदोऽस्ति मनोगुप्तैतदन्तरम् । तालकं त्वतिपीतं स्याद्भवेद्रक्ता मनःशिला ॥२२९॥
मनःशिला मन्दबलं करोति जन्तुं ध्रुवं शोधनमन्तरेण ।
मलस्य बन्धं किल मूत्ररोधं सशर्करं कृच्छ्रगदञ्च कुर्यात् ॥ २३० ॥

अथ मनःशिलायाः शोधनविधिमाह—

पचेत्त्र्यहमजामूत्रे दोलायन्त्रे मनःशिलाम् । भावयेत्सप्तधा पित्तैरजायाः सा विशुद्ध्यति २३१

अथ शोधितमनःशिलाया गुणानाह—

गुर्वी मनःशिला वर्ण्या सरोष्णा लेखनी कटुः । तिक्ता स्निग्धा विषश्वासकासभूतकफास्रनुत् २३२

अथ खर्पररसतुल्यभेदस्तस्य शोधनविधिमाह—

नरमूत्रे च गोमूत्रे सप्ताहं रसकं पचेत् । दोलायन्त्रेण शुद्धः स्यात्ततः कार्येषु योजयेत् ॥२३३॥

अथ शुद्धखर्परस्य गुणानाह—

खर्परं कटुकं क्षारं कषायं वामकं लघु । लेखनं भेदनं शीतं चक्षुष्यं कफपित्तहृत् ॥
विषाश्मकुष्ठकण्डूनां नाशनं परमं मतम् ॥ २३४ ॥

अथ सर्वोपरसानां साधारणशोधनविधिमाह—

सूर्यावर्त्तो वज्रकन्दः कदली देवदालिका । शिग्रुः कोशातकी वन्ध्या काकमाची च वालकम् २३५
एषामेकरसेनैव त्रिक्षारैर्लवणैः सह । भावयेदम्लवर्गैश्च दिनमेकं प्रयत्नतः ॥ २३६ ॥
ततः पचेच्च तद्द्रावैर्दोलायन्त्रे दिनं सुधीः । एवं शुद्ध्यन्ति ते सर्वे प्रोक्ता उपरसा हि ये ॥२३७॥

अथ विशेषशुद्धिमाह—

कङ्कुष्ठं गैरिकं शङ्खः कासीसं टङ्कणं तथा । नीलाञ्जनं शुक्तिभेदाः क्षुल्लकाः सवराटकाः ॥२३८॥
जम्बीरवारिणा स्विन्नाः क्षालिताः कोष्णवारिणा । शुद्धिमायान्त्यमी योज्या भिषग्भिर्योगसिद्धये
* एवं शोधितानामुपरसानां पृथग्गुणा गुणग्रन्थे द्रष्टव्याः ॥ २३९ ॥

अथ रत्नानां शोधनमारणविधिमाह—तत्राशुद्धवज्रस्य दोषानाह—

अशुद्धं कुरुते वज्रं कुष्ठं पार्श्वव्यथां तथा । पाण्डुत्वं पङ्गुलत्वञ्च तस्मात्संशोध्य मारयेत् २४०

अथ वज्रस्य शोधनविधिमाह—

कुलत्थकोद्रवक्वाथे दोलायन्त्रे विपाचयेत् । व्याघ्रीकन्दगतं वज्रं त्रिदिनात्तद्विशुद्ध्यति ॥२४१॥

अथान्यं शोधनविधिमाह—

गृहीत्वाऽह्नि शुभे वज्रं व्याघ्रीकन्दोदरे क्षिपेत् । महिषीविष्ठया लिप्त्वा करीषाग्नौ विपाचयेत् २४२
त्रियामायां चतुर्यामं यामिन्यन्तेऽश्वमूत्रके । सेचयेत्पाचयेदेवं सप्तरात्रेण शुद्ध्यति ॥ २४३ ॥

* व्याघ्री=कण्टकारिका ॥ २४२–२४३ ॥

अथ वज्रस्य मारणविधिमाह—

हिङ्गुसैन्धवसंयुक्ते क्षिपेत्क्वाथे कुलत्थजे । तप्तं तप्तं पुनर्वज्रं भवेद्भस्म त्रिसप्तधा ॥ २४४ ॥

अथान्यं विधिमाह—

मेषशृङ्गभुजङ्गास्थिकूर्मपृष्ठाम्लवेतसान् ॥ २४५ ॥

शशदन्तं समं पिष्ट्वा वज्रीक्षीरेण गोलकम् । कृत्वा तन्मध्यगं वज्रं म्रियते ध्मातमेव हि ॥२४६॥

अथ मारितवज्रस्य गुणानाह—

आयुः पुष्टिं बलं वीर्यं वर्णं सौख्यं करोति च । सेवितं सर्वरोगघ्नं मृतं वज्रं न संशयः ॥२४७॥

अथ इतररत्नानां शोधनमारणविधिमाह—

वज्रवत्सर्वरत्नानि शोधयेन्मारयेत्तथा । शुद्धानां मारितानाञ्च तेषां शृणु गुणानपि ॥ २४८ ॥
मणयो वीर्यतः शीता मधुरास्तुवरा रसात् । चक्षुष्या लेखनाश्चापि सारका विषहारकाः ॥
धारणात्ते तु मङ्गल्या ग्रहदृष्टिहरा अपि ॥ २४९ ॥

* उपरत्नानां शोधनमारणविधिश्चिन्त्यः ॥ २४८–२४९ ॥

अथ विषोपविषाणां शोधनविधिमाह, तत्र—वत्सनाभस्य स्वरूपमाह—

सिन्धुवारसदृक्पत्रो वत्सनाभ्याकृतिस्तथा । यत्पार्श्वे न तरोर्वृद्धिर्वत्सनाभः स भाषितः २५०

अथ विषस्य शोधनविधिमाह—

गोमूत्रे त्रिदिनं स्थाप्यं विषं तेन विशुद्ध्यति । रक्तसर्षपतैलाक्ते तथः धार्यञ्च वाससि २५१
ये गुणा गरले प्रोक्तास्ते स्युर्हीना विशोधनात् । तस्माद्विषं प्रयोगे तु शोधयित्वा प्रयोजयेत् २५२

अथ विषस्य गुणानाह—

विषं प्राणहरं प्रोक्तं व्यवायि च विकाशि च । आग्नेयं वातकफहृद्योगवाहि मदावहम् ॥२५३॥

* व्यवायि=सकलकायगुणव्यापनपूर्वकं पाकगमनशीलम् । विकाशी=ओजःशोषणपूर्वकं सन्धिबन्धशैथिल्यीकरणशीलम् । आग्नेयम्=अधिकाग्न्यंशम् । योगवाहि=सङ्गिगुणग्राहकम् । मदावहम्=तमोगुणप्राधान्येन बुद्धिविध्वंसकम् ॥ २५३ ॥

तदेव युक्तियुक्तन्तु प्राणदायि रसायनम् । योगवाहि परं वातश्लेष्मजित्सन्निपातहृत् ॥२५४॥

अथोपविषाणां निरूपणमाह—

अर्कक्षीरं स्नुहीक्षीरं लाँगली करवीरकः । गुञ्जाऽहिफेनो धत्तूरः सप्तोपविषजातयः ॥ २५५ ॥

* एतेषां शोधनं चिन्त्यम् । गुणास्तत्र तत्र द्रष्टव्याः ॥ २५५ ॥

अथ द्रव्याणां गुणवत्तामवधिमाह—

गुणहीनं भवेद्वर्षादूर्ध्वं तद्रूपमौषधम् । मासद्वयात्तथा चूर्णं लभते हीनवीर्यताम् ॥ २९६ ॥

हीनत्वं गुटिकालेहौ लभेते वत्सरं यदि । हीनाः स्युर्घृततैलाद्याश्चतुर्मासाधिकास्तथा ॥ २९७ ॥

* घृततैलाद्या इति योगविशेषणम् । चतुर्मासाधिकाः=वत्सरादुपरि चत्वारो मासा अधिका येषु ते ॥ २९६-२९७ ॥

अथ ग्रन्थान्तराद् घृततैलयोर्विशेषमाह—

घृतमब्दात्परं पक्वं हीनवीर्यत्वमाप्नुयात् । तैलं पक्वमपक्वञ्च चिरस्थायि गुणाधिकम् ॥२९८॥

* तदपि षोडशमासाभ्यन्तरीणं पक्वं तैलं गुणाधिकं बोद्धव्यम् ॥ २९८ ॥

ओषध्यो लघुपाकाः स्युर्निर्वीर्या वत्सरात्परम् । पुराणाः स्युर्गुणैर्युक्ता आसवो धातवो रसाः

ओषध्यः=धान्यादयः । लघुपाकाः=शीघ्रपाकाः । निर्वीर्याः स्युः ॥ २९९ ॥

इति श्रीमिश्रलटकनतनयश्रीमिश्रभावविरचिते भावप्रकाशे परिभाषाऽऽदिप्रकरणे तृतीयं धात्वादिशोधनमारणविधिप्रकरणं समाप्तम् ॥ ३ ॥

---

## अथ चतुर्थं स्नेहपानविधिप्रकरणम् ॥ ४ ॥

तत्र स्नेहस्य भेदान् विशेषनामानि चाह—

स्नेहश्चतुर्विधः प्रोक्तो घृतं तैलं वसा तथा । मज्जा च तं पिबेन्मर्त्यः किञ्चिदभ्युदिते रवौ॥ १ ॥

स्थावरो जङ्गमश्चैव द्वियोनिः स्नेह उच्यते । तिलतैलं स्थावरेषु जङ्गमेषु घृतं वरम् ।

द्वाभ्यां त्रिभिश्चतुर्भिर्वा यमकस्त्रिवृतो महान् ॥ २ ॥

* अस्यायमर्थः । द्वाभ्यां स्नेहाभ्यां घृततैलाभ्यां यमकाख्यः स्नेहः स्यात् । त्रिभिः स्नेहैर्घृततैलवसारूपैस्त्रिवृताख्यः स्यात् । चतुर्भिर्घृततैलवसामज्जभिर्महान्=महास्नेहः स्यादित्यर्थः ॥ १-२ ॥

पिबेत्र्यहं चतुरहं पञ्चाहं षडहानि वा ॥ ३ ॥

* मृदुमध्यक्रूरकोष्ठापेक्षया त्र्यहं चतुरहं पञ्चाहं षडहानि चेति ।

यदुक्तम्—

मृदुकोष्ठस्त्रिरात्रेण स्निग्धस्नेहोपसेवया । मध्यकोष्ठश्चतुर्भिश्च दिवसैः स्निह्यति ध्रुवम् ॥ १ ॥

पञ्चाभर्वाऽथ षड्भिर्वा दिनैः क्रूरो विशुद्ध्यति । सप्तरात्रात्परं स्नेहः सात्मीभवति सेवितः

* मृदुमध्यक्रूरकोष्ठानां सर्वेषां सप्तरात्रात्परं सात्म्यीभवति । वातानुलोम्यवह्निदीप्तिकोष्ठशुद्धिमृदुस्निग्धाङ्गलाघवधातुपुष्टिद्विजदार्ढ्यनिर्जरताबलवर्णकारी भवति । न तु भक्तद्वेषग्लान्यादीन् करोति ॥ ३ ॥

दोषकालवयोवह्निबलान्यालोक्य योजयेत् । हीनाञ्च मध्यमां ज्येष्ठां मात्रां स्नेहस्य बुद्धिमान्

अमात्रया तथाऽकाले मिथ्याऽऽहारविहारतः । स्नेहः करोति शोथार्शस्तन्द्रानिद्राविसंज्ञिताः५

देया दीप्ताग्नये मात्रा स्नेहस्यैकपलोन्मिता । मध्यमाय त्रिकर्षा स्याज्जघन्याय द्विकार्षिकी ६

* मध्यमाय = मध्यमाग्नये । जघन्याय = हीनाग्नये ॥ ६ ॥

अथ वा स्नेहमात्राः स्युस्तिस्रोऽन्याः सर्वसम्मताः । अहोरात्रेण महती जीर्यत्यह्ना तु मध्यमा ॥
जीर्यत्यल्पा दिनार्द्धेन सा विज्ञेया सुखावहा ॥ ७ ॥

* अयमर्थः—याऽहोरात्रेण जीर्यति सा मात्रा महती । एवं मध्यमा कनिष्ठा च ज्ञेया । ८ ॥

अल्पा स्याद्दीपनी वृष्या स्वल्पदोषे प्रपूजिता । मध्यमा स्नेहनी ज्ञेया बृंहणी श्रमहारिणी
ज्येष्ठा कुष्ठविषोन्मादग्रहापस्मारनाशिनी ॥ ९ ॥

सुश्रुतः पुनरेवमाह—

या मात्रा प्रथमे यामे गते जीर्यति वासरे । सा मात्रा दीपयत्यग्निमल्पदोषे च पूजिता ॥१०॥
या मात्रा वासरस्यार्द्धे व्यतीते परिजीर्यति । सा वृष्या बृंहणी च स्यान्मध्यदोषे प्रपूजिता ११
या मात्रा चरमे यामे स्थितेऽह्नः परिजीर्यति । सा मात्रा स्नेहनी ज्ञेया बहुदोषेषु पूजिता १२
केवलं पैत्तिके सर्पिर्वातिके लवणान्वितम् । देयं बहुकफे चापि व्योषक्षारसमन्वितम् ॥ १३ ॥

अथ सर्पिःपानार्हजनानाह—

रूक्षक्षतविषार्त्तानां वातपित्तविकारिणाम् । हीनमेधास्मृतीनां च सर्पिःपानं प्रशस्यते ॥ १४ ॥

अथ वसापानार्हजनानाह—

क्रिमिकोष्ठानिलाविष्टाः प्रवृद्धकफमेदसः । पिबेयुस्तैलसात्म्याश्च तैलं दार्ढ्यार्थिनश्च ये ॥ १५ ॥
व्यायामकर्शिताः शुष्करेतोरक्ता महारुजः । महाग्निमारुतप्राणा वसायोग्या नराः स्मृताः १६

अथ मज्जः सर्पिषोऽपि पानार्हजनानाह—

क्रूराशयाः क्लेशसहा वातार्त्ता दीप्तवह्नयः । मज्जानञ्च पिबेयुस्ते सर्पिर्वा सर्वतो हितम् ॥१७॥

* क्रूराशयाः—क्रूरकोष्ठाः सर्वतः—सर्वस्मात्स्नेहात् ॥ १७ ॥

अथ शीतादिकालवातादिदोषभेदेन स्नेहपानसमयभेदानाह—

शीतकाले दिवा स्नेहमुष्णकाले पिबेन्निशि । वातपित्ताधिके रात्रौ वातश्लेष्माधिके दिवा १८

अथ नस्यादिषु तैलघृतयोः प्रयोगे नियममाह—

नस्याभ्यञ्जनगण्डूषमूर्द्धकर्णाक्षितर्पणे । तैलं घृतं वा युञ्जीत दृष्ट्वा दोषबलाबलम् ॥ १९ ॥

अथ घृतादिपानेऽनुपानान्याह—

घृते कोष्णं जलं पेयं तैले यूषः प्रशस्यते । वसामज्ज्ञोः पिबेन्मण्डमनुपानं सुखावहम् ॥ २० ॥

अथ स्नेहद्वेषिणां स्नेहपानविधिमाह—

स्नेहद्विषः शिशून्वृद्धान्सुकुमारान्कृशानपि । तृष्णालुकानुष्णकाले सह भक्तेन पाययेत् ॥२१॥

अथ स्नेहकारीणि पदार्थान्तराण्याह—

सर्पिष्मती बहुतिला यवागूः स्वल्पतण्डुला । सुखोष्णा सेव्यमाना तु सद्यः स्नेहनकारिणी २२
शर्कराचूर्णसंयुक्ते दोहनस्थे घृते तु गाम् । दुग्ध्वा क्षीरं पिबन्रूक्षः सद्यःस्नेहनमुत्तमम् ॥ २३ ॥

अथ स्नेहाजीर्णे कर्त्तव्यकर्माण्याह—

मिथ्याऽऽचाराद्बहुत्वाच्च यस्य स्नेहो न जीर्यति ।
विष्टभ्य वाऽपि जीर्येत वारिणोष्णेन वामयेत् ॥ २४ ॥

अथ स्नेहाजीर्णशङ्कायां कर्त्तव्यकर्माण्याह—

स्नेहस्याजीर्णशङ्कायां पिबेदुष्णोदकं नरः । तेनोद्गारो भवेच्छुद्धो भक्तं प्रति रुचिस्तथा २५

अथ स्नेहपानजतृष्णायाः प्रशमोपायमाह—

स्नेहेन पैत्तिकस्याग्निर्यदा तीक्ष्णतराकृतः । तदाऽस्योदीरयेत् तृष्णां विषमां तस्य पाययेत् ।
शीतलं पायसं तेन तृष्णा तस्य प्रशाम्यति ॥ २६ ॥

अथ स्नेहपानायोग्यजनानाह—

अजीर्णी वर्जयेत्स्नेहमुदरी तरुणज्वरी । दुर्बलोऽरोचकी स्थूलो मूर्च्छार्त्तो मेहपीडितः ॥ २७ ॥
दत्तबस्तिर्विरिक्तश्च वान्तस्तृष्णाश्रमान्वितः । अकालप्रसवा नारी दुर्दिने च विवर्जयेत् ॥ २८ ॥

अथ स्नेहपानयोग्यजनानाह—

स्वेद्यसंशोध्यमद्यस्त्रीव्यायामासक्तचित्तकाः ॥ २९ ॥
वृद्धबालकृशा रूक्षाः क्षीणास्राः क्षीणरेतसः । वातार्त्तास्तिमिरार्त्ता ये तेषां स्नेहनमुत्तमम् ३०

अथ सम्यक्स्निग्धस्य लक्षणान्याह—

वातानुलोम्यं दीप्ताग्निर्वर्चःस्निग्धमसंहतम् । मृदुस्निग्धाङ्गताऽग्लानिः स्नेहद्वेषोऽथ लाघवम् ।
विमलेन्द्रियता सम्यक्स्निग्धे रूक्षे विपर्ययः ॥ ३१ ॥

अथातिस्निग्धस्य लक्षणान्याह—

भक्तद्वेषो मुखस्रावो गुदे दाहः प्रवाहिका । तन्द्रातीसारपाण्डुत्वं भृशं स्निग्धस्य लक्षणम् ३२

अथ रूक्षातिस्निग्धयोर्जनयोः कर्त्तव्यकर्माण्याह—

रूक्षस्य स्नेहनं स्नेहैरतिस्निग्धस्य रूक्षणम् । श्यामाकचणकाद्यैश्च तक्रपिण्याकशक्तुभिः ३३

अथ स्नेहसेवनस्य गुणानाह—

दीप्ताग्निः शुद्धकोष्ठश्च पुष्टधातुर्दृढेन्द्रियः । निर्जरो बलवर्णाढ्यः स्नेहसेवी भवेन्नरः ॥ ३४ ॥

अथ स्नेहसेवने त्याज्यकर्माण्याह—

स्नेहे व्यायामसंशीतवेगाघातप्रजागरान् । दिवास्वप्नमभिष्यन्दि रूक्षान्नञ्च विवर्जयेत् ॥ ३५ ॥

इति श्रीमिश्रलटकनतनयश्रीमिश्रभावविरचिते भावप्रकाशे परिभाषाऽऽदिप्रकरणे चतुर्थं स्नेहपानविधिप्रकरणं समाप्तम् ॥ ४ ॥

---

## अथ पञ्चमं पञ्चकर्मविधिप्रकरणम् ॥ ५ ॥

अथ पञ्चकर्मनामान्याह—

प्रथमं वमनं पश्चाद्विरेकश्चानुवासनम् । एतानि पञ्च कर्माणि निरूहो नावनं तथा ॥ १ ॥

अथ वमनम्, तत्रादौ वमनार्हसमयजनानाह—

शरत्काले वसन्ते च प्रावृट्काले च देहिनाम् । वमनं रेचनं चैव कारयेत्कुशलो भिषक् ॥ २ ॥
बलवन्तं कफव्याप्तं हृल्लासादिनिपीडितम् । तथा वमनसात्म्यञ्च धीरचित्तञ्च वामयेत् ॥ ३ ॥
विषदोषे स्तन्यरोगे मन्देऽग्नौ श्लीपदेऽर्बुदे । हृद्रोगे कुष्ठवीसर्पे मेहाजीर्णभ्रमेषु च ॥ ४ ॥

विदारिकाऽपचीकासश्वासपीनसवृद्धिषु । अपस्मारे ज्वरोन्मादे तथा रक्तातिसारिषु ॥ ५ ॥
नासाताल्वोष्ठपाकेषु कर्णस्रावेऽधिजिह्वके । गलशुण्ड्यामतीसारे पित्तश्लेष्मगदे तथा ।
मेदोगदेऽरुचौ चैव वमनं कारयेद्भिषक् ॥ ६ ॥

* स्तन्यरोगे=दुष्टदुग्धजनिते बालस्य रोगे ॥ १-६ ॥

अथ वमनानर्हजनानाह—

न वामनीयस्तिमिरी न गुल्मी नोदरी कृशः । नातिवृद्धो गर्भिणी च न स्थूलो न क्षतातुरः ॥ ७॥
मदार्त्तो बालको रूक्षः क्षुधितश्च निरूहितः । उदावर्त्यूर्ध्वरक्ती च दुश्छर्दः केवलानिली ॥८॥
पाण्डुरोगी कृमिव्याप्तः पवनात्स्वरघातवान् ॥ ९ ॥
एतेऽप्यजीर्णव्यथिता वाम्या ये विषपीडिताः । कफव्याप्ताश्च ते वाम्या मधुकक्वाथपानतः ॥१०॥

* ऊर्ध्वरक्तो=यस्य नासाऽक्षिकर्णास्यमार्गैः रक्तं प्रवर्त्तते सः । शुष्करूक्षकर्कशाद्यो दुश्छर्दः । मधुकस्थाने मधूकेति द्वितीयः पाठः ॥ ७-१० ॥

अथ वमनविधिमाह—

सुकुमारं कृशं बालं वृद्धं भीरुञ्च वामयेत् । पाययित्वा यवागूं वा क्षीरतक्रदधीनि च ॥ ११ ॥
असात्म्यैः श्लेष्मलैर्भोज्यैर्दोषानुत्क्लेश्य देहिनाम् । स्निग्धस्विन्नाय वमनं दत्तं सम्यक्प्रवर्त्तते १२
वमनेषु च सर्वेषु सैन्धवं मधु वा हितम् । बीभत्सं वमनं दद्याद्विपरीतं विरेचनम् ॥ १३ ॥

* बीभत्सम्=अरुच्यम् । विपरीतं=रुच्यम् ॥ ११-१३ ॥

क्वाथ्यद्रव्यस्य कुडवं श्रपयित्वा जलाढके । अर्द्धभागावशिष्टञ्च वमनेष्ववचारयेत् ॥ १४ ॥
क्वाथपाने नवप्रस्था ज्येष्ठा मात्रा प्रकीर्त्तिता । मध्यमा षण्मिता प्रोक्ता त्रिप्रस्था च कनीयसी १५
वमने च विरेके च तथा शोणितमोक्षणे । अर्द्धत्रयोदशपलं प्रस्थमाहुर्मनीषिणः ॥ १६ ॥

* अर्द्धत्रयोदशपलं=सार्द्धषट्कम् ॥ १४-१६ ॥

कल्कचूर्णावलेहानां त्रिपलं मात्रयोत्तमम् । मध्यमं द्विपलं विद्यात्कनीयस्तु पलं भवेत् ॥१७॥
वमने चाष्ट वेगाः स्युः पित्तान्ता उत्तमास्तु ते । षड्वेगा मध्यमा वेगाश्चत्वारस्त्ववरे मताः १८
कफं कटुकतीक्ष्णोष्णैः पित्तं स्वादुहिमैर्जयेत् । सुस्वादुलवणाम्लोष्णैः संसृष्टवायुना कफम् १९
कृष्णां राट्फलं सिन्धुं कफे कोष्णजलैः पिबेत् । पटोलवासानिम्बांश्च पित्ते शीतजलैः पिबेत् २०

* राट्फलम्=मदनफलम् ॥ १७-२० ॥

सश्लेष्मवातपीडायां सक्षीरं मदनं पिबेत् । अजीर्णे कोष्णपानीयं सिन्धुं पीत्वा वमेत्सुधीः २१

* मदनं=मयनफलम् ॥ २१ ॥

वमनं पाययित्वा तु जानुमात्रासने स्थितम् । कण्ठमेरण्डनालेन स्पृशन्तं वामयेद्भिषक् ॥२२॥
प्रसेको हृद्ग्रहः कोठः कण्डूर्दुश्छर्दिते भवेत् । अतिवान्ते भवेत्तृष्णा हिक्कोद्गारौ विसंज्ञिता २३
जिह्वानिःसरणं चाक्ष्णोर्व्यावृत्तिर्हनुसंहतिः । रक्तच्छर्दिः ष्ठीवनञ्च कण्ठपीडा च जायते ॥ २४ ॥

* हनुसंहतिः=हन्वोरमिलनम् ॥ २२-२४ ॥

वामनस्यातियोगे तु मृदु कुर्याद्विरेचनम् । वमनेन प्रविष्टायां जिह्वायां कवलग्रहाः ॥

स्निग्धाम्ललवणैर्युक्तैर्घृतक्षीररसैर्हिताः ॥ २५ ॥

*रसैः = मांसरसैः ॥ २५ ॥

फलान्यम्लानि खादेयुस्तस्य चान्येऽग्रतो नराः । निःसृतान्तु तिलद्राक्षाकल्कलिप्तां प्रवेशयेत् २६

* निःसृतां जिह्वाम् ॥ २६ ॥

व्यावृत्तेऽक्षिणि घृताभ्यक्ते पीडनञ्च शनैः शनैः । हनुमोक्षे स्मृतः स्वेदो नस्यञ्च श्लेष्मवातहृत् २७

रक्तपित्तविधानेन रक्तष्ठीवमुपाचरेत् । धात्रीरसाञ्जनोशीरलाजाचन्दनवारिभिः ॥ २८ ॥

मन्थं कृत्वा पाययेच्च सघृतं क्षौद्रशर्करम् । शाम्यन्त्यनेन तृष्णाऽऽद्या रोगाश्छर्दिसमुद्भवाः ॥२९॥

हृत्कण्ठशिरसां शुद्धिर्दीप्ताग्नित्वञ्च लाघवम् । कफपित्तविनाशश्च सम्यग्वान्तस्य लक्षणम् ॥३०॥

ततोऽपराह्ने दीप्ताग्निं मुद्गषष्टिकाशालिभिः । हृद्यैश्च जाङ्गलरसैः कृत्वा यूषञ्च भोजयेत् ॥३१॥

तन्द्रानिद्राऽऽस्यदौर्गन्ध्यं कण्डूश्च ग्रहणी विषम् । सुवान्तस्य न पीडायै भवन्त्येते कदाचन ३२

अजीर्णं शीतपानीयं व्यायामं मैथुनं तथा । स्नेहाभ्यङ्गञ्च रोषञ्च दिनमेकं सुधीस्त्यजेत् ३३

॥ इति वमनाधिकारः ॥

## अथ विरेचनम् ।

तत्रादौ विरेचनार्हसमयजनानाह—

स्निग्धस्विन्नाय वान्ताय दद्यात्सम्यग्विरेचनम् । अवान्तस्य त्वधःस्रस्तो ग्रहणीं छादयेत्कफः ३४

मन्दाग्निं गौरवं कुर्याज्जनयेद्वा प्रवाहिकाम् । अथ वा पाचनैरामं बलासं परिपाचयेत् ॥३५॥

ऋतौ वसन्ते शरदि देहशुद्धौ विरेचयेत् । अन्यदाऽऽत्ययिके कार्ये शोधनं शीलयेद् बुधः ॥३६॥

* आत्ययिके = प्राणसंकटे ॥ ३४-३६ ॥

पित्ते विरेचनं युञ्ज्यादामोद्भूते गदे तथा । उदरे च तथाऽऽध्माने कोष्ठशुद्धौ विशेषतः ॥३७॥

दोषाः कदा चित्कुप्यन्ति जिता लङ्घनपाचनैः । शोधनैः शोधिता ये तु न तेषां पुनरुद्भवः ३८

बालो वृद्धो भृशं स्निग्धः क्षतक्षीणो भयान्वितः ।

श्रान्तस्तृषाऽऽर्त्तः स्थूलश्च गर्भिणी च नवज्वरी ॥ ३९ ॥

नवप्रसूता नारी च मन्दाग्निश्च मदात्ययी । शल्यार्दितश्च रूक्षश्च न विरेच्या विजानता ॥४०॥

जीर्णज्वरी गरव्याप्तो वातरोगी भगन्दरी । अर्शःपाण्डूदरग्रन्थिहृद्रोगारुचिपीडिताः ॥ ४१ ॥

योनिरोगप्रमेहार्त्ता गुल्मप्लीहव्रणार्दिताः । विद्रधिच्छर्दिविस्फोटविषूचीकुष्ठसंयुताः ॥ ४२ ॥

कर्णनासाशिरोवक्त्रगुदमेढ्रामयान्विताः । प्लीहशोथाक्षिरोगार्त्ताः कृमिक्षारानिलार्दिताः ॥४३॥

शूलिनो मूत्रवातार्त्ता विरेकार्हा नरा मताः ॥ ४४ ॥

अथ मृदुमध्यमक्रूरकोष्ठाँ स्तद्योग्यमात्राद्रव्यादीनि चाह—

बहुपित्तो मृदुः कोष्ठो बहुश्लेष्मा च मध्यमः । बहुवातः क्रूरकोष्ठो दुर्विरेच्यः स कथ्यते ॥४५॥

मृद्वी मात्रा मृदौ कोष्ठे मध्यकोष्ठे च मध्यमा । क्रूरे तीक्ष्णा मता द्रव्यैर्मृदुमध्यमतीक्ष्णकैः ४६

मृदुर्द्राक्षापयश्चञ्चुतैलैरपि विरिच्यते । मध्यमस्त्रिवृतातिक्ताराजवृक्षैर्विरिच्यते ॥

क्रूरः स्नुकपयसा हेमक्षीरीदन्ती फलादिभिः ॥ ४७ ॥

* चञ्चुतैलम्=एरण्डतैलम् । राजवृक्षः=धनबहेरा । हेमक्षीरी ( चोक ) । दन्तीफलम्=बृहद्दन्तीफलम्-जयपालेति प्रसिद्धम् ॥ ४६-४७ ॥

मात्रोत्तमा विरेकस्य त्रिंशद्वेगैः कफान्तिका । वेगैर्विंशतिभिर्मध्या हीनोक्ता दशवेगिका ४८

द्विपलं श्रेष्ठमाख्यातं मध्यमं च पलं भवेत् । पलार्द्धं च कषायाणां कनीयस्तु विरेचनम् ॥४९॥

कल्कमोदकचूर्णानां कर्षो मध्वाज्यलेहतः । कर्षद्वयं पलं वाऽपि वयोरोगाद्यपेक्षया ॥ ५० ॥

पित्तोत्तरे त्रिवृच्चूर्णं द्राक्षाक्वाथादिभिः पिबेत् । त्रिफलाक्वाथगोमूत्रैः पिबेद्व्योषं कफार्दितः

त्रिवृत्सैन्धवशुण्ठीनां चूर्णमम्लैः पिबेन्नरः । वातार्दितो विरेकाय जाङ्गलानां रसेन वा ॥५२॥

एरण्डतैलं त्रिफलाक्वाथेन द्विगुणेन वा । युक्तं पीतं पयोभिर्वा न चिरेण विरिच्यते ॥ ५३ ॥

* शीघ्रमेव विरिच्यत इत्यर्थः ॥ ५३ ॥

अथर्तुभेदेन विरेकद्रव्यभेदानाह—

त्रिवृता कौटजं बीजं पिप्पली विश्वभेषजम् । समृद्वीकारसं क्षौद्रं वर्षाकाले विरेचनम् ॥५४॥

त्रिवृद्दुरालभामुस्तशर्करोदीच्यचन्दनम् । द्राक्षाऽम्बुना सयष्ट्याह्वशीतलञ्च घनात्यये ॥५५॥

* उदीच्यं बाला । घनात्यये=शरदि ॥ ५४-५५ ॥

त्रिवृता चित्रकं पाठामजाजीं सरलं वचाम् । हेमक्षीरीं हेमन्ते तु चूर्णमुष्णाम्बुना पिबेत् ॥५६॥

पिप्पलीं नागरं सिन्धुं श्यामां त्रिवृतया सह । लिह्यात्क्षौद्रेण शिशिरे वसन्ते च विरेचनम्५७

त्रिवृता शर्करातुल्या ग्रीष्मकाले विरेचनम् ॥ ५८ ॥

* श्यामा ( सारिवा ) ॥ ५६-५८ ॥

अभया मरिचं शुण्ठी विडङ्गामलकानि च । पिप्पली पिप्पलीमूलं त्वक्पत्रं मुस्तमेव च ॥ ५९ ॥

एतानि समभागानि दन्ती तु त्रिगुणा भवेत् । त्रिवृताऽष्टगुणा ज्ञेया षड्गुणा चात्र शर्करा ॥६०॥

मधुना मोदकान्कृत्वा कर्षमात्रान्प्रमाणतः । एकैकं भक्षयेत्प्रातः शीतञ्चानु पिबेज्जलम् ॥६१॥

तावद्विरिच्यते जन्तुर्यावदुष्णं न सेवते । पानाहारविहारेषु भवेन्नि र्यन्त्रणः सदा ॥ ६२ ॥

विषमज्वरमन्दाग्निपाण्डुकासभगन्दरान् । दुर्नामकुष्ठगुल्मार्शोगलगण्डोदरभ्रमान् ॥ ६३ ॥

विदाहप्लीहमेहांश्च यक्ष्माणं नयनामयान् । वातरोगांस्तथाऽऽध्मानं मूत्रकृच्छ्रादि चाश्मरीम् ६४

पृष्ठपार्श्वोरुजघनजङ्घोदररुजं जयेत् । स्नेहाभ्यङ्गञ्च रोषञ्च दिनमेकं सुधीस्त्यजेत् ॥ ६५ ॥

सततं शीलनादेव पलितानि प्रणाशयेत् । अभयामोदका ह्येते रसायनवराः स्मृताः ॥ ६६ ॥

अथ विरेकोत्तरकर्माण्याह—

पीत्वा विरेचनं शीतजलैः संसिच्य चक्षुषी । सुगन्धि किञ्चिदाघ्राय ताम्बूलं शीलयेद् बुधः ६७

निवातस्थो न वेगांश्च धारयेन्न शयीत च । शीताम्बु न स्पृशेत्क्वापि कोष्णनीरं पिबेन्मुहुः ॥६८॥

बलासौषधपित्तानि वायुर्वान्ते यथा व्रजेत् । रेकात्तथा मलं पित्तं भेषजञ्च कफो व्रजेत् ॥६९॥

अथ दुर्विरिक्तातिविरिक्तयोर्लक्षणानि भेषजं चाह—

दुर्विरिक्तस्य नाभेस्तु स्तब्धता कुक्षिशूलरुक् । पुरीषवातसङ्गश्च कण्डूमण्डलगौरवम् ॥ ७० ॥

विदाहोऽरुचिराध्मानं भ्रमश्छर्दिश्च जायते । तं पुनः पाचनैः स्नेहैः पक्त्वा स्निग्धं तु रेचयेत्

तेनास्योपद्रवा यान्ति दीप्ताग्निर्लघुता भवेत् ॥ ७१ ॥

विरेकस्यातियोगेन मूर्च्छा भ्रंशो गुदस्य च । शूलं कफातियोगः स्यान्मांसधावनसन्निभम् ७३
मेदोनिभं जलाभासं रक्तञ्चापि विरिच्यते । तस्य शीताम्बुभिः सिक्त्वा शरीरं तण्डुलाम्बुभिः
मधुमिश्रैस्तथा शीतैः कारयेद्वमनं मृदु । सहकारत्वचः कल्को दध्ना सौवीरकेण वा ॥ ७४ ॥
पिष्ट्वा नाभिप्रलेपेन हन्त्यतीसारमुल्बणम् । सौवीरं तु यवैरामैः पक्वैर्वा निस्तुषीकृतैः ॥ ७५ ॥

* सौवीरं = सन्धानम् ॥ ७५ ॥

अजाक्षीरं रसञ्चापि वैष्किरं हारिणं तथा । शालिभिः षष्टिकैस्तुल्यैर्मसूरैर्वाऽपि भोजयेत् ॥७६॥

* वर्त्तकालावविकिरकपिञ्जलकाःतित्तिराः ।

चकोरक्रकराद्याश्च विष्किराः समुदाहृताः । कपिञ्जल इति ख्यातो लोके कपिशतित्तिरः ॥
क्रकरः "कराट" इति लोके । हरिणस्ताम्रवर्णः स्याद् मृगः ॥ ७६ ॥

शीतैः संग्राहिभिर्द्रव्यैः कुर्यात्संग्रहणं भिषक् । लाघवे मनसस्तुष्टावनुलोमं गतेऽनिले ॥ ७७ ॥
सुविरिक्तं नरं ज्ञात्वा पाचनं पाययेन्निशि । इन्द्रियाणां बलं बुद्धेः प्रसादो वह्निदीप्तता ॥७८॥
धातुस्थैर्यं वयःस्थैर्यं भवेद्रेचनसेवनात् । प्रवातसेवां शीताम्बु स्नेहाभ्यङ्गमजीर्णताम् ॥७९॥
व्यायामं मैथुनञ्चैव न सेवेत विरेचितः । शालिषष्टिकमुद्गाद्यैर्यवागूं भोजयेत्कृताम् ॥८०॥
जङ्गलविष्किराणां वा रसैः शाल्योदनं हितम् ॥ ८१ ॥

* हरिणैणकुरङ्गर्ष्यं वातायुमृगमातृकाः । राजीवः पृषतश्चैव जङ्गलाः शरभादयः ॥८१॥

अथानुवासनम् , तत्रादावनुवासननिरूहयोर्भेदमाह—

वस्तिर्द्विधाऽनुवासाख्यो निरूहश्च ततः परम् । यः स्नेहो दीयते स स्यादनुवासननामकः ॥८२॥
कषायक्षीरतैलैर्यो निरूहः स निगद्यते । वस्तिभिर्दीयते यस्मात्तस्माद्वस्तिरिति स्मृतः ॥८३॥

* वस्तिभिः = मृगादीनां मूत्राशयैः ॥ ८२ ॥

अथ स्नेहवस्तिविधिमाह—

तत्रानुवासनाख्यो हि वस्तिर्यः सोऽत्र कथ्यते । अनुवासनभेदश्च मात्रावस्तिरुदीरितः ॥८४॥
पलद्वयं तस्य मात्रा तस्मादर्द्धाऽपि वा भवेत् । अनुवास्यस्तु रूक्षः स्यात्तीक्ष्णाग्निः केवलानिली ८५
नानुवास्यस्तु कुष्ठी स्यान्मेही स्थूलस्तथोदरी । नास्थाप्या नानुवास्याश्च जीर्णोन्मादतृडर्दिताः॥
शोथमूर्च्छाऽरुचिभयश्वासकासक्षयातुराः ॥ ८६ ॥

नेत्रं कार्यं सुवर्णादिधातुभिर्वृक्षवेणुभिः । नलैर्दन्तैर्विषाणाग्रैर्मणिभिर्वा विधीयते ॥ ८७ ॥

नेत्रं = नाडी । तथा चोक्तं विश्वप्रकाशे—

"नेत्रं मन्थगुणे वस्त्रे तरुमूले विलोचने । नेत्रबन्धे च नाड्याञ्च नेत्रो नेतरि भेद्यवद्" इति ॥८७॥

एकवर्षात्तु षड्वर्षाद्यावन्मानं षडङ्गुलम् । ततो द्वादशकं यावन्मानं स्यादष्टसम्मितम् ॥ ८८ ॥
ततः परं द्वादशभिरङ्गुलैर्नेत्रदीर्घता । मुद्गच्छिद्रं कलायाभं छिद्रं कोलास्थिसन्निभम् ॥ ८९ ॥
यथासङ्ख्यं भवेन्नेत्रं श्लक्ष्णं गोपुच्छसन्निभम् । गोपुच्छसन्निभं मूले स्थूलं तस्मात् क्रमात् कृशम्

* मुद्गच्छिद्रादिप्रमाणं नेत्रं क्रमेण षड्वर्षाय द्वादशवर्षाय तदूर्ध्ववर्षाय ज्ञेयम् ॥८८-९०॥

आतुराङ्गुष्ठमानेन मूले स्थूलं विधीयते । कनिष्ठिकापरीणाहमग्रे च गुटिकामुखम् ॥ ९१ ॥

* परीणाहोऽत्र स्थौल्यम् ॥ ९१ ॥

तन्मूले कर्णिके द्वे च कार्ये भागाच्चातुर्थकात् ॥ ९१ ॥

* कर्णिका — गवादिकर्णवत् ॥ ९२ ॥

योजयेत्तत्र वस्तिञ्च बन्धद्वयविधानतः । मृगाजशूकरगवां महिषस्यापि वा भवेत् ॥ ९२ ॥

* वस्तितिरिति शेषः ॥ ९३ ॥

मूत्रकोषस्य वस्तिस्तु तदलाभे तु चर्मणः । कषायरक्तः स मृदुर्वस्तिः स्निग्धो दृढो हितः ॥ ९४ ॥
व्रणवस्तेस्तु नेत्रं स्याच्छ्लक्ष्णमष्टाङ्गुलोन्मितम् । मुद्गच्छिद्रं गृध्रपक्षनलिकापरिणाहि च ॥ ९५ ॥
शरीरोपचयं वर्णं बलमारोग्यमायुषः । कुरुते परिवृद्धिञ्च वस्तिः सम्यगुपासितः ॥ ९६ ॥
दिवा शीते वसन्ते च स्नेहवस्तिः प्रदीयते । ग्रीष्मवर्षाशरत्काले रात्रौ स्यादनुवासनम् ॥ ९७ ॥
न चातिस्निग्धमशनं भोजयित्वाऽनुवासयेत् । मदं मूर्च्छां च जनयेद् द्विधा स्नेहः प्रयोजितः ९८

* द्विधा — भोजने वस्तौ च ॥ ९८ ॥

रूक्षं भुक्तवतोऽत्यन्तं बलं वर्णञ्च ह्रापयेत् । युक्तस्नेहमतो जन्तुं भोजयित्वाऽनुवासयेत् ॥ ९९ ॥

*युक्तस्नेहं — यथोचितस्नेहं भोज्यं भोजयित्वेत्यर्थः ॥ ९९ ॥

हीनमात्रावुभौ वस्ती नातिकार्यकरौ स्मृतौ । अतिमात्रौ तथाऽऽनाहक्लमातीसारकारकौ ॥ १०० ॥

* उभौ वस्ती — अनुवासननिरूहाख्यौ ॥ १०० ॥

उत्तमा स्यात्पलैः षड्भिर्मध्यमा स्यात्पलैस्त्रिभिः । पलार्द्धेन हीना स्यादुक्ता मात्राऽनुवासने ॥
शताह्वासैन्धवाभ्याञ्च देयं स्नेहे च चूर्णकम् । तन्मात्रोत्तममध्यान्त्या षट्चतुर्द्वयमाषकैः १०२
विरेचनात्सप्तरात्रे गते जातबलाय च । भुक्तान्नायानुवास्याय वस्तिर्देयोऽनुवासनः ॥ १०३ ॥
तथाऽनुवास्यं स्वभ्यक्तमुष्णाम्बुस्वेदितं शनैः । भोजयित्वा यथाशास्त्रं कृतचङ्क्रमणं ततः ।
उत्सृष्टानिलविण्मूत्रं योजयेत्स्नेहवस्तिना ॥ १०४ ॥

* उष्णाम्बुस्वेदितम् — उष्णाम्बुना स्नपितम् ॥ १०४ ॥

सुप्तस्य वामपार्श्वेन वामजङ्घाप्रसारिणः । कुञ्चितापरजङ्घस्य नेत्रं स्निग्धे गुदे न्यसेत् ॥ १०५ ॥
बद्ध्वा वस्तिमुखं सूत्रैर्वामहस्तेन धारयेत् । पीडयेद्दक्षिणेनैव मध्यवेगेन धीरधीः ॥ १०६ ॥
जृम्भाकासक्षवादींश्च वस्तिकाले न कारयेत् । त्रिंशन्मात्रामितः कालः प्रोक्तो वस्तेस्तु पीडने १०७
ततः प्रणिहिते स्नेह-युत्तानो वाक्शतं भवेत् । स्वजानुनः करावर्त्तं कुर्याच्छोटिकया पुनः १०८
एषा मात्रा भवेदेका सर्वत्रैवैष निश्चयः । निमिषोन्मेषणं पुंसामङ्गुल्या छोटिकाऽथवा ॥ १०९ ॥
गुर्वक्षरोच्चारणं वा स्यान्मात्रेयं स्मृता बुधैः । प्रसारितैः सर्वगात्रैर्यथावीर्यं प्रसर्पति ॥ ११० ॥

* यथावीर्यं स्नेहादि ॥ ११० ॥

ताडयेत्तलयोरेनं त्रींस्त्रीन्वाराञ्छनैः शनैः । स्फिजोश्चैव तथा श्रोण्यौ शय्यां चैवोत्क्षिपेत्ततः ॥
स्फिजोश्चैनं स्वपाणिभ्यां पूर्ववत्ताडयेद् बुधः ॥ ११२ ॥
शय्यां च पादतस्तस्य त्रीन्वारानुत्क्षिपेत्ततः । जाते विधाने तु ततः कुर्यान्निद्रां यथासुखम् ॥ ११३ ॥
सानिलः सपुरीषश्च स्नेहः प्रत्येति यस्य तु । उपद्रवं विना शीघ्रं स सम्यगनुवासितः ॥ ११४ ॥

* उपद्रवस्थाने "ओषचोषादि" ति सुश्रुते पाठः ॥ ११४ ॥

जीर्णान्नमथ सायाह्ने स्नेहे प्रत्यागते पुनः । लघ्वन्नं भोजयेत्कामं दीप्ताग्निस्तु नरो यदि ॥११५॥
अनुवासिताय दातव्यमित्तरेऽह्नि सुखोदकम् । धान्यशुण्ठीकषायं वा स्नेहव्यापत्तिनाशनम् ॥११६॥

* सुखोदकम् = उष्णोदकम् । व्यापत्तिः = अशोधः ॥ ११५-११६ ॥

अनेन विधिना षड् वा सप्त चाष्टौ नवापि वा । विधेया वस्तयस्तेषामन्ते चैव निरूहणम् ॥११७॥
दत्तस्तु प्रथमो वस्तिः स्नेहयेद्बस्तिवङ्क्षणौ । सम्यग्दत्तो द्वितीयस्तु मूर्द्धस्थमनिलं जयेत् ॥११८॥
बलं वर्णञ्च जनयेत्तृतीयस्तु प्रयोजितः । चतुर्थपञ्चमौ दत्तौ स्नेहयेतां रसासृजौ ॥ ११९ ॥
षष्ठो मांसं स्नेहयति सप्तमो मेद एव च । अष्टमो नवमश्चापि मज्जानञ्च यथाक्रमम् ॥ १२० ॥

* यथाक्रममिति वचनादष्टमोऽस्थि स्नेहयेत् ॥ १२० ॥

एवं शुक्रगतान्दोषान्द्विगुणः साधु साधयेत् ॥ १२१ ॥

* द्विगुणः = अष्टादशदिवसावधिको वस्तिः ॥ २२१ ॥

अष्टादशाष्टादशकाहिनाद्यो ना निषेवते । स कुञ्जरबलोऽश्वस्य जवतुल्योऽमरप्रभः ॥ १२२ ॥
रूक्षाय बहुवाताय स्नेहवस्ति दिने दिने । दद्याद्वैद्यस्तथाऽन्येषामग्न्याबाधभयात् त्र्यहात् ॥
स्नेहोऽल्पमात्रो रूक्षाणां दीर्घकालमनत्ययः ॥ १२३ ॥

* अनत्ययः = अबाधः ॥ १२२-१२३ ॥

तथा निरूहः स्निग्धानामल्पमात्रः प्रशस्यते । अथ वा यस्य तत्कालं स्नेहो निर्याति केवलः
तस्याप्यल्पतरो देयो न हि स्निग्धेऽवतिष्ठते ॥ १२४ ॥

* अवतिष्ठते दत्तः स्नेह इति शेषः ॥ १२४ ॥

अशुद्धस्य मलोन्मिश्रः स्नेहो नैति यदा पुनः । तदाऽङ्गसदनाध्मानेशूलं श्वासश्च जायते ॥१२५॥
पक्वाशये गुरुत्वञ्च तत्र दद्यान्निरूहणम् । तीक्ष्णं तीक्ष्णौषधैर्युक्तं फलवर्त्तिमथापि वा ॥१२६॥
यथाऽनुलोमनो वायुर्मलः स्नेहश्च जायते । तथा विरेचनं दद्यात्तीक्ष्णं नस्यञ्च शस्यते ॥१२७॥
यस्य नोपद्रवं कुर्यात्स्नेहवस्तिरनिःसृतः । सर्वोऽल्पो व्यावृतो रौक्ष्यादुपेक्ष्यः स विजानता १२८
अनायातं त्वहोरात्रे स्नेहं संशोधनैर्हरेत् । स्नेहवस्तावनायाते नान्यः स्नेहो विधीयते ॥१२९॥
गुडूच्येरण्डपूतीकभार्ङ्गीवृषकरौहिषम् । शतावरीसहचरौ काकनासां पलोन्मिताम् ॥ १३० ॥
यवमाषातसीकोलकुलत्थान्प्रसृतोन्मितान् । चतुर्द्रोणेऽम्भसः पक्त्वा द्रोणशेषेण तेन च १३१
पचेत्तैलाढकं सर्वैर्जीवनीयैः पलोन्मितैः । अनुवासनमेतद्धि सर्ववातविकारनुत् ॥ १३२ ॥

* पूतीकः = करञ्जः । रौहिषम् = ईषत्सुगन्धतृणविशेषः । काकनासा ( कौआठोडी ) । प्रसृतम् = पलद्वयम् ॥ १३० ॥

षट्सप्ततिव्यापदस्तु जायन्ते वस्तिकर्मणः । दूषितात्समुदायेन ताश्चिकित्स्यास्तु सुश्रुतात् १३३

* समुदायेन = समुचितनेत्रादिसामग्र्या ॥ १३३ ॥

पानाहारविहाराश्च परिहाराश्च कृत्स्नशः । स्नेहपानसमाः कार्य्या नात्र कार्या विचारणा १३४

अथ निरूहः ।

अथ निरूहवस्तिविधिमाह—

निरूहवस्तिर्बहुधा भिद्यते कारणान्तरैः । तैरेव तस्य नामानि कृतानि मुनिपुङ्गवैः ॥ १३५ ॥

* कारणान्तरैः=समवायिकारणभेदैः ॥ १३५ ॥

निरूहस्यापरं नाम प्रोक्तमास्थापनं बुधैः । स्वस्थाने स्थापनाद्दोषधातूनां स्थापनं मतम् ॥ १३६ ॥

निरूहस्य प्रमाणं तु प्रस्थं पादोत्तरं परम् । मध्यमं प्रस्थमुद्दिष्टं हीनञ्च कुडवात्रयः ॥ १३७ ॥

* परं=श्रेष्ठम् ॥ १३८–१३७ ॥

अतिस्निग्धोऽक्लिष्टदोषः क्षतोरस्कः कृशस्तथा ॥ १३८ ॥

* अक्लिष्टदोषः=अदत्तोत्क्लेशन इति यावत् । क्षतोरस्कः=उरःक्षतवान् ॥ १३८ ॥

आध्मानच्छर्दिहिक्काऽर्शःकासश्वासप्रपीडितः । गुदशोफातिसारार्त्तो विषूचीकुष्ठसंयुतः ॥१३९॥

गर्भिणी मधुमेही च नास्थाप्यश्च जलोदरी । वातव्याधावुदावर्त्ते वातासृग्विषमज्वरे ॥१४०॥

मूर्च्छातृष्णोदरानाहमूत्रकृच्छ्राश्मरीषु च । वृद्ध्यसृग्दरमन्दाग्निप्रमेहेषु निरूहणम् ॥

शूलेऽम्लपित्ते हृद्रोगे योजयेद्विधिवद् बुधः ॥ १४१ ॥

उत्सृष्टानिलविण्मूत्रं स्निग्धं स्विन्नमभोजितम् । मध्याह्ने गृहमध्ये च यथायोग्यं निरूहयेत् १४२

* स्निग्धम्=स्वभ्यक्तम् । स्विन्नम्=उष्णाम्बुस्नपितम् ॥ १४२ ॥

स्नेहवस्तिविधानेन बुधः कुर्यान्निरूहणम् ॥ १४३ ॥

जाते निरूहे च ततो भवेदुत्कटकासनः । तिष्ठेन्मुहूर्त्तमात्रन्तु निरूहागमनेच्छया ॥ १४४ ॥

* अत्र मुहूर्त्तमात्रशब्देनैतदपि बोधितम् । निरूहप्रत्यागमनकालो मुहूर्त्तमात्रः ॥ १४४ ॥

अनायातं मुहूर्त्ते तु निरूहं शोधनैर्हरेत् । निरूहैरेव मतिमान्क्षारमूत्राम्लसैन्धवैः ॥ १४५ ॥

यस्य क्रमेण गच्छन्ति विट् पित्तकफवायवः । लाघवं चोपजायेत सुनिरूढं तमादिशेत् ॥१४६॥

यस्य स्याद्वस्तिरत्यात्पवेगो हीनमलानिलः । मूर्च्छाऽर्त्तिजाड्यारुचिमान्द्युर्निरूढं तमादिशेत् १४७

विविक्तता मनस्तुष्टिः स्निग्धता व्याधिनिग्रहः । आस्थापने स्नेहवस्त्योः सम्यग्दाने तु लक्षणम्

* विविक्तता=दत्तौषधनिःसरणम् ॥ १४८ ॥

अनेन विधिना युञ्ज्यान्निरूहं वस्तिदानवित् । द्वितीयं वा तृतीयं वा चतुर्थं वा यथोचितम् ॥१४९॥

सस्नेह एकः पवने पित्ते द्वौ पयसा सह । कषायकटुमूत्राद्याः कफघुष्णास्त्रयो हिताः ॥१५०॥

पित्तश्लेष्मानिलाविष्टं क्षीरयूषरसैः क्रमात् । निरूढं भोजयित्वा च ततस्तमनुवासयेत् ॥१५१॥

सुकुमारस्य वृद्धस्य बालस्य च मृदुर्हितः । वस्तिस्तीक्ष्णः प्रयुक्तस्तु तेषां हन्याद्बलायुषी १५२॥

दद्यादुत्क्लेशनं पूर्वं मध्ये दोषहरं ततः । पश्चात्संशमनीयञ्च दद्याद्वस्तिं विचक्षणः ॥ १५३ ॥

अथोत्क्लेशनवस्तिमाह—

एरण्डबीजं मधुकं पिप्पली सैन्धवं वचा । हपुषाफलकल्कश्च वस्तिरुत्क्लेशनः स्मृतः ॥१५४॥

अथ दोषहरवस्तिमाह—

शताह्वा मधुकं बिल्वं कौटजं फलमेव च । सकाञ्जिकः सगोमूत्रो वस्तिर्दोषहरः स्मृतः ॥१५५॥

अथ शमनवस्तिमाह—

प्रियङ्गुमधुकं मुस्ता तथैव च रसाञ्जनम्। सक्षीरः शस्यते वस्तिर्दोषाणां शमनः स्मृतः ॥ १५६ ॥

अथ लेखनवस्तिमाह—

त्रिफलाक्वाथगोमूत्रक्षौद्रक्षारसमायुताः। ऊषकादिप्रतीवापैर्वस्तयो लेखनाः स्मृताः १५७॥

* ऊषकादिप्रतीवापाः—ऊषकादिगणविशेषचूर्णप्रक्षेपाः ॥ १५७ ॥

अथ बृंहणवस्तिमाह—

बृंहणद्रव्यनिक्वाथैः कल्कैर्मधुरकैर्युताः। सर्पिर्मांसरसोपेता वस्तयो बृंहणाः स्मृताः ॥ १५८ ॥

अथ पिच्छिलवस्तिमाह—

बदर्यैरावतीशेलुशाल्मलीपुष्पजाङ्कुराः। क्षीरसिद्धाः क्षौद्रयुक्ता नाम्ना पिच्छिलसंज्ञिताः ॥
अजोरभ्रैणरुधिरैर्युक्ता देया विचक्षणैः ॥ १५९ ॥

* अजः=छागः, उरभ्रः—मेषः, एणः=कृष्णमृगः ॥ १५९ ॥

मात्रा पिच्छिलवस्तीनां पलैर्द्वादशभिर्मता ॥ १६० ॥

अथ निरूहमात्राविधिमाह—

दत्त्वाऽऽदौ सैन्धवस्याक्षं मधुनः प्रसृतिद्वयम्। विनिर्मथ्य ततो दद्यात्स्नेहस्य प्रसृतित्रयम् ॥
एकीभूते ततः स्नेहे कल्कस्य प्रसृतिं क्षिपेत्। सम्मूर्च्छिते कषायन्तु चतुःप्रसृतिसम्मितम्।१६२
गृह्णीयाच्च तदा वाऽऽवापमन्ते द्विप्रसृतोन्मितम्। क्षिप्त्वा विमथ्य दद्याच्च निरूहं कुशलो भिषक् ॥
एवं प्रकल्पितो वस्तिर्द्वादशप्रसृतिर्भवेत्। वाते चतुष्पलं क्षौद्रं दद्यात् स्नेहस्य षट्पलम् ॥१६४॥
पित्ते चतुष्पलं क्षौद्रं स्नेहं दद्यात्पलत्रयम्। कफे तु षट्पलं क्षौद्रं क्षिपेत्स्नेहं चतुष्पलम् ॥१६५॥

अथ मधुतैलकवस्तिमाह—

एरण्डक्वाथतुल्यांशं मधुतैलं पलाष्टकम्। शतपुष्पापलार्द्धेन सैन्धवार्द्धेन संयुतम् ॥
मधुतैलकसंज्ञोऽयं वस्तिर्दारुविलोडितः ॥ १६६ ॥
मेदोगुल्मकृमिप्लीहमलोदावर्त्तनाशनः। बलवर्णकरश्चैव वृष्यो दीपनबृंहणः ॥ १६७ ॥

अथ यापनवस्तिमाह—

क्षौद्राज्यक्षीरतैलानां प्रसृतं प्रसृतं भवेत्। हवुषासैन्धवाक्षांशो वस्तिः स्याद्यापनः परः ॥१६८॥

* यापनः=सारकः ॥ १६८ ॥

अथ युक्तरथवस्तिमाह—

एरण्डमूलनिक्वाथो मधुतैलं ससैन्धवम्। एष युक्तरथो वस्तिः सवचापिप्पलीफलः ॥ १६९ ॥

अथ सिद्धवस्तिमाह—

पञ्चमूलस्य निक्वाथैस्तैलं मागधिका मधु। ससैन्धवः सयष्ट्याह्वः सिद्धवस्तिरिति स्मृतः १७०
स्नानमुष्णोदकैः कुर्याद्दिवास्वप्नमजीर्णताम्। वर्जयेदपरं सर्वमाचरेत्स्नेहवस्तिवत् ॥ १७१ ॥

अथोत्तरवस्तिविधिमाह—

अतः परं प्रवक्ष्यामि वस्तिमुत्तरसंज्ञितम्। निरूहादुत्तरो यस्मात्तस्मादुत्तरसंज्ञकः ॥ १७२ ॥
द्वादशाङ्गुलकं नेत्रं मध्ये च कृतकर्णिकम्। मालतीपुष्पवृन्ताभं छिद्रं सर्षपनिर्गमम् ॥ १७३ ॥

पञ्चविंशतिवर्षाणामधो मात्रा द्विकार्षिकी । तदूर्ध्वं पलमात्रा च स्नेहस्योक्ता भिषग्वरैः १७५
अथास्थापनशुद्धस्य तृप्तस्य स्नानभोजनैः । स्थितस्य जानुमात्रे च पीठे स्निग्धे शलाकया १७६
स्निग्धया मेढ्रमार्गं तु ततो नेत्रं नियोजयेत् । शनैःशनैर्घृताभ्यक्तं मेढ्ररन्ध्राङ्गुलानिषट् ॥१७६॥
ततोऽवपीडयेद्बस्तिं शनैर्नेत्रं विनिर्हरेत् । ततः प्रत्यागते स्नेहे स्नेहवस्तिक्रमो हितः ॥१७७॥
स्त्रीणां कनिष्ठिकास्थूलं नेत्रं कुर्याद्दशाङ्गुलम् । मुद्गप्रवेशयोग्यञ्च योन्यन्तश्चतुरङ्गुलम् ॥ १७८ ॥
द्व्यङ्गुलं मूत्रमार्गे च सूक्ष्मं नेत्रं वियोजयेत् । मूत्रकृच्छ्रविकारेषु बालानां त्वेकमङ्गुलम् ॥१७९॥
शनैर्निष्कम्पमाधेयं सूक्ष्मं नेत्रं विचक्षणैः । मालतीपुष्पवृन्ताभं नेत्रमित्युदितं पुनः ॥ १८० ॥
* सूक्ष्मशब्दाभिधानं-बालानां ततोऽपि नेत्रस्य सूक्ष्मताबोधनार्थम् ॥ १८० ॥
योनिमार्गेषु नारीणां स्नेहमात्रा द्विपालिकी । मूत्रमार्गे पलोन्माना बालानां च द्विकार्षिकी
उत्तानायै स्त्रियै दद्यादूर्ध्वजान्वै विचक्षणः । अप्रत्यागच्छति भिषग् वस्तावुत्तरसंज्ञिते १८२
भूयो बस्तिं विदध्याच्च संयुक्तं शोधनैर्गुणैः । फलवर्त्तिं विदध्याद् वा योनिमार्गे दृढां भिषक् १८३
सूत्रैर्विनिर्मितां स्निग्धां शोधनद्रव्यसंयुताम् ॥ १८४ ॥
दह्यमाने तथा वस्तौ दद्याद्बस्तिं विशारदः । क्षीरवृक्षकषायेण पयसा शीतलेन वा ॥ १८५ ॥
*दह्यमाने वस्तौ = यस्मिन् स्थाने वस्तिर्दत्तस्तस्मिन् दह्यमाने ॥ १८५ ॥
वस्तिः शुक्ररजः पुंसां स्त्रीणामार्त्तवजा रुजः । हन्यादुत्तरवस्तिस्तु नोचितो मेहिने क्वचित् १८६
सम्यग्दत्तस्य लिङ्गानि व्यापदः क्रम एव च । वस्तेरुत्तरसंज्ञस्य समाना: स्नेहवस्तिना ॥१८७॥

अथ फलवर्त्तिविधिमाह—

घृताभ्यक्ते गुदे क्षिप्ता श्लक्ष्णा स्वाङ्गुष्ठसन्निभा । मलप्रवर्तिनी वर्तिः फलवर्तिश्च सा स्मृता १८८

## अथ नावनम्

अथ नस्यग्रहणविधिमाह—

नस्यं तत्कथ्यते धीरैर्नासाग्राह्यं यदौषधम् । नावनं नस्यकर्मेति तस्य नामद्वयं मतम् ॥१८९॥
* नस्यकर्म = नासिकायां कर्म चिकित्सा येन तद् नस्यकर्म ॥ १८९ ॥
नस्यभेदो द्विधा प्रोक्तो रेचनं स्नेहनं तथा । रेचनं कर्षणं प्रोक्तं स्नेहनं बृंहणं मतम् ॥ १९० ॥
कफपित्तानिलध्वंसि पूर्वमध्यापराह्णके । दिनस्य गृह्यते नस्यं रात्रावप्युत्कटे गदे ॥ १९१ ॥
* दिनस्य त्रिधा विभक्तस्य पूर्वभागादौ ॥ १९१ ॥
नस्यं त्यजेद्भोजनान्ते दुर्दिने चापतर्पितः । तथा नवप्रतिश्यायी गर्भिणी गरदूषितः ॥
अजीर्णी दत्तवस्तिश्च पीतस्नेहोदकासवः ॥ १९२ ॥
क्रुद्धः शोकाभिभूतश्च तृषाऽऽर्त्तो वृद्धबालकौ । वेगावरोधी श्रान्तश्च स्नातुकामश्च वर्जयेत् १९३
* नस्यमिति शेषः ॥ १९३ ॥
अष्टवर्षस्य बालस्य नस्यकर्म समाचरेत् । अशीतिवर्षादूर्ध्वञ्च नावनं नैव दीयते ॥ १९४ ॥

अथ रेचननस्यमात्रामाह—

अथ वैरेचनं नस्यं ग्राह्यं तैलैः सुतीक्ष्णकैः । तीक्ष्णं भेषजसिद्धैर्वा स्नेहैः क्वाथरसैस्तथा १९५

अथ रेचननस्यविधिमाह—

नासिकारन्ध्रयोरष्टौ षट् चत्वारश्च बिन्दवः । प्रत्येकं रेचनं योग्यं मुख्यमध्याल्पमात्रया ॥ १९६ ॥

अथ नस्यौषधप्रमाणमाह—

नस्यकर्मणि दातव्यं शाणकं तीक्ष्णमौषधम् । हिङ्गु स्याद्यवमात्रन्तु माषैकं सैन्धवं मतम् १९७

क्षीरं चैवाष्टशाणं स्यात्पानीयञ्च त्रिकार्षिकम् । कार्षिकं मधुरद्रव्यं नस्यकर्मणि योजयेत् १९८

अथ रेचननस्यस्य भेदद्वयमाह—

अवपीडः प्रधमनं द्वौ भेदावपरौ स्मृतौ । शिरोविरेचनस्याथ तौ तु देयौ यथायथम् ॥ १९९ ॥

अथ रेचननस्यभेदद्वयस्य लक्षणमाह—

कल्कीकृतादौषधाद्यः पीडितो निःसृतो रसः । सोऽवपीडः समुद्दिष्टस्तीक्ष्णद्रव्यसमुद्भवः ॥२२०॥

षडङ्गुला द्विवक्त्रा या नाडी चूर्णं तया धमेत् । तीक्ष्णं कोलमितं वक्त्रवातैः प्रधमनं हितम् २२१

अथ रेचनस्नेहननस्योपयोगमाह—

ऊर्ध्वजत्रुगते रोगे कफजे स्वरसंक्षये । अरोचके प्रतिश्याये शिरःशूले च पीनसे ॥ २०२ ॥

शोफापस्मारकुष्ठेषु नस्यं वै रेचनं हितम् । भीरुस्त्रीकृशबालानां नस्यं स्नेहेन शस्यते ॥ २०३ ॥

गलरोगे सन्निपाते निद्रायां विषमज्वरे । मनोविकारे कृमिषु पूज्यते चावपीडनम् ॥ २०४ ॥

अत्यन्तोत्कटदोषेषु विसंज्ञेषु च दीयते । चूर्णं प्रधमनं धीरैस्तद्धि तीक्ष्णतरं यतः ॥ २०५ ॥

अथ वैरेचननस्यौषधिगुणानाह—

नस्यं स्याद् गुडशुण्ठीभ्यां पिप्पलीसैन्धवेन वा । जलपिष्टेन कर्णाक्षिनासामूर्द्धभवा गदाः २०६

मन्याहनुगलोद्भूता नश्यन्ति भुजपृष्ठजाः । मधूकसारकृष्णाभ्यां वचामरिचसैन्धवैः ॥ २०७ ॥

नस्यं कोष्णाम्भसा पिष्टं दद्यात्संज्ञाप्रबोधनम् । अपस्मारे तथोन्मादे सन्निपातेऽपतन्त्रके २०८

अथ रेचननस्यस्यापरविधिमाह—

सैन्धवं श्वेतमरिचं सर्षपाः कुष्ठमेव च । बस्तमूत्रेण संपिष्टं नस्यं तन्द्रानिवारणम् ॥ २०९ ॥

* श्वेतमरिचम् ( सहिजने का बीज ) ॥ २०९ ॥

अथ प्रधमननस्यस्यौषधिमाह—

रोहितस्य च पित्तेन भावितं मरिचं वचा । कट्फलं चेति तच्चूर्णं देयं प्रधमनं बुधैः ॥ २१० ॥

अथ बृंहणस्नेहननस्यस्य कल्पनामाह—

अथ बृंहणनस्यस्य कल्पना कथ्यतेऽधुना । मर्शश्च प्रतिमर्शश्च द्वौ भेदौ स्नेहने मतौ ॥२११॥

मर्शस्य तर्पणी मात्रा मुख्या शाणैःस्मृताऽष्टभिः। मध्यमा तु चतुःशाणै हीना शाणमिता मता२१२

एकैकस्मिस्तु मात्रेयं देया नासापुटे बुधैः ॥ २१३ ॥

मर्शस्य द्वित्रिवेलं वा वीक्ष्य दोषबलाबलम् । एकान्तरं द्व्यन्तरं वा नस्यं दद्याद्विचक्षणः २१४

* एकान्तरम्=एकं दिनमन्तरं नस्यशून्यं यत्र तदेकान्तरम् ॥ २१४ ॥

त्र्यहं पञ्चाहमथ वा सप्ताहं वा सुयन्त्रितः ॥ २१५ ॥

* अथ वा त्र्यहम्—त्रीण्यहानि यावत्, प्रतिदिनम् । एवं पञ्चाहं सप्ताहं च । सुयन्त्रितः —सावधानः । यथा उच्छिक्कं न भवति ॥ २१५ ॥

सप्त शिरोविरेके च व्यापदो विविधाः स्मृताः ।
दोषोत्क्लेशात्क्षयाच्चैव विज्ञेयास्ता यथाक्रमम् ।
दोषोत्क्लेशनिमित्तासु कुर्याद्वमनशोधनम् ॥ २१६ ॥

*वमनशोधनम्—वमनरूपं शोधनम् ॥ २१६ ॥

अथ क्षयनिमित्तासु यथास्वं बृंहणं हितम् । शिरोनासाऽक्षिरोगेषु सूर्यावर्त्तार्द्धभेदके ॥२१७॥
दन्तरोगे बले हीने मन्याबाह्वंसजे गदे । मुखशोषे कर्णनादे वातपित्तगदे तथा ॥ २१८ ॥
अकालपलिते चैव केशश्मश्रुप्रपातने । प्रयुज्यते बृंहणं नस्यं स्नेहैर्वा मधुरद्रवैः ॥ २१९ ॥

अथ बृंहणनस्यस्य विधिमाह—

सशर्करं पयःपिष्टं भृष्टमाज्येन कुङ्कुमम् । नस्यप्रयोगतो हन्याद्वातरक्तभवा रुजः ॥ २२० ॥
भ्रूशङ्खाक्षिशिरःकर्णसूर्यावर्त्तार्द्धभेदकान् । नस्यं स्यादणुतैलेन तथा नारायणेन वा ॥
माषाश्मिला वा सर्पिभिस्तत्तद्भेषजसाधितैः ॥ २२१ ॥

*अणुतैलमुक्तं सुश्रुतेन । तद्यथा—

"तिलपरिपीडनोपकरणकाष्ठान्याहृत्य यैरनल्पकालं तिलाः परिपीडितास्तान्यणूनि खण्डशः कल्पयित्वा उलूखले संकुट्य कटाहे पानीयेनाप्लाव्य क्वाथयेत् ततस्तैलं निःसरति तत्तैलं शीतलं हस्तेन जलान्निःसार्य वातघ्नौषधकल्केन पचेत् । तदणुतैलमिति । तद्वातरोहरम्" इति ॥ २२०-२२१ ॥

अथ नस्यस्यान्यं विधिमाह—

तैलं कफे स्याद्वाते च केवले पवने वसाम् । दद्यान्नस्यं सदा पित्ते सर्पिर्मज्जानमेव च ॥२२२॥
माषात्मगुप्तारास्नाभिर्बलारुबुकरौहिषैः । कृतोऽश्वगन्धया क्वाथो हिङ्गुसैन्धवसंयुतः ॥२२३॥
कोष्णो नस्यप्रयोगेण पक्षाघातं सकम्पनम् । जयेददितवातञ्च मन्यास्तम्भावबाहुकौ ॥२२४॥

अथ प्रतिमर्शस्य मात्राविषये आह—

प्रतिमर्शस्य मात्रा तु द्वित्रिबिन्दुमिता मता । प्रत्येकशो नासिकया स्नेहनेति विनिश्चितम् ॥२२५॥
स्नेहे ग्रन्थिद्वयं यावन्निमग्ना चोद्धृता ततः । तर्जनीयं स्रवेद्बिन्दुं सा मात्रा बिन्दुसंज्ञिता ॥२२६॥
एवंविधैर्बिन्दुसंज्ञैरष्टाभिः शाण उच्यते । स देयो मर्शनस्येषु प्रतिमर्शो द्विबिन्दुकः ॥ २२७ ॥

अथ प्रतिमर्शस्य समयमाह—

समयाः प्रतिमर्शस्य बुधैः प्रोक्ताश्चतुर्दश । प्रभाते दन्तकाष्ठान्ते गृहान्निर्गमने तथा ॥ २२८ ॥

अथ नस्यस्य सामान्यविधिमाह—

व्यायामाध्वव्यवायान्ते विण्मूत्रान्तेऽञ्जने कृते । कवलान्ते भोजनान्ते दिवास्वप्नोत्थिते तथा
वमनान्ते तथा सायं प्रतिमर्शः प्रयुज्यते ॥ २३० ॥

ईषदुच्छिङ्घनात्स्नेहो यथा वक्त्रं प्रपद्यते । नस्ये निषिक्तं तं विद्यात्प्रतिमर्शं प्रमाणतः ॥२३१॥

*प्रमाणतः—मात्रायुक्तम् ॥ २३१ ॥

उच्छिष्टं न पिबेच्चैतन्निष्ठीवेन्मुखमागतम् ॥ २३२ ॥

*उच्छिष्टम्—नस्यावशिष्टम् ॥ २३२ ॥

अथ प्रतिमर्शस्य विषयानाह—

क्षीणे तृष्णाऽऽस्यशोषार्ते बाले वृद्धे च पूज्यते । प्रतिमर्शाच्च जायन्ते रोगाश्चैवोर्ध्वजत्रुजाः॥२३३
वलीपलितनाशश्च बलमिन्द्रियजं भवेत् । बिभीतं निम्बगाम्भारी शिवा शेलुश्च काकिनी ॥
एकैकतैलनस्येन पलितं नश्यति ध्रुवम् ॥ २३४ ॥

अथ नस्यस्य सामान्यविधिमाह—

अथ नस्यविधिं वक्ष्ये नस्यग्रहणहेतवे । देशे वातरजोमुक्ते कृतदन्तनिघर्षणम् ॥ २३५ ॥
विशुद्धं धूमपानेन स्विन्नभालगलं तथा । उत्तानशायिनं किञ्चित्प्रलम्बशिरसं नरम् ॥ २३६ ॥
आस्तीर्णहस्तपादञ्च वस्त्राच्छादितलोचनम् । समुन्नामितनासाऽग्रं वैद्यो नस्येन योजयेत् ॥२३७॥
कोष्णेनाच्छिन्नधारेण हेमताराविशुक्तिभिः । शुक्त्या वा यन्त्रयुक्त्या वा प्लोतैर्वा नस्यमाचरेत्
*प्लोतैर्वस्त्रैस्तदुपलक्षितैस्तूलैरपि ॥ २३८ ॥
नस्येऽवासिच्यमानेषु शिरो नैव प्रकम्पयेत् । न कुप्येन्न प्रभाषेत नोच्छिक्केन्न हसेत्तथा ॥२३९॥
एतैर्हि विहितः स्नेहो नैवान्तः सम्प्रपद्यते । ततः कासप्रतिश्यायशिरोऽक्षिगदसम्भवः ॥२४०॥
शृङ्गाटकमभिप्लाव्य ध्याप्येत्न गिलेद्द्रवम् । पञ्च सप्त दशैव स्युर्मात्राः स्नेहस्य धारणे ॥२४१॥
उपविश्याथ निष्ठीवेन्नासावक्त्रागतं द्रवम् । वामदक्षिणपार्श्वाभ्यां निष्ठीवेत्संमुखं न हि॥२४२॥

अथ नस्यदानानन्तरमकर्त्तव्यानि कर्माण्याह—

नीते नस्ये मनस्तापं रजः क्रोधञ्च सन्त्यजेत् । शयीत निद्रां त्यक्त्वा च प्रोत्तानो वाक्छतं नरः
तथा शिरोविरेकान्ते धूमो वा कवलो हितः । नस्ये त्रीण्युपदिष्टानि लक्षणानि प्रयोगतः ॥२४४॥
शुद्धहीनातियोगा हि विज्ञेया शास्त्रचिन्तकैः । लाघवं मलसंशुद्धिः स्रोतसां व्याधिसंक्षयः ॥२४५॥
चित्तेन्द्रियप्रसादश्च शिरसः शुद्धिलक्षणम् । कण्डूः प्रदेहो गुरुता स्रोतसां कफसंस्रवः ।
मूर्ध्नि हीनाविशुद्धेस्तु लक्षणं परिकीर्त्तितम् ॥ २४६ ॥
*हीनाविशुद्धेः=हीननस्येनाविशुद्धेः ॥ २४६ ॥
मस्तुलुङ्गागमो वातवृद्धिरिन्द्रियविभ्रमः । शून्यता शिरसश्चापि मूर्ध्नि गाढं विरेचिते ॥२४७॥
*मस्तुलुङ्गम्=मस्तकान्तःस्नेहः । इन्द्रियविभ्रमः=इन्द्रियाणामयथाविषयग्रहः ॥२४७॥

अथ नस्यहीनयोगातियोगचिकित्सामाह—

हीनातिशुद्धे शिरसि कफवातघ्नमाचरेत् । तत्र हीनेन नस्येन शुद्धे वातघ्नमाचरेत् ॥ २४८ ॥
सम्यग्विशुद्धे शिरसि सार्पर्नस्येन दीयते । कफप्रसेकः शिरसो गुरुतेन्द्रियविभ्रमः ॥ २४९ ॥
लक्षणं तदतिस्निग्धे तत्र रूक्षं प्रदापयेत् । भोजयेच्चानभिष्यन्दि नस्ये वातिकमादिशेत् ॥२५०॥

इति श्रीमिश्रलटकनतनयश्रीमिश्रभावविरचिते भावप्रकाशे परिभाषाऽऽदिप्रकरणे
पञ्चमं पञ्चकर्मविधिप्रकरणं समाप्तम् ॥ ५ ॥

---

## अथ षष्ठं धूमपानादिविधिप्रकरणम् ॥ ६ ॥

तत्रादौ धूमपानविधिमाह—

धूमस्तु षड्विधः प्रोक्तः शमनो बृंहणस्तथा । रेचनः कासहा चैव वामनो व्रणधूपनः ॥ १ ॥

शमनस्य तु पर्यायौ मध्यः प्रायोगिकस्तथा । बृंहणस्य च पर्यायौ स्नेहनो मृदुरेव च ॥ २ ॥
रेचनस्यापि पर्यायौ शोधनस्तीक्ष्ण एव च । अधूमार्हाश्च खल्वेते श्रान्तो भीतश्च दुःखितः॥३॥
दत्तबस्तिर्विरिक्तश्च रात्रौ जागरितस्तथा । पिपासितश्च दाहार्तस्तालुशोषी तथोदरी ॥ ४ ॥
शिरोऽभितापी तिमिरी छर्द्याध्मानप्रपीडितः । क्षतोरस्कः प्रमेहार्तः पाण्डुरोगी च गर्भिणी॥५॥
रूक्षः क्षीणोऽभ्यवहृतक्षीरक्षौद्रघृतासवः । भुक्तान्नदधिमत्स्यश्च बालो वृद्धः कृशस्तथा ॥६॥
अकाले चातिपीतश्च धूमः कुर्यादुपद्रवान् । तत्रेष्टं सर्पिषः पानं नावनाञ्जनतर्पणम् ॥ ७ ॥
सर्पिरिक्षुरसं द्राक्षां पयो वा शर्कराम्बु वा । मधुराम्लौ रसौ वाऽपि वमनाय प्रदापयेत् ॥८॥
धूमस्तु द्वादशाद्वर्षाद् गृह्यतेऽशीतिकान्न च । कासश्वासप्रतिश्यायान् मन्याहनुशिरोरुजः ॥९॥
वातश्लेष्मविकारांश्च हन्याद्धूमः सुयोजितः । धूमोपयोगात्पुरुषः प्रसन्नेन्द्रियवाङ्मनाः ।
दृढकेशद्विजश्मश्रुः सुगन्धिवदनो भवेत् ॥ १० ॥

अथ धूमपाननलिकामानमाह—

धूमनाडी भवेत्तत्र त्रिखण्डा च त्रिपर्विका । कनिष्ठिकापरीणाहा राजमाषागमान्तरा ॥ ११ ॥

* राजमाषागमा समन्ता नाडी ॥ ११ ॥

धूमनाडी भवेद्दीर्घा शमने रोगिणोऽङ्गुलैः । चत्वारिंशन्मितैस्तद्वद्द्वात्रिंशद्भिर्मृदौ मता॥१२॥

* मृदौ बृंहणे ॥ १२ ॥

तीक्ष्णे चतुर्विंशतिभिः कासघ्ने षोडशोन्मितः ॥ १३ ॥

* तीक्ष्णे = रेचने ॥ १३ ॥

दशाङ्गुलैर्वामनीये तथा स्याद् व्रणनाडिका । कलायमण्डलस्थूला कुलत्थागमरन्ध्रिका ॥१४॥

* तथा = दशाङ्गुलमिता ॥ १४ ॥

अथ धूमपानविधिमाह—

अथेषिकां प्रलिम्पेच्च सुश्लक्ष्णां द्वादशाङ्गुलाम् । धूमद्रव्यस्य कल्केन लेपश्चाष्टाङ्गुलः स्मृतः ॥१॥

* ईषिकाम् = शरकाण्डम् ॥ १५ ॥

कल्कं कर्षमितं लिप्त्वा छायाशुष्कञ्च कारयेत् । ईषिकामपनीयाथ स्नेहाक्तां वर्त्तिमादरात्॥१६॥
अङ्गारैर्दीपितां कृत्वा धृत्वा नेत्रस्य रन्ध्रके । वदनेन पिबेद् धूमं वदनेनैव संत्यजेत् ॥ १७ ॥
नासिकाभ्यां ततः पीत्वा मुखेनैव वमेत्सुधीः । शरावसम्पुटे क्षिप्त्वा कल्कमङ्गारदीपितम् ।
छिद्रे नेत्रं निवेश्याथ व्रणं तेनैव धूपयेत् ॥ १८ ॥

अथ धूमपानौषधिकल्कमाह—

एलादिकल्कं शमने स्निग्धं सर्जरसं मृदौ ॥ १९ ॥

रेचने तीक्ष्णकल्कञ्च कासघ्ने क्षुद्रकोषणम् । वामने स्नायुचर्माद्यं दद्यात् धूमस्य पानकम्॥२०॥
व्रणे निम्बवचाद्यञ्च धूपनं संप्रशस्यते । अन्येऽपि धूमा गेहेषु कर्तव्या रोगशान्तये ॥ २१ ॥

अथ गृहदेयधूममाह—

मयूरपिच्छं निम्बस्य पत्राणि बृहतीफलम् । मारिचं हिङ्गु मांसी च बीजं कार्पाससम्भवम्॥२२॥
छागरोमाहिनिर्मोको विष्ठा वैडालिकी तथा । गजदन्तश्च तच्चूर्णं किञ्चिद्घृतविमिश्रितम् ॥२३॥

गेहेषु धूपनं दत्तं सर्वान् बालग्रहान्हरेत्। पिशाचान् राक्षसान्हत्वा सर्वज्वरहरं भवेत् ॥ २४ ॥

* अहिनिर्मोकः = सर्पकञ्चुकः ॥ २२-२४ ॥

अथ धूमपाने त्याज्यकार्याण्याह—

मनस्तापं रजःक्रोधौ धूमपाने निवारयेत्। नेत्राणि धातुजान्याहुर्नलवंशादिजान्यपि ॥ २५ ॥

अथ गण्डूषकवलप्रतिसारणविधिमाह, तत्र गण्डूषविधिमाह—

स्नेहक्षीरकषायादिद्रवैः सम्पूर्णमाननम्। आपूर्य स्थीयते तावद्भिषग्गण्डूषधारणे ॥ २६ ॥
कफपूर्णास्यता यावच्छेदो दोषस्य वा भवेत्। नेत्रघ्राणस्रुतिर्यावत्तावद्गण्डूषधारणम् ॥ २७ ॥
गण्डूषान् सुस्थितः कुर्यात्स्विन्नभालगलादिकः। मनुष्यस्त्रींस्तथा पंच सप्त वाऽऽदोषनाशनात् ॥२८

* गलादिकः = इत्यादिशब्देन गण्डकपोलौ गृह्येते सुश्रुतोक्तत्वात् ॥ २६-२८ ॥

अथ गण्डूषभेदानाह—

चतुर्विधः स्याद् गण्डूषः स्नेहनः शमनस्तथा। शोधनो रोपणश्चैव कवलश्चापि तादृशः ॥२९॥
स्निग्धोष्णैः स्नैहिको वाते स्वादुशीतैः प्रसादनः। पित्ते कट्वम्ललवणैरुष्णैः संशोधनः कफे ॥
कषायतिक्तमधुरैः कटूष्णो रोपणो व्रणे ॥ ३० ॥

अथ गण्डूषकवलौषधमानमाह—

दद्याद् द्रव्येषु चूर्णं च गण्डूषे कोलमात्रकम्। कर्षप्रमाणः कल्कश्च कवले दीयते बुधैः ॥ ३१ ॥

अथ गण्डूषकवलयोरवस्थामर्यादामाह—

धार्यन्ते पञ्चमाद्वर्षाद्गण्डूषः कवलादयः ॥ ३२ ॥

व्याधेरपचयस्तुष्टिर्वैशद्यं वक्त्रलाघवम्। इन्द्रियाणां प्रसादश्च गण्डूषे विहिते भवेत् ॥ ३३ ॥
हरेदास्यस्य वैरस्यं शोषं पाकं व्रणं तृषाम्। दन्तचालश्च गण्डूषो वैशद्यं तु करोति हि ॥३४॥

अथ कवलविधिमाह—

वातपित्तकफघ्नस्य द्रव्यस्य कवलं मुखे। अर्द्धं निक्षिप्य संचर्व्य निष्ठीवेत्कवले विधिः ॥३५॥
कवलः कुरुते काङ्क्षां भक्ष्येषु हरते कफम्। तृष्णां शोषञ्च वैरस्यं दन्तचालञ्च नाशयेत् ॥३६॥

अथ प्रतिसारणविधिमाह—

दन्तजिह्वामुखानां यच्चूर्णकल्कावलेहकैः। शनैर्घर्षणमङ्गुल्या तदुक्तं प्रतिसारणम् ॥ ३७ ॥
वैरस्यं मुखदौर्गन्ध्यं मुखशोषं तथा तृषाम्। अरुचिं दन्तपीडाञ्च निहन्ति प्रतिसारणम् ॥३८॥
हीने जाड्यकफोत्क्लेशावरसज्ञानमेव च। अतियोगान्मुखे पाकः शोषस्तृष्णा वमिः क्लमः ॥३९॥

अथ स्वेदविधिमाह—

स्वेदश्चतुर्विधः प्रोक्तस्तापोष्मस्वेदसंज्ञितः। उपनाहो द्रवः स्वेदः सर्वे वातार्तिहारिणः ॥४०॥

* तापस्वेद उष्मस्वेदश्च ताभ्यां संज्ञितः। उपनाहः = उपनाहस्वेद इत्यर्थः ॥ ४० ॥

स्वेदौ तापोष्मजौ प्रायः श्लेष्मघ्नौ समुदीरितौ। उपनाहस्तु वातघ्नः पित्तसङ्गे द्रवो हितः ॥४१॥

* द्रवो हि द्रवस्वेदः ॥ ४१ ॥

महाबले महाव्याधौ शीते स्वेदो महान्स्मृतः। दुर्बले दुर्बलः स्वेदो मध्यमे मध्यमो मतः।
वक्षासे रूक्षणः स्वेदो रूक्षस्निग्धः कफानिले ॥ ४२ ॥

* रूक्षणः=रूक्षयतीति रूक्षणः । नन्द्यादित्वाल्ल्युट् प्रत्ययः ॥ ४२ ॥

कफमेदोवृते वाते कोष्णं गेहं रवेः करान् । नियुद्धं मार्गगमनं गुरु प्रावरणं ध्रुवम् ॥ ४३ ॥
चिन्ताव्यायामभाराश्च सेवेतामयमुक्तये । येषां नस्यं प्रदातव्यं वस्तिश्चापि हि देहिनाम् ॥४४॥
शोधनीयाश्च ये के चित् पूर्वं स्वेद्याश्च ते मताः । स्वेद्या ऊर्ध्वं त्रयोऽपीह भगन्दर्यर्शसस्तथा ४५
अश्मर्यां चातुरो जन्तुः शमयेच्छस्त्रकर्मणः ॥ ४६ ॥

* शस्त्रकर्मण ऊर्ध्वं पश्चाच्चेति सुश्रुते । ४६ ॥

पश्चात्स्वेद्याहृते शल्ये मूढगर्भगदे तथा । काले प्रजाताऽकाले वा पश्चात्स्वेद्या नितम्बिनी ॥४७॥
सर्वान्स्वेदान्निवाते च जीर्णेऽन्ने वा विचारयेत् । स्वेदाद्धातुस्थिता दोषाःस्नेहक्लिन्नस्य देहिनः ४८
द्रवत्वं प्राप्य कोष्ठान्तर्गत्वा यान्ति विरेकताम् । स्नेहाभ्यक्तशरीरस्य शीतैराच्छाद्य चक्षुषी ।
स्वेद्यमानशरीरस्य हृदयं शीतलैः स्पृशेत् ॥ ४९ ॥

* शीतलैः=आर्द्रवस्त्रादिभिः ॥ ४९ ॥

अजीर्णी दुर्बलो मेही क्षतक्षीणः पिपासितः ॥ ५० ॥
अतिसारी रक्तपित्ती पाण्डुरोगी तथोदरी । मेदस्वी गर्भिणी चैव न हि स्वेद्या विजानता ५१
स्वेदादेषां याति देहो विनाशं नो साध्यत्वं यान्ति तेषां विकाराः ॥ ५२ ॥
एतानपि मृदुस्वेदैः स्वेदसाध्यानुपाचरेत् । मृदुस्वेदं प्रयुञ्जीत तथा हृन्मुष्कदृष्टिषु ॥ ५३ ॥
अतिस्वेदात्सन्धिपीडा दाहस्तृष्णा क्लमो भ्रमः । पित्तासृक्पिडिकाकोपस्तत्र शीतैरुपाचरेत् ५४

अथ तापस्वेदविधिमाह—

तेषु तापाभिधः स्वेदो वालुकावस्त्रपाणिभिः ॥ ५५ ॥

अथोष्मस्वेदविधिमाह—

कपालकन्दुकाङ्गारैर्यथायोग्यं हि जायते । प्रतप्तैरम्लसिक्तैश्च कायेऽलक्तकवेष्टिते ॥
ऊष्मस्वेदः प्रयोक्तव्यो लोहपिण्डे वृकाश्मभिः । अथ वा वातनिर्णाशिद्रव्यक्वाथरसादिभिः ५६
उष्णैर्घटं पूरयित्वा पार्श्वे छिद्रं विधाय च । त्रिमुद्रथास्यं त्रिखण्डां च धातुजां काष्ठजामुत५७
षडङ्गुलास्यां गोपुच्छां नाडीं युञ्ज्याद् द्विहस्तकाम् ।
सुखोपविष्टं स्वभ्यक्तं गुरुप्रावरणावृतम् । हस्तिशुण्डिकया नाड्या स्वेदयेद्वातरोगिणाम् ५८

* त्रिखण्डामिति स्वेदसौकर्यार्थम् षडङ्गुलास्यामिति मूले षडङ्गुलविशालमुखीं गोपुच्छमिव क्रमकृशाम् । तेनाग्रे गोपुच्छाग्रपरिमाणेन कृशाम् । नाडीम्=अन्तःसरन्ध्राम् । द्विहस्तकां=हस्तद्वयपरिमाणाम् । हस्तिशुण्डिकयेति हस्तिशुण्डेव क्रमकृशत्वान्नाड्या इयं संज्ञा ५६-५८

पुरुषायाममात्रां वा भूमिं सम्मार्ज्य खादिरैः । काष्ठैर्दग्ध्वा तथाऽम्बुक्ष्य क्षीरधान्याम्लवारिभिः
वातघ्नपत्रैराच्छाद्य शयानं स्वेदयेन्नरम् । एवं माषादिभिः स्विन्नैः शयानं स्वेदमाचरेत् ॥ ६० ॥

अथोपनाहस्वेदविधिमाह—

अथोपनाहस्वेदश्च कुर्याद्वातहरौषधैः । प्रदिह्य देहं वातार्त्तं क्षीरमांसरसादिभिः ॥ ६१ ॥
अम्लपिष्टैः सलवणैः सुखोष्णैः स्नेहसंयुतैः । अथ ग्राम्यानूपमांसैर्जीवनीयगणेन च ॥ ६२ ॥
दधिसौवीरकक्षीरैर्वीरतर्वादिना तथा । कुलत्थमाषगोधूमैरतसीतिलसर्षपैः ॥ ६३ ॥

शतपुष्पादेवदारुशेफालीस्थूलजीरकैः । एरण्डमूलजीरश्च रास्नामूलकशिग्रुभिः ॥ ६४ ॥
मिशिकृष्णाकुठेरैश्च लवणैः स्नेहसंयुतैः । प्रसारण्यश्वगन्धाभ्यां बलाभिर्दशमूलकैः ॥ ६५ ॥
गुडूच्या वानरीबीजैर्यथालाभसमाहृतैः । क्षुण्णैः स्विन्नैश्च वस्त्रेण बद्धैः संस्वेदयेन्नरम् ॥६६॥
महाशाल्वणसंज्ञोऽयं योगः सर्वानिलार्त्तिनुत् ॥ ६७ ॥

* अन्वयार्थः-उपनाहस्वेदञ्च कुर्यात् । केन प्रकारेण ? इत्याकाङ्क्षायां तत्प्रकारमाह—वातहरौषधैः । कथम्भूतैः ? अम्लपिष्टैः—अम्लेन काञ्जिकतक्रादिना पिष्टैः । सलवणैः । स्नेहसंयुतैः । क्षीरमांसरसान्वितैः । सुखोष्णैः । वातार्त्तं देहं प्रदिह्य प्रलिप्य स्वेदयेदित्यर्थः ॥

अथ वाऽम्लेन सम्पिष्टैः कोष्णैः सूक्ष्मपटस्थितैः ।
भेषजैः स्वेदयेत् किं वा स्विन्नैः कोष्णैः पटस्थितैः ॥ ६८ ॥

अथ द्रवस्वेदविधिमाह—

द्रवस्वेदस्तु वातघ्नद्रव्यक्वाथेन पूरिते । कटाहे कोष्ठके वाऽपि सुपविष्टोऽवगाहयेत् ॥ ६९ ॥

* अयमर्थः—प्रथमतो वातघ्नद्रव्यक्वाथेन कण्ठपूरिते कोष्ठके कटाहे वा सुपविष्टस्तिष्ठेत् ६९

सौवर्णं राजतं वाऽपि ताम्रं लौहञ्च दारुजम् । कोष्ठकं तत्र कुर्वीतोच्छ्राये षड्विंशदङ्गुलम् ॥
आयामे चा तदेव स्याच्चतुष्कोणन्तु चिक्कणम् ॥ ७० ॥

पक्षान्तरमाह—

नाभेः षडङ्गुलं यावन्मग्नं क्वाथस्य धारया । कोष्णया स्कन्धयोः सिक्तस्तिष्ठेत्स्निग्धतनुर्नरः ७१

* अथ वा नाभेः षडङ्गुलमूर्द्ध्वं यावत् क्वाथे मग्न उपविष्टः । पश्चात् क्वाथस्य धारया । स्कन्धयोः सिच्यमानस्तिष्ठेत् यावत् । कोष्ठकं परिपूर्णं भवतीत्यर्थः । क्वाथपक्षे प्रथमतः स्नेहाभ्यक्ततनुरुपविशेत् ॥ ७१ ॥

मुहूर्त्तैकं समारभ्य यावत्स्यात्तच्चतुष्टयम् । तावत्तदवगाहेत यावदारोग्यनिश्चयः ॥ ७२ ॥
एवं तैलेन दुग्धेन सर्पिषा स्वेदयेन्नरम् । एकान्तरो द्व्यन्तरो वा युक्तः स्नेहोऽवगाहने ॥७३॥

* एतावता क्वाथो दुग्धञ्च नित्यमेव युज्यते । स्नेहस्तु दिनमेकं द्वे वा दिने गमयित्वा युक्तः । अग्निमान्द्याशङ्कयेति भावः ॥ ७३ ॥

शिरामुखैर्लोमकूपैर्धमनीभिश्च तर्पयेत् । शरीरे बलमाधत्ते युक्तः स्नेहोऽवगाहने ॥ ७४ ॥
जलसिक्तस्य वर्द्धन्ते यथा मूलेऽङ्कुरादयः । तथैव धातुवृद्धिर्हि स्नेहसिक्तस्य जायते ॥ ७५ ॥
नातः परतरः कश्चिदुपायो वातनाशनः । शीतशूलव्युपरमे स्तम्भगौरवनिग्रहे ॥ ७६ ॥
दीप्तेऽग्नौ मार्दवे जाते स्वेदनाद्विरतिर्मता ॥ ७७ ॥

अथ मूर्द्धतैलविधिमाह—

अभ्यङ्गः परिषेकश्च पिचुर्वस्तिरिति क्रमात् । मूर्द्धतैलं चतुर्द्धा स्याद्बलवत्तद्यथोत्तरम् ॥ ७८ ॥

* अभ्यङ्गः—तैलेन शिरसो मर्दनम् । परिषेकः=शिरसि धारापातनम् । पिचुः=तैलाक्तं तूलं 'फोहा' इति लोके । वस्तिर्वक्ष्यमाणः ॥ ७८ ॥

त्रयोऽभ्यङ्गादयः पूर्वं प्रसिद्धाः सर्वतः स्मृताः । शिरोवस्तिविधिश्चात्र प्रोच्यते सुज्ञसम्मतः ७९
शिरोवस्तिश्चर्मणः स्याद् द्विमुखो द्वादशाङ्गुलः । शिरःप्रमाणस्तं बद्ध्वा मस्तके माषपिष्टकैः ८०

सन्धिरोधं विधायाथ स्नेहैः कोष्णैः प्रपूरयेत्। तावद्धार्यस्तु यावत्स्यान्नासाकर्णमुखस्रुतिः ८१
वेदनोपशमो वाऽपि मात्राणां वा सहस्रकम्। स्वजानुनः करावर्तं कुर्याच्छोटिकया युतम् ८२
एषा मात्रा भवेदेका सर्वत्रैवैष निश्चयः। विना भोजनमेवात्र शिरोबस्तिः प्रशस्यते ॥ ८३ ॥
प्रयोज्यस्तु शिरोबस्तिः पञ्च सप्त दिनानि वा। विमोच्य शिरसो बस्तिं मूर्द्धानञ्च ततस्ततः ८४
उद्वर्त्तकार्यं ततः कोष्णे नीरे स्नानं समाचरेत्। अनेन दुर्जया रोगा वातजा यान्ति संक्षयम्।
शिरःकम्पादयस्तेन सर्वकालेषु युञ्जते ॥ ८५ ॥

* पञ्च सप्त दिनानि वेत्युक्त्वा सर्वकालेष्विति शिरःकम्पादिरोगानुवृत्तौ ज्ञेयम् ॥८१-८५॥

अथ कर्णपूरणविधिमाह—

स्वेदयेत्कर्णदेशन्तु किञ्चिन्नुः पार्श्वशायिनः। मूत्रैः स्नेहै रसैरुष्णैः श्रोत्ररन्ध्रं प्रपूरयेत् ॥८६॥
कर्णञ्च पूरितं रक्षेच्छतं पञ्च शतानि वा। सहस्रं वाऽपि मात्राणां श्रोत्रकण्ठशिरोगदे ॥ ८७ ॥
मूत्राद्यैः पूरणं कर्णे भोजनात्प्राक्प्रशस्यते। तैलाद्यैः पूरणं कर्णे भास्करेऽस्तमुपागते ॥ ८८ ॥

तद्यथा—

कर्णे शूलाकुले कोष्णं बस्तमूत्रं ससैन्धवम्। निक्षिपेत्तेन शाम्यन्ति शूलपाकादिजा रुजः ॥८९॥
शृङ्गवेरञ्च मधुकं सैन्धवं तैलमेव च। कदुष्णं कर्णयोर्देयमेतत्स्याद्वेदनाऽपहम् ॥ ९० ॥
पीतार्कपत्रमाज्येन लिप्तं वह्नौ प्रतापयेत्। तद्रसः श्रवणे क्षिप्तः कर्णशूलहरः परः ॥ ९१ ॥

अथ लेपविधिमाह—

आलेपस्य तु नामानि लेपो लेपनलिप्तकौ। दोषघ्नो विषहा वर्ण्यः स च लेपस्त्रिधा मतः ॥९२॥
त्रिप्रमाणश्चतुर्भागत्रिभागार्द्धाङ्गुलोन्नतः। आर्द्रो व्याधिहरः स स्याच्छुष्को दूषयति च्छविम् ९३

* चतुर्भागत्रिभागार्द्धाङ्गुलोन्नतः, एवं त्रिप्रमाणः ॥ ९३ ॥

दोषघ्नो लेपो यथा—

शोथघ्नीदारुसिद्धार्थशुण्ठीशोभाञ्जनत्वचाम्। आरनालेन पिष्टानां प्रलेपः सर्वशोथहा ॥ ९४ ॥

* शोथघ्नी=पुनर्नवा ॥ ९४ ॥

शिरीषं मधुयष्टी च तगरं रक्तचन्दनम्। एला मांसी निशायुग्मं कुष्ठं बालकमेव च ॥ ९५ ॥
इति सञ्चूर्ण्य लेपोऽयं पंचमांशघृतप्लुतः। जलेन क्रियते सुज्ञैर्दशाङ्ग इति संज्ञितः ॥ ९६ ॥
वीसर्पञ्च विषस्फोटाञ्छोथदुष्टव्रणाञ्जयेत् ॥ ९७ ॥

विषघ्नो लेपो यथा—

अजादुग्धतिलैर्लेपो नवनीतेन संयुतः। शोथमारुष्करं हन्ति लेपो वा कृष्णमार्त्तिकः ॥ ९८ ॥

*नवनीतेनात्र माहिषेणाद्धिकेन। कृष्णमार्त्तिकः=कृष्णमृत्तिकाकृतः ॥ ९८ ॥

अपरः कृमिविषापहलेपो यथा—

लाङ्गल्यतिविषाऽलाबूजालिनीबीजमूलकैः। लेपो धान्याम्बुसम्पिष्टः कीटविस्फोटनाशनः ॥९९॥

मुखकान्तिदो लेपो यथा—

रक्तचन्दनमञ्जिष्ठालोध्रकुष्ठप्रियङ्गवः। वटाङ्कुरा मसूराश्च व्यङ्गघ्ना मुखकान्तिदाः ॥ ॥ १०० ॥

अथ लेपविधिश्चैव प्रोच्यते सुश्रुतसम्मतः । आलेपश्च प्रदेहश्च द्वौ भेदौ तस्य भाषितौ ॥१०१॥
चर्मार्द्रं माहिषं यद्वत्प्रोक्षतं सा मितिस्तयोः । शीतस्तनुर्विशोषी च प्रलेपः पित्तहृन्मतः ॥१०२॥
आर्द्रो घनस्तथोष्णःस्यात्प्रदेहः श्लेष्मवातहा । न रात्रौ लेपनं कुर्याच्छुष्यमाणं न धारयेत् ॥१०३॥
शुष्यमाणमुपेक्षेत प्रदेहं पीडनं प्रति । तमसा पिहिता ह्युष्मा लोमकूपमुखे स्थितः ॥
विना लेपेन निर्याति रात्रौ ना लेपयेदतः ॥ १०४ ॥
*तमसा—रात्र्यन्धकारेण ॥ १००-१०४ ॥
रात्रावपि प्रलेपादिर्व्रणे देयो विचक्षणैः । अपाकिन्यतिगम्भीरे रक्तश्लेष्मसमुद्भवे ॥ १०५ ॥
प्रलेपो यथा—
मधुकं चन्दनं मूर्वा नलमूलञ्च पर्पटम् । उशीरं बालकं पद्मं प्रलेपः पित्तशोथहृत् ॥ १०६ ॥
प्रदेहो यथा—
बीजपूरजटा हिंस्रा देवदारु महौषधम् । रास्नाऽरणिः प्रदेहोऽयं वातशोथविनाशनः ॥ १०७ ॥
*अरणिः = अग्निमन्थः ॥ १०७ ॥
कृष्णापुराणपिण्याकशिग्रुत्वक्सिकताशिवाः । गोमूत्रपिष्टः कोष्णोऽयं प्रदेहः श्लेष्मशोथहा १०८
अथ शोणितस्रावण ( फस्त ) विधिमाह—
शोणितं स्रावयेज्जन्तोरामयं प्रसमीक्ष्य च । प्रस्थं प्रस्थार्द्धमथ वा प्रस्थार्द्धार्द्धमथापि वा ॥१०९॥
शरत्काले स्वभावेन शोणितं स्रावयेन्नरः त्वग्दोषग्रन्थिशोथाद्या नश्यन्ति रुधिरोद्भवा ॥ ११० ॥
व्यभ्रे वर्षासु विध्येत शिते ग्रीष्मे शरद्यपि । मध्याह्ने शीतकाले च रुधिरं स्रावयेद् बुधः १११
अनुष्णशीतं मधुरं स्निग्धं रक्तञ्च वर्णतः । शोणितं गुरु विस्रं स्याद् विदाहश्चास्य पित्तवत् ॥१२२॥
विस्रता द्रवता रागश्चलनं विलयस्तथा । भूम्यादिपञ्चभूतानामेते रक्ते गुणाः स्मृताः ॥११३॥
रक्ते दुष्टे भवेच्छोथो रक्तमण्डलमेव च । व्यथा दाहश्च पाकश्च कण्डूश्च पिडकोद्गमः ॥ ११४ ॥
वृद्धे रक्ताङ्गनेत्रत्वं शिराणां पूर्णता तथा । गात्राणां गौरवं निद्रा मोहो दाहश्च जायते ॥११४॥
क्षीणेऽस्रे मधुराकाङ्क्षा मूर्च्छा च त्वचि रूक्षता । शैथिल्यं च शिराणां स्याद्वातादुन्मार्गगामिता
*वाताद्रक्तक्षैण्यजानिलात् ॥ ११६ ॥
अरुणं फेनिलं रूक्षं परुषं तनु शीघ्रगम् । आस्कन्दि सूचीनिस्तोदि रक्तं स्याद्वातदूषितम् ११७
पित्तेन पीतं हरितं नीलं श्यावं च विस्रकम् । अस्वादूष्णं मक्षिकाणां पिपीलीनामनिष्टकम् ११८
शीतलं बहुलं स्निग्धं गैरिकोदकसन्निभम् । मांसपेशीप्रभं स्कन्दि मन्दगं कफदूषितम् ॥११९॥
द्विदोषदुष्टं संसृष्ट त्रिदुष्टं पूतिगन्धकम् । सर्वलक्षणसंयुक्तं काञ्जिकाभं च जायते ॥ १२० ॥
विषदुष्टं भवेच्छ्यावं नासिकोन्मार्गगं तथा । विस्रं काञ्जिकसंकाशं सर्वकुष्ठकरं तथा ॥१२१॥
इन्द्रगोपप्रभं ज्ञेयं प्रकृतिस्थमसंहतम् । शोथे दाहेऽङ्गपाके च रक्तवर्णेऽसृजः स्रुतौ ॥ १२२ ॥
वातरक्ते तथा कुष्ठे सपीडे दुर्जयेऽनिले । पाण्डुरोगे श्लीपदे च विषदुष्टे च शोणिते ॥ १२३ ॥
ग्रन्थ्यर्बुदापचीक्षुद्ररोगाधिमन्थकाभिधे । विदारीस्तनरोगेषु गात्राणां सादगौरवे ॥ १२४ ॥
रक्ताभिष्यन्दतन्द्रार्था पूतिघ्राणस्य दाहके । यकृत्प्लीहविसर्पेषु विद्रधौ पिडकोद्गमे ॥ १२५ ॥
कर्णौष्ठघ्राणवक्त्राणां पाके दाहे शिरोरुजि । उपदंशे रक्तपित्ते रक्तस्रावः प्रशस्यते ॥ १२६ ॥
एषु रोगेषु शृङ्गैर्वा जलौकाऽलाबुकैरपि । अथ वाऽपि शिरामोक्षैः कारयेद्रक्तपातनम् ॥ १२७ ॥

